पृथिव्यादीनां लोकानां वृद्ध्यर्थं वृद्धिः पुष्टिः बाहुल्यं वा ब्राह्मणादिचतुर्वर्णेषु सत्सु चतुर्णां लोकानां ब्राह्मणादीन्वर्णान्निरवर्तयत्। निर्वर्तितवानसृजत्।...॥ मे० ॥

अग्नौ प्रास्तेति वक्ष्यमाणन्यायेन पृथिव्यादिलोकबाहुल्यार्थं मुखादिभ्यो यथाक्रमं ब्राह्मणाद्यान्दैव्या शक्त्या निर्मितवान्। तथा च ब्राह्मणो ऽस्य मुखमासीदित्यादि लिङ्गम्॥ गो० ॥

मुखादितः मुखेन होमादिना ब्राह्मणम्।...वर्णैर्लोकरक्षणसंवर्धनार्थम् ॥ ना० ॥

विवृद्ध्यर्थं स्वस्वधर्मानुष्ठानेन विविधप्रकारवृद्ध्यर्थं निरवर्तयन्मुखादिभ्यो ब्राह्मणादिचतुष्टयं जनितवान्॥ रा० ॥

लोकाना प्रजाना विवृद्ध्यर्थं बाहुल्यार्थं निरवर्तयत् सृष्टवान्। प्रभुरित्यनुवर्तते। अथ सर्वभूतानां सृष्टिमारभते॥ न० ॥ ३१ ॥

---

एषा सृष्टिः साक्षात्परस्य पुरुषस्य। इयं तु ब्रह्मणस्तस्यैवेत्यन्ये। यत्तदन्तरण्डं समुद्भूतं शरीरं तद्द्विधा कृत्वार्धेन पुरुषो ऽभवत्पुमान्संपन्नः शुक्रसेकसमर्थ। अर्धेन नारी गौरी स्वरंभ्या। अथवा पृथगेव तां निर्मितवान्। तां निर्माय तस्यां मैथुनेन धर्मेण विराडिति यस्य नाम प्रसिद्धं जनितवान्। तदुच्यते। प्रजापतिः स्वां दुहितरमगच्छत्। इदमपि जायापत्योः शरीरमात्रभेदात्सर्वत्र कार्येष्वविभागात्तदालम्बनं द्वैधंकारवचनम्॥ मे० ॥

स ब्रह्मा स्वशरीरं द्विभागं कृत्वा एकेनार्धेन पुमान् संपन्नो ऽपरेण स्त्री। तस्यां सकाशाद्विराजाख्यं पुरुषं सृष्टवान्॥ गो० ॥

संप्रति मन्वादिद्वारकमैथुनजां सृष्टिमाह द्विधेति नवभिः।...॥ रा० ॥३२॥

---

स विराट् तपस्तप्त्वा यं पुरुषमसृजत्तं मां वित्त जानीध्वम्। एवं स्मृतिपरंपरया नात्र वः किंचिदविदितं मम वक्तव्यमस्ति। जन्मशुद्धिमात्मन आचष्टे। अस्य सर्वस्य स्रष्टारमनेनैश्वर्यशक्तिमाह।. ॥ मे० ॥

सो ऽनन्तरोक्तो विराट् तपः कृत्वा यं स्वयं सृष्टवान्तं मां जानीत । एतस्य सर्वस्योत्पादयितारं हे द्विजश्रेष्ठतमाः ॥ गो० ॥

तपस्तप्त्वेति स्वयमसृजदित्यन्वयः ।...अस्य सकलस्य परंपरया च स्रष्टारम् ॥ ना० ॥

यं मनुं तमेव मां वित्त जानीत स्रष्टारं तेषां मरीच्यादीनां स्रष्टृदेहाव-च्छिन्नम् ॥ रा० ॥

न ब्रह्माणमपेक्षितवानीत्युक्तं स्वयमिति । न स्त्रियमपेक्षितवानित्युक्तं पुरुष इति ॥ न० ॥ ३३ ॥

---

अहमसृजमुत्पादितवान् । दश प्रजानां पतीन्महर्षीनादितः सुदुश्चरं तपः कृत्वा सुदुःखेन तपश्चर्येते । अतिपीडाकरं बहुकालं च तानिदानीं महर्षीन्नामतो निदर्शयति ॥ मे० ॥

अहं प्रजाः स्रष्टुमिच्छंस्तपः सुदुष्करं कृत्वा प्रजापतीन्महर्षीन्दश प्रथमतः सृष्टवान् । आह तांश्च ॥ गो० ॥

महर्षीन्प्रजानां पतीन्दशासृजमित्यन्वयः । आदितः आदौ ॥ रा० ॥ ३४ ॥ ३५ ॥

---

एते महर्षयः सप्तान्यानमनूनसृजन् । अधिकारशब्दो ऽयं मनुरिति मन्वन्तरे यस्य प्रजासर्गोपस्थितौ वाधिकार उक्तेन प्रकारेण स मनुरित्युच्यते । अमितौजस इति चैक एवार्थः । एकं प्रथमान्तं स्रष्टृविशेषणम् । द्वितीयान्तं स्रष्टव्यानां मन्वादीनां विशेषणम् । ननु देवा ब्रह्मणैव सृष्टाः । सत्यं न सर्वाः । अपरिमिता हि देवसंघाताः । देवनिकाया हि देवस्थानानि स्वर्गलोकब्रह्मलोकादीनि ॥ मे० ॥

एते दश बहुतेजस्का अन्यान्सप्त मनून्सृष्टवन्तः । तथा देवान्देवनिकायांस्तान्महर्षींश्चापरिमिततेजस्कान् । एषां सर्वेषां मनूनां मन्वन्तरे एकैकस्य सर्गाद्यधिकारः ॥ गो० ॥

प्रजापतिसर्गद्वारा पारंपर्येण सप्तान्यान्प्रजापतीन्मनून् ।...देवान्स्वस्था-दींस्तेषां निकायान्निमानानीति केचित् । नितरां कायो येषु तानि-त्यन्ये ॥ ना० ॥

एते मरीच्यादयो मनून्मन्वन्तराधिपान् सावर्णिप्रभृतीन् ।...देवनिका-यान्देवस्थलानि । देवभृत्यान्वा ।...॥ रा० ॥

...देवनिकायान्देवगणान्मरुद्गणादीन् ॥ न० ॥ ३६ ॥

---

यक्षादीनां स्वरूपभेदश्चेतिहासादिप्रमाणक एव न प्रत्यक्षादीनामन्यत-मेन प्रमाणेन परिच्छिद्यते । तत्र वैश्रवणानुचरा यक्षाः । रक्षांसि विभी-षणादयः । तेभ्यः क्रूरतराः पिशाचाः । अशुचिमरुदेशादिवासिनो निकृष्टा यक्षराक्षसेभ्यः । हिंस्रा सर्व एव । छद्मना केनचित्प्राणिनां जीवमाकर्षन्ति । अदृष्टया शक्त्या वार्धींश्च जनयन्ति । इत्यैतिहासिका मन्त्रा वादिनश्च । गन्धर्वा देवानुचरा गीतनृत्यप्रधानाः । अप्सरसो देवगणिका उर्वश्याद्याः । असुरा देवशत्रवो वृत्तविरोचनहिरण्याक्षप्रभृतयः । नागा वासुकितक्षा-दयः । सर्पाः प्रसिद्धाः । सुपर्णाः पक्षिविशेषा गरुत्मत्प्रभृतयः । पितरः सोमपाज्यपादिनामानः स्वस्थाने देववद्वर्तन्ते । तेषां गणमसृजत् ॥ मे० ॥

यक्षा वैश्रवणा मताः । रक्षांसि रावणादीनि । पिशाचा मरुभूम्यादि-वासिनः प्राणिविशेषाः । गन्धर्वाश्चित्रसेनादयः । अप्सरसो मेनकाद्याः । असुरा विरोचनादयः । नागास्तक्षादयः । सर्पा अहयः । सुपर्णा गरुत्मन्तः । पितृणां सोमपादीनां स्वस्थानसमूहं सृजन्निति निवर्तते । एवमुत्तरत्रापि ॥ गो० ॥

यक्षा माणिभद्रादयः । रक्षांसि दैत्यजातिविशेषाः । क्रव्यादाः ।... नामानिति नागा नाभेरूर्ध्वं नराकाराः अधः सर्पाकृतयः ।...पितृणां गणा-नग्निष्वात्तान् ॥ ना० ॥

यक्षा वैश्रवणादयः । रक्षांसि रावणादयः । पिशाचाः पतिनरमांसा-शिनः ...॥ रा० ॥ ३७ ॥

---

मेघोदरदृश्यं मध्यमं ज्योतिर्विद्युदुच्यते। यस्यास्तडित्सौदामनीत्यादयः पर्याया विशेषाश्रयाः। अशनिः शिलाभूता हिमकणिकाः स्थूलदृश्यास्च वर्षधारादिवत्पतन्त्यो वेगवत्प्रेरिताः सस्यादिविनाशिन्य उच्यन्ते। मेघा अम्भोदकमरुज्ज्योतिःसंघाताः। अंतरिक्षे रोहिताकारमन्तरिक्षे नीललोहितरूपं कदाचिद्दृश्यते आदित्यमण्डलग्रं कदाचित्कदाचित्प्रदेशान्तरेऽपि। तस्यैव विशेष इन्द्रधनुः वक्रत्वं धनुराकारताधिकास्य। उल्काः संध्याप्रदेशादौ विशारिप्रभाद्युत्पाते दिक्षु पतन्ति यानि ज्योतीषि दृश्यन्ते। निर्घातः भूम्यन्तरिक्षोत्पातशब्दः। केतव उत्पाते दृश्यमानानि शिखावन्ति ज्योतींषि प्रसिद्धानि। अन्यान्यपि च ध्रुवागस्त्यारुंधतीप्रभृतीनि नानाप्रकाराणि ॥ मे० ॥

रोहितं शस्त्रोत्पात इति प्रसिद्धम्। नानावर्णं धनूरूपमिन्द्रधनुः। उल्का रेखाकारमन्तरिक्षाद्यज्ज्योतिः कदाचिन्नाभ्यादौ दृश्यते। निर्घातः क्षित्यन्तरित उत्पातध्वनिः। केतवो दण्डाद्याकाराणि ज्योतींषि।...॥ गो० ॥

विद्युतो विद्युदधिष्ठात्रीर्देवताः...ज्योतींषि नक्षत्रादीनि। उच्चावचानि नानाभेदानि ॥ ना० ॥

...निर्घातो ऽन्तरिक्ष उत्पातध्वनिः। केतवः शिखावन्ति ज्योतींषि। उच्चावचानि ग्रहनक्षत्रताराः ॥ रा० ॥

ऋजुदीर्घमिन्द्रायुधं रोहितम्। निर्घातः पवनः।...केतून्सपुच्छनक्षत्राणि ॥ न० ॥ ३८ ॥

---

अश्वमुखाः प्राणिनो हिमवदादिपर्वतेषु भवन्ति ते किंनराः। वानरा मर्कटमुखाः पुरुषविग्रहाः। विहंगमाः पक्षिणः। अजाविकोष्ट्रगर्दभादयः पशवः। मृगा रुरुपृषदादयः। व्याला सिंहव्याघ्रादयः। द्वे दन्तपंक्ती उत्तराधरे येषां भवतस्ते उभयतोदतः ॥ मे० ॥

किंचिन्नरशरीरा अश्वमुखाः। अन्ये तु विपरीताः। विहंगमाः पक्षिणः। पशवो गवाद्याः। मनुष्याणां पशुत्वे ऽपि प्राधान्यात्पृथग्ग्रहणम्। व्यालाः सिंहाद्या उत्तराधरदन्तयुक्ताः ॥ गो० ॥

पशून्ग्राम्यारण्यान् । मृगानरण्यचरान्वायसादीन् । व्यालान् हिंस्रान् । ... ॥ ना० ॥

किंनरानश्वमुखनराकारान् ।...पशून्गवादीन् । मृगान्हरिणादीन् । ग्राम्यारण्यभेदेन वा ।...॥ रा० ॥

अधरोत्तरभागयोर्दन्ता एषां ते उभयतोदतो गर्दभादयः ॥न०॥३९॥

---

कृमयो ऽत्यन्तसूक्ष्माः प्राणिनः । कीटास्तेभ्य ईषत्स्थूला भूमिचराः । पतंगाः शलभादयः । स्थावरं वृक्षपर्वतादि । एवंविधं नानाप्रकारम् । क्षुद्रजन्तव इत्येकवद्भावः ॥ मे० ॥

कृमयो भूमिशरणाः । कीटाः कृमिभ्यः किंचित्स्थूलाः । पतंगाः शलभाः । स्थावरं वृक्षवनस्पति । आदिभेदेन नानाप्रकारम् ॥ गो० ॥

कृमयो मलादिसंभवाः क्षुद्रजन्तवः । कीटा योनिजाः ।...स्थावरं वृक्षादि ॥ ना० ॥

क्रिमयः अपादाः सपादाः । कीटाः पतंगाः शलभादयः । एतेषामेकवद्भावः क्षुद्रजन्तुत्वज्ञापनार्थः ॥ रा० ॥ ४० ॥

---

एवमिति प्रक्रान्तप्रकारपरामर्शः । एतैर्महात्मभिर्मरीच्यात्मभिरिदं स्थावरजङ्गमं सृष्टम् । यथा कर्म यस्य जन्मान्तरे यादृशं कर्म तदपेक्षम् । यस्या जातौ यस्य युक्तमुत्पन्नं कर्मवशात्स तस्यामेवोत्पादितः मन्नियोगान्मदाज्ञया तपोयोगान्महत्कृत्वा तपः यावत्किंचिन्महदैश्वर्यं तत्सर्वं तपसा प्राप्यमित्येतदनेनाह ॥ मे० ॥

अनेन प्रकारेण एतैर्मुनिभिर्मदाज्ञया सृज्यमानप्राणिगतकर्मानुरूपेणोरं तपोबलात्सृष्टम् ॥ गो० ॥

जङ्गमसृष्टिमुपसंहरन्स्थावरसृष्टिं ब्रुवाणो जरायुजस्वेदजान्प्रतियोगितया भिनत्ति । एवमिति दशभिः ।...॥ रा० ॥ ४१ ॥

---

येषां भूतानां याद्दशं कर्म स्वभावात्ताद्दशं वा तद्वत्तथैव कीर्तितं मया। इदानीं जन्मक्रमयोगमभिधास्यामि। क्व पुनः कर्म कीर्तितम्। यच्चेदं यच्चरक्ष इत्यादि नामनिर्देशो न कर्मनिर्देशः। उच्यते नामनिर्देशादेव। नामनिर्देशादेव कर्मावगतिः कर्मनिमित्तत्वादेषां नामप्रतिलम्भस्य।...॥मे०॥

येषां भूतानां यथारूपं कर्म तत्तथैवेह शास्त्रे कीर्तितमेव युष्माकं यावता नामनिर्देशादेव देवनाद्द्योतनाद्द्युतिस्थानाद्वा देवाः। यक्ष-णाद्यक्षाः। इत्येवमादिकर्मप्रतिपत्तिः। इदानीं येन क्रमसंबन्धेन जायन्ते तं वक्ष्यामीति केचित्। अथवा येषां याद्दशं कर्मेह संसारे ऽस्मिन्पूर्वैरपि कथितं यथौषध्यः फलपाकान्ता इत्येवमादिवत्तथैवाभिधास्यामि। यथा क्रमयोगं वेति॥ गो०॥

येषां त्विति यज्जातीयस्य यदध्यापनादि कर्म कीर्तितम्।...क्रमयोगं येन क्रमेण यज्जायते येन च जराय्वादिना युक्तं यज्जायते तच्चाभिधा-स्यामि॥ ना०॥

एषां प्राणिनां जन्मनिमित्तं याद्दशं कर्म स्थावराणां कायिकं निषिद्धा-चरणं पक्ष्यादीनां वाचिकमेषां भूतानां याद्दशं यत्प्रकारं पूर्वकर्म तथा तत्प्रकारफलमिह दृष्टं च भवतीति वः कीर्तितम्। इदानीं जन्मनि क्रम-योगं चाभिधास्यामि। जन्मतारतम्यं च क्रमहेतुकर्माभिधास्यामीत्यर्थः। तच्च तारतम्यं पशव इत्यादिना श्लोकषट्केन वक्ष्यमाणजरायुजाण्डजस्वेद-जोद्भिज्जलक्षणमित्यनुसंधातव्यम्॥ न०॥ ४२॥

---

एते जरायुजाः। दन्तशब्दः समानार्थो दन्तशब्दो ऽन्यो ऽस्तीति उभय-तोदत इति प्रथमा बहुवचने रूपं युज्यते॥ मे०॥

जरायुर्गर्भसंपातस्तत्रादौ संभवन्ति। ततस्तन्मुक्ता जायन्ते॥ गो०॥

एते जरायुजा जरायुसहिता जायन्ते॥ ना०॥ ४३॥

---

नक्राः शिशुमारादयः। कच्छपः कूर्मः। यानि चैवंप्रकाराणि कृकला-सादीनि स्थलजानि। एवंरूपाणि औदकानि जलजानि शङ्खादीनि ॥ मे० ॥

अण्ड आदौ संभवन्ति ततो जायन्ते। नक्रः शिशुमाराख्यः प्राणी। कच्छपः कूर्मः। स्थलजानि कृकलासादीनि। औदकानि च शङ्खादीनि ॥ ॥ गो० ॥

औदकानि मण्डूकादीनि। एतान्यण्डयुक्तानि जायन्त इत्यर्थः ॥ ना० ॥

...औदकानि उदके जातानि ॥ रा० ॥ ४४ ॥

---

स्वेदः पार्थिवानां द्रव्याणां अग्न्यादित्यादितापसंबन्धादतः स्वेदस्ततो जायते दंशकादि। अन्यदपि यदीदृशमत्यन्तसूक्ष्मं पिपीलिकादि यदूष्मणा उपजायते। उष्मा स्वेद एव। तद्धेतुर्वातपः। उपजायन्त इति वा पाठो ये चान्ये केचिदीदृशा इति पठितव्यम् ॥ मे० ॥

स्वेदः पार्थिद्रव्याणामतः स्वेदः। अन्यदपि यद्दंशादिसदृशं पिपीलिकादि तदुष्मणः स्वेदादेव जायते ॥ गो० ॥

उष्मणा ये जायन्ते कृमयः। यच्चान्यदण्डजादि जातौ ईदृशं वृश्चि-काद्यपि ॥ ना० ॥

...उष्मणः स्वेदहेतुनः ॥ रा० ॥ ४५ ॥

---

उद्भेदनमुद्भित्। भावे क्विप्। ततो जायन्त इत्युद्भिज्जाः। ऊर्ध्वं भूमिं च भित्त्वा विदार्य जायन्ते प्ररोहन्ति मूलस्कन्धादिना दृढीभवन्ति। तथा ओषध्यः ओषधय इति युक्तम्। ईकारः कृतिकारादिति। छान्दसो वा। इदं तासां स्वाभाविकं कर्म। पाकान्ताः फलपाको ऽन्तो नाश आसा-मिति। पक्वे फले व्रीह्यादयो नश्यन्ति। बहुना च पुष्पफलेनोपगता युक्ता भवन्ति। ओषधीनां वृक्षाणां च यथासंभवमेतद्विशेषणम् ॥ मे० ॥

ऊर्ध्वं भुवं भित्त्वा वृक्षा जायन्ते। ते तु केचिद्बीजादेव जायन्ते। अन्ये तु बीजात्काराच्च। शाखैव हि भूमौ रोपिता वृक्षीभवन्ति। अधुना येषां तु

यादृशं कर्मेति यदुक्तं तद्दर्शयति। ओषध्य इति ओषधीनां व्रीह्यादीनां फलपाकेनैवान्तः। तेन ताः पुष्प्यन्ति बहुपुष्पफलमुपगच्छन्ति बहुना संयुक्ता भवन्ति ॥ गो० ॥

उद्भिज्जा ऊर्ध्वं भिनत्तीत्युद्भित्...उद्भिज्जातास्तरवः भूमिमुद्भिद्य जातास्तृणवृक्षादयः।...॥ रा० ॥

काण्डप्ररोहिणः केतक्याद्याः। फलपाकान्ताः कदल्यादयः। बहुपुष्पफलोपगा निष्पावकादयः ॥ न० ॥ ४६ ॥

---

विना पुष्पेण फलं जायते येषां ते वनस्पतयः कथ्यन्ते। न वृक्षाः। पुष्पिणः फलिनश्च वृक्षा उभययोगात्। क्वचिद्वनस्पतयो वृक्षा अपि उच्यन्ते। वृक्षाश्च वनस्पतयोऽपि।...॥ मे० ॥

वनस्पतीनां पुष्पमन्तरेणैव फलानि भवन्ति। वृक्षाः पुनः पुष्पफलेनोभयेनापि युक्ता भवन्ति ॥ गो० ॥

उभयतः उभयेन पुष्पफलाभ्याम् ॥ ना० ॥

अपुष्पा पुष्पं विनैव फलवन्तः। पुष्पिणः पुष्पपूर्वकाः फलिनः। ते उभयेऽपि वृक्षाः ॥ रा० ॥

पुष्पिण फलिनः पुष्पेण फलग्राहिणः। उभयतः उभयेनेत्यर्थः। उभयथेति साधुः पाठः ॥ न० ॥ ४७ ॥

---

याः संहता भूमेर्वक्रा एकमूला अनेकमूलाश्च लता उत्तिष्ठन्ति। न च वृद्धिं महतीं प्राप्नुवन्ति। तासां संघातो गुच्छगुल्मशब्दवाच्यः। तृणपत्त्रकादि तयोस्तु भेदः। पुष्पवदपुष्पकृतो अन्या वा तृणजातयः। कुशकाशादलशङ्खपुष्पीप्रभृतयः। प्रतानाः दीर्घा भूमिगतास्तृणप्ररोहाः। वल्ल्यो व्रतत्यः। भूमेरुत्पद्य वृक्षमन्यं वा कंचित्परिवेष्ट्योर्ध्वमारोहन्ति। सर्वमेतद्बीजकाण्डरुहम् ॥ मे० ॥

मूलत एव येषां लतावृन्दं भवति न तु काण्डानि ते गुच्छाः मल्लिकाद्याः। तृणजातयो दूर्वाद्याः। प्रतानास्तन्तुरूपाः।...॥ गो॰ ॥

प्रतानास्त्वेव वल्ल्यश्च वीरुधः परिकीर्तिताः। इत्युत्तरार्धपाठः।...॥ ना॰ ॥

...गुल्मा एकमूलाः शरादयः। प्रतानाः कूष्माण्डालाबुप्रभृतयः।...॥ रा॰ ॥

गुच्छगुल्मं स्तम्बयुक्तं गुल्मशेफालिकादि। प्रताना मल्लिकादयः। वल्ल्याकारा वल्ल्यादयः।...॥ न॰ ॥ ४८ ॥

---

कर्म अधर्माख्यं हेतुर्यस्य। तमसा वेष्टिता व्याप्ताः। बहुरूपेण विचित्रदुःखानुभवनिमित्तेन। यद्यपि सर्वं त्रिगुणं तथाप्येषामुद्रिक्ते सत्त्वरजसी। अतस्तमोबाहुल्यान्नित्यं निर्वेददुःखात्मिकादियुक्ताधर्मफलमनुभवन्तः सुचिरमासते। सत्त्वस्यापि तत्र भावात्। कस्यांचिदवस्थायां सुखलेशमपि भुञ्जते। तदाह सुखदुःखसमन्विता इति। अन्तःसंज्ञानं संज्ञा बुद्धिस्तल्लिंगस्य बहिर्विहारव्याहारादेः कार्यस्य चेष्टारूपस्याभावादन्तःसंज्ञा उच्यन्ते॥...॥ मे॰ ॥

सत्त्वरजस्तमआख्या गुणाः। तत्रैते वृक्षादयः पदार्था विविधदुःखोत्पादनरूपेण प्राग्जन्मार्जितदुष्कर्महेतुना तमसा व्याप्ता भवन्ति। यद्यपि सर्व एव कश्चिदन्तरे चेतयते। तथाप्येते संज्ञाकार्यस्य व्यवहारादेर्बहिरभावादन्तःसंज्ञा उच्यन्ते। सत्त्वरजोलेशस्यापि सद्भावात्ते दुःखान्विता अपि भवन्ति ॥ गो॰ ॥

तमसा गुणेन बहुरूपेण नानाविधेनाल्पबहुत्वादिना कर्महेतुना अधर्मसंभवेन।...॥ ना॰ ॥

कर्महेतुना कायिकनिषिद्धाचरणजेन हेतुना शरीरजैः कर्मदोषैः याति स्थावरतां नर इति वक्ष्यमाणत्वात्। अतो बहुरूपेण स्थावरसृष्टीनामनन्तत्वात्।...॥ रा॰ ॥

एते स्थावराः। सृष्टिमुपसंहरति ॥ न॰ ॥ ४९ ॥

---

एषामन्तोऽवसानं ब्रह्मा गतिर्यासां गतीनां ता एतदन्ताः कृतकर्मफलो-पभोगार्थमात्मनस्तच्छरीरसंबन्धो गतिरुच्यते । अस्याः स्थावरात्मिकाया गतेरन्या निकृष्टा दुःखबहुला गतिर्नास्ति ब्रह्मगतेस्त्वन्या आद्या उत्तमा गतिरानन्दरूपा नास्ति । एता गतयः शुभाशुभैः कर्मभिर्धर्माधर्माख्यैः प्राप्यन्ते । परब्रह्मप्राप्तिस्तु मोक्षलक्षणा केवलानन्दरूपा ज्ञानात् । ज्ञान-कर्मसमुच्चयादिति वक्ष्यामः । भूतसंसारे भूतानां क्षेत्रज्ञानां संसारे जन्म-मरणप्रबन्धे नात्यन्तशागमने । घोरे प्रमादात्मस्खलना भीषणे । इष्टवियो-गानिष्टयोगात्मत्वात् सततं सर्वकालं गमनशीले विनाशिन्यसारेऽपि । नित्यं घोरे न कदाचिद्घोरे देवादिगतिष्वपि सुचिरं स्थित्वा मर्तव्यमिति नित्यं घोरस्तदनेन धर्माधर्मयोर्विवेकज्ञानमित्यध्येतव्यम् ॥ मे० ॥

स्थावरावसाना ब्रह्मप्रधानाः संसारोत्पत्तयो नित्यं घोरे भीषणेऽस्मिन्भू-तानां क्षेत्रज्ञानां संसारे बहुशः शरीरादानत्यागलक्षणाः सर्वदा नश्वरा उक्ताः । एवं सृष्टिं प्रदेश्य इदानीं प्रलयं दर्शयितुमाह ॥ गो० ॥

भूतानां प्राणिनां संसारे नित्ये अविच्छिन्नप्रवाहे ।...नित्यमिति पाठे नित्यं घोर इत्यन्वयः ॥ ना० ॥

भूतसंसारे भूतः क्षेत्रज्ञः तस्य संसारे प्रवाहरूपेण नित्यं सततयायिनि ...॥ रा० ॥

गतयः तत्तत्कर्मफलानुरूपदेहप्राप्तयः । एतदन्ताः स्थावरान्ताः ।... ॥ न० ॥ ५० ॥

---

एवं किंचित्साक्षात्किंचित्प्रजापतिनियोगेन स भगवान्सर्वमिदं जगत्सृष्ट्वा उत्पाद्य मां च जगत्स्थितौ नियोज्य । अचिन्त्य आश्चर्यरूपो महान्प्रभावः पराक्रमः सर्वविषया शक्तिर्यस्य स स्रष्टा अन्तर्दधे अन्तर्धानं कृतवान् । इच्छागृहीतशरीरं योगशक्त्या उत्सृज्य पुनरप्रकाशः संवृत्तः । आत्म नीति । यथान्ये भावाः प्रकृतावन्तर्धीयन्ते । एवं सोऽन्यत्रेत्येवं न । कि तर्ह्यात्मन्येव परेऽनेन । न हि तस्यान्या प्रकृतिरस्ति यत्रान्तर्धीयते । सर्व-

भूतानां तत्प्रवृत्तित्वात्। जगत्सर्वव्यापारनिवृत्तिर्वा अन्तर्धानम्। भूयः कालं कालेन पीडयन्।...प्रलयकालं सर्गस्थितिकालेन विनाशयन्। भूयः पुनरित्यर्थः। वक्ष्यत्यसंख्याः सर्गसंहारा इति ॥ प० ॥

अनेन प्रकारेण इदं मां च सृष्ट्वा स प्रजापतिरचिन्त्यशक्तिः पुनरात्मन्येवान्तर्धानं कृतवान्। शरीरत्यागेन सृष्टिकालं प्रलयकालेन विनाशयन् प्राणिनां कर्मवशतः स्वेच्छया च पुनः पुनः सर्गसंहारौ करोतीत्यर्थः ॥ गो० ॥

भूयः पुनः पुनः। कालं सृष्टिकालम्। प्रलयकालेन पीडयन्। तत्प्रपञ्चयति ॥ ना० ॥

आत्मनि हिरण्यगर्भे अन्तर्दधे तिरोहितोऽभूत्। भूय इति प्रवाहनादित्वसूचनार्थम्।... ॥ रा० ॥

अचिन्त्यपराक्रमः अप्रमेयशक्तिः। स इति परमाप्रकृतस्य भगवतः परामर्शः। न तु तत्सृष्टस्य हिरण्यगर्भस्य अचिन्त्यपराक्रम इति विशेषणेन। योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्वभूतमयोऽचिन्त्य इत्यचिन्त्यशब्देन भगवतः प्रत्यभिज्ञाप्यमानत्वात्। एवं सृष्ट्वा कालं काले प्राणिनां कर्मानुरूपं न कस्यचिद्दर्शितवानित्यर्थः। अथ स्थितिप्रलयकालावाह ॥ न० ॥ ॥ ५१ ॥

---

यदा स देवो जागर्ति यदि तदिच्छति इदं जगदुत्पद्यतामेतां स्थितिं च कालमियन्तं लभतामिति। तदा चेष्टते। मानसवाचिकभौतिकैर्व्यापारैरान्तरैर्बाह्यैश्च श्वासप्रश्वासाहारविहारकृषियागादिभिर्युक्तं भवति। यदा स्वपिति यदा निवृत्तेच्छो भवति जगत्सर्गस्थितिभ्यो तदा सर्वं निमीलति। प्रलयं प्राप्नोति। जागर्या स्वापश्च प्रजापतेरिच्छाप्रवृत्तिनिवृत्ती उच्येते। शान्तात्मत्वं भेदावस्थोपसंहारः ॥ मे० ॥

यदा स प्रजापतिरिच्छति तदेदं जगदुत्पत्त्यवस्थिती करोति। यदा तु नेच्छति शान्तात्मोपसंहृतव्यापारमनास्तदा इदं प्रलीयते अन्तरालप्रलयस्तदा भवति। .. ॥ गो० ॥

स्वपिति तदा विरमति । शान्तात्मा निवृत्तप्रयत्नः ।... ॥ ना० ॥

देवो द्योतनात्मकः । जागर्ति आकाशाद्याकारेण च विलसति शून्यदेहा-द्यभावात् ।... ॥ रा० ॥

स भगवान् जागर्ति देवत्वेन प्रसन्नत्वं कृतकृत्यो भवति चेष्टते । जीवति शान्तात्मा च कुर्वन्नपि स्वपिति योगेन निद्राति मीलति न चेष्टते ॥ न० ॥ ५२ ॥

---

पूर्वव्याख्यानश्लोको ऽयं विस्पष्टार्थः ।.. शरीरचेष्टानिवृत्तिरितेनोच्यते । मनश्च ग्लानिमृच्छति । एतेनान्तरव्यापारनिवृत्तिः । अतो बाह्यान्तरव्यापारनिवृत्त्या प्रलयः प्रतिपादितो भवति । ग्लानिर्निरुत्साहः ॥ मे० ॥

तस्मिन्निवृत्तिस्थे स्वस्थ उपसंहृतव्यापारमनस्के कर्मात्मिनश्शरीराः शरीरिणः क्षेत्रज्ञाः स्वकर्मभ्यः शरीरग्रहणादिभ्यो निवर्तन्ते मनश्च सर्वेन्द्रियरहितं निर्व्यापारं भवति । तदानीं महाप्रलयमाह ॥ गो० ॥

न केवलं कर्माणि न कुर्वन्ति मनो ऽपि तेषां वृत्तिशून्यं भवति ।.. ॥ ना० ॥

तस्मिन्हिरण्यगर्भे स्वस्थे स्वस्मिन्नात्मीये कारणे तिष्ठति सति स्वयं विराट् स्वपिति लीयते । स्वपतीति पाठे स्वस्थे हिरण्यगर्भे तस्मिन्स्वपति लीने विराजि सति... ॥ रा० ॥

ततः स्वस्थे आत्मस्थे जगद्व्यापारोपरते कर्मात्मानः अनुभविनः कर्मयुक्तात्मानः स्वकर्मभ्यः तदानीं भुज्यमानेभ्यः क्रियमाणेभ्यश्च मनश्च महत्तत्त्वं च जगदिति यावत् । कार्यत्वाज्जगतः ग्लानिं संकोचं प्रलयमिति यावत् । प्रलयकाले जीवाः कुत्र तिष्ठन्ति । भगवतश्च किं कृत्यमित्यपेक्षायामाह ॥ न० ॥ ५३ ॥

---

...एतदुक्तं यदा स्वपिति तदा निमीलयति । सर्वकालमिति । सुख-स्वपिति निर्वृत्तः । सुखरूपमेव परं ब्रह्म तस्य स्वापावस्थाया सुखमन्यत् दुःखम् । स्वापश्च तस्य यादृश स प्रागुक्त एव । निवृत्तिश्च तस्य मनः ...

... प्रधानविषयो वायं श्लोको वर्णनीयः । तदा प्रधानं स्वपिति यदा युगप त्सर्वाणि भूतानि तत्र प्रलीयन्ते । तदात्मनां कर्मक्षयतामापद्यन्ते । युगपद्या वन्ति त्रैलोक्योदरवर्तीनि स्वापश्च परिणामनिवृत्तिर्न पुनर्ज्ञानोपसंहृतिः, तस्य प्रधानस्य सुखं चोपचारतः अचेतनत्वादेव ॥ मे० ॥

तुल्यकालमेव पुनर्यस्मिन्परमेश्वरे सर्वभूतानि प्रलीयन्ते । तस्मिन्नेव काले अयं सर्वभूतात्मभूतो... सुखं स्वपिति सुखस्वप्नमनुभवति । तत्र सुखस्वप्ना- वस्था महाप्रलयश्च युगपदेव भवत इत्यर्थः । प्रलयप्रसङ्गेन क्षेत्रज्ञोत्क्रमणा- माह ॥ गो० ॥

युगपत्समकाले भुवनचतुष्टयं यदा लीयते तदा... ॥ ना० ॥

महाप्रलयमाह युगपदिति । यदा द्विपरार्धकाले युगपद्धिरण्यगर्भवि- राड्भ्यां सह पूर्वोक्तकर्मात्मानः संस्कारमात्रावशेषाः परब्रह्मणि प्रलीयन्ते तदायं सर्वभूतात्मा ईश्वरः सुखं स्वपिति निर्वृत्तः सुखं स्थानं निर्वृत्तः प्राप्तः । ... ॥ रा० ॥

सर्वकार्याणां निःशेषनाशो युगपच्छब्दे प्रयोग उक्तः । महात्मनि महाव- काशे लीयन्ते ।... ॥ नं० ॥ ५४ ॥

---

इदानीं संसारिणः पुरुषस्य मरणं देहान्तरप्राप्तिश्चाभ्यां श्लोकाभ्यां कथ्यते । तमो ज्ञाननिवृत्तिस्तां समाश्रित्य चिरं तिष्ठति ।... न च स्वं कुरुते कर्म श्वासप्रश्वासादिकं तदा मूर्तितः शरीरादुत्क्रामति गच्छति । ननु च सर्वगत आत्मा आकाशवद्विभुस्तस्य कीदृशी उत्क्रान्तिः । कर्मोपार्जितशरीरत्याग एवोत्क्रान्तिर्न पुनर्भूतस्य वार्थस्य देशाद्देशान्तरगमनम् । अथवा केश्चिदि- ष्यते । अस्त्यन्यदन्तराभवं शरीरं सूक्ष्मं तस्यैवमुत्क्रान्तिः । अन्येत्वन्तरा- भवो देहो नेष्यते । यथाह भगवान्व्यासः । अस्मिन्देहे व्यतीते तु देहमन्य- न्नराधिप । इन्द्रियाणि वसन्त्येव तस्मान्नास्त्यन्तराभवः । सांख्या अपि केचि- न्नैवान्तराभवमिच्छन्ति विंध्यावासिप्रभृतयः । को ऽयमन्तराभवो नाम- स्मिञ्छरीरे नष्टे मातृकुक्ष्यादिस्थान द्वितीयशरीरग्रहणार्थं यावत्तत्प्राप्तं ताव-

ञ्चिकपर्योगि शरीरमुपजायते सूक्ष्मं यस्य न क्वचित्संयोगो नाग्न्यादिदाहो महा भूते प्रतिबन्धः । अन्ये तु मूर्तिं परमात्मानमाहुः । सर्वात्मरूपः परमात्मा समुद्रस्थानीयः ततः प्रादुर्भवन्ति जीवाः । अविद्यावशाद्देहमुपयान्ति । महो दधेरिवोर्मयः । तस्य च ततो निष्क्रामतः पुर्यष्टकाख्य लिङ्गमभ्युपगम्यते । धर्माधर्मपूर्वकृतवशात्प्रत्येकस्य जीवस्य वासःस्थानीयं सूक्ष्मशरीरम् । यथा पुराणे उक्तम् । पुर्यष्टकेन लिङ्गेन प्राणाख्येन स युज्यते । तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन तु । ते च प्राणापानव्यानोदानसमानाः । पञ्चभूतेन्द्रियवर्गः । एवं कर्मेन्द्रियवर्गः । अष्टमं मन इत्येतत्पुर्यष्टकम् । तदस्य शरीरं न नश्यत्यमोक्षावस्थया तदुक्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ मे० ॥

असावात्मात्यन्तव्यामोहव्याप्तः सन्यदा सेन्द्रियो ऽप्यनल्पं कालमास्ते । इन्द्रियाणां शरीरविनाशे ऽप्यविनाशान्न च श्वासप्रश्वासादिकं कर्म कुरुते तदा शरीरं जहाति । किं शरीरान्तरनिरपेक्ष एवं मूर्तिं परित्यजतीत्याह ॥ गो० ॥

प्रलयप्रसङ्गेन मूर्छामत्यू अपि दर्शयति ।... सेन्द्रियो मनःप्रभृतीन्द्रियवानपि न स्वयं कर्म कुरुते तदा मूर्छितो भूतः ।... प्रदेशान्तरे तिष्ठति सेयं मूर्छाच्यते । मृतिमाह ॥ ना० ॥

प्रलयप्रसङ्गेन मरणमाह तम इति द्वाभ्याम् । अयं जीवात्मा तमो चैतन्यमाश्रित्य... ॥ रा० ॥

अयं भगवांस्तमो मूलप्रकृतिमाश्रित्य यदा चिरं यावत्प्रलयकाल तिष्ठति तदा सेन्द्रियो मूर्तिमान्भवति । जगदाकारेण स्फुरतीत्यर्थः ॥ अथ सृष्टिकालमाह ॥ न० ॥ ५५ ॥

---

अणव्यः सूक्ष्मा मात्रा अवयवा यस्य सो ऽयमणुमात्रिकः । पुर्यष्टकमन्तराभावदेहो वा । स्वभावत एव वा आत्मनः सूक्ष्माः । यथोक्तं स एष आत्मा अन्तर्हृदये ऽणीयानित्यादिबीजं शरीरोत्पत्तिकारणं स्थाणुदन्त्यादि-

अन्नफलितुन्दस्य वीरुधां जङ्गमं समाविशति अधितिष्ठति । यदाविशति तद भवति तदा तेन संसृष्टः प्राणादिभिस्तदा मूर्तिं विमुञ्चति आबध्नाति शरीरं गृह्णातीत्यर्थः । मे० ॥

यदा ऽणुप्रमाणः स्थावरबीजं जङ्गमबीजं चान्यदधितिष्ठति तदेदं शरीरं व्युत्क्रमति । संसृष्टः प्राणादिसंयुक्तो यथोक्तं बृहदारण्यके तमुत्क्रामन्तं प्राणो ऽनूत्क्रामति प्राणं तूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति ॥ गो० ॥

संसृष्टो लिङ्गदेहेन सहितः । स्थाणु स्थावरं चरिष्णु जङ्गमं च बीजं हेतुः ।... ॥ ना० ॥

तदा मरणकाले उत्क्रामति देहान्तरार्थं किंभूतः अणुमात्रिकः ।.. ॥ रा० ॥

बीजं तनुसंघातं समाविशति अनुप्रविशति । स्वरूपं स्वीयां गतिं विमुञ्चति जगरति जगत्स्फुरदाकारेण स्फुरतीत्यर्थः । प्रकरणार्थमुपसंहरति ॥ न० ॥ ५६ ॥

---

उपसंहारः पूर्वोक्तस्य । आत्मसंबन्धिभ्यां जाग्रत्स्वप्नाभ्यां इदं सर्वं चराचरं संजीवयति मारयति च जगत् । अव्ययो ऽविनाशी ॥ मे० ॥

स ब्रह्मानेन प्रकारेणात्मीयाभ्यां जाग्रत्स्वप्नाभ्यां जङ्गमस्थावरम... जीवयति मारयति चानश्वरः ॥ गो० ॥

स्वेन जाग्रता संजीवयति स्वीयेन स्वप्नेन मारयति चरमचरं च । अजस्रं सर्वेभ्यः पूर्वम् ॥ ना० ॥

प्रकृतमनुसरति एवमिति ।... स्वप्नो ऽत्र सुषुप्तिः । स्वपितीत्युक्तेः ॥ रा० ॥ ५७ ॥

---

इह शास्त्रशब्देन स्मार्तो विधिप्रतिषेधसमूह उच्यते । न तु ग्रन्थः । तस्य मनुना कृतत्वात्तथा हि मानव इति व्यपदेशो ऽस्य इतरथा वै हिरण्यगर्भ इति व्यपदेशो वा । केचित्तु हिरण्यगर्भेणापि कृते ग्रन्थे मनुना बहुना प्रकाशितत्वात्तेन व्यपदेशो ऽत्र युज्यत एव । यथा हिमवति प्रथममुपलभ्य

माना गङ्गा अन्यतो ऽप्युत्पन्ना हैमवतीति व्यपदिश्यते। यथा च नित्यदर्श-नात्काठकं प्रवचनं कठेन व्यपदिश्यते।... नारदश्च स्मरति शतसाहस्रो ऽयं ग्रन्थः प्रजापतिना कृतः। स च मन्वादिभिः क्रमेण संक्षिप्त इति। अतो-ऽन्यकृतत्वे ऽपि मानवव्यपदेशो न विरुद्धः। शास्त्रशब्देन ग्रन्थाभिधानमपि शासनरूपार्थप्रतिपादकत्वादुक्तमेव। मामेव ग्राहयामास। अहं तेनाध्या पित इत्यर्थः। स्वयमादितो विधिवदित्येभिः पदैरागमस्यातिभंश उच्यते। ग्रन्थकारेण स्वकृतो ग्रन्थो यः स्वयमध्याप्यते प्रथमं तत्र मात्रापि न हीयते। अन्यस्य हि तस्मादधिगतवतो ऽन्यमध्यापयतो न तद्ग्रन्थाविनाशे यत्नो भवति॥ मे०॥

स ब्रह्मेदं शास्त्रमिमं ग्रन्थं कृत्वा शास्त्रस्येदं कर्तव्यमिदं नेत्येवं स्वरूपानि-त्यत्वात् मामेवादौ यत्नतो ऽध्यापितवान्। ततो मरीच्यादीन्मुनीनहमध्यापि-तवान्॥ गो०॥

इदं स्मार्तधर्माधर्मोपादानहानात्मकं ग्रन्थं शास्त्रम्॥... ॥ ना०॥

शास्त्रस्य मनसि विपरिवर्तमानत्वादिदमिति परामर्शो युज्यते॥न०॥५८

---

एतच्छास्त्रं वो युष्माकमयं भृगुरशेषतः सर्वं श्रावयिष्यति। कर्णपथं नेष्यति। अध्यापयिष्यति व्याख्यास्यति च एतत्। शास्त्रस्य एतदा प्रत्यव-मर्शः। एतच्छास्त्रमेष मुनिरखिलमशेषं ततो मत्सकाशात् अधिजगे अधि-गतवान् ज्ञातवान्।...॥ मे०॥

अयं भृगुरेतच्छास्त्रं युष्माकमशेषं श्रावयिष्यति यस्मादेतत्सर्वं मत्सकाशा देषो ऽखिलं कृत्वाधिगतवान्। मत्तो मनोः अधिजगे ज्ञातवान्। सर्व मखिलमेतेनाक्षरमात्रमप्यस्य न त्याज्यमित्यर्थः॥ रा०॥

अखिलं निरवशेषम्॥ न०॥ ५९॥

---

स महर्षिर्भृगुस्तेन मनुना तथोक्तः एष वः श्रावयिष्यतीति नियुक्तः ततो

ऽनन्तरं तान्दषीनब्रवीत्। श्रूयतामिति प्रीतात्मा अमे कशिष्यमं निभानवमात्र नियुक्त इति बहुमानेन प्रीतात्मत्वं प्रवक्तृत्वयोग्यतया आज्ञापनमो नाहमनेन संभावित इत्यात्मनि भृगोर्बहुमानः ॥ मे० ॥

स भृगुर्मनुना तथोक्तो ऽयं श्रावयिष्यतीत्यनेन प्रकारेणार्थादुक्तो न तु त्वं श्रावयेति। ततो ऽनन्तरं स गुरुसंभावनया प्रीतात्मा तान्दषीन्। श्रूयतामित्युवाच ॥ गो० ॥

अध्यापने ऽपि गुर्वाज्ञावश्यकतामाह तत इति।...॥ रा० ॥ ६० ॥

---

उपाध्यायो धर्मान् एष्टो जगदुत्पत्त्यादि वर्णितवान्। तथैव शिष्यो ऽपि तन्नियुक्तस्तच्छेषमेव वर्णयितुमारब्धः। अस्येति साक्षात्कारेण मनुं प्रत्यवमृशति। अस्मादुपाध्यायस्य स्वायंभुव इति ख्यातस्य षडन्ये अपरे मनवो एकवंश्या एकस्मिन्वंशे कुले जाताः। सर्वे हि साक्षाद्ब्रह्मणा सृष्टा इत्येक कुलसंभवाद्वंश्या इत्युच्यन्ते। अथवा एकस्मिन्कार्ये ऽधिकृता वंश्या उच्यन्ते। एकस्मिन् व्यवहारे धर्मान्वये प्राणिनां वंश्यव्यवहारो भवति। द्वौ मुनी व्याकरणस्य वंश्यौ तेषा चैकं धर्मं दर्शयति। सृष्टवन्तः प्रजाः स्वाः स्वा इति मन्वन्तरे यस्य मनोरधिकारः स एव प्रजाना पूर्वमन्वन्तरविनष्टाना स्रष्टा पालयिता च। अतो येन याः प्रजाः सृज्यन्ते तास्तस्य स्वा भवन्ति ॥ मे० ॥

अस्योक्तप्रकारेण स्वयंभूनप्तुर्मनोः षडन्ये मनवः काले काले सृष्ट्यादावधिकृता वंश्यास्तत्कुलोद्भूतास्तदेककार्याः स्वाः स्वाः प्रजा उत्पादितवन्तः ॥ गो० ॥

अस्य वंशभवा अन्ये षण्मनवो ऽपि... ॥ ना० ॥

किंनामान इत्यपेक्षायामाह स्वायंभुवस्येति त्रिभिः। सृष्टिकरणे तेषां सामर्थ्यमाह।... ॥ रा० ॥

स्वयंभुवो भगवतः शिष्यत्वात्स्वायंभुवः। इदं शास्त्रमित्यनेन भगवतो हि मनुशिष्यत्वेनोक्तः ॥ न० ॥ ६१ ॥

---

तान्मनूनामतो निर्दिशति। महातेजा इति विशेषणम्। अन्यानि नामानि रूढ्या संबन्धेन वा। विवस्वत्सुत इति समासपदरूपं शब्दान्तरं स्वरूपा-मर्पणनरसिंहादिशब्दवत॥ मे०॥

विवस्वत्सुतः प्रकृतमन्वन्तराधिपः॥ ना०॥ ६२॥

---

अत्र सप्त मनवो मया प्रोक्ताः। अन्यत्र चतुर्दश संपद्यन्ते। स्वे स्वे ऽन्तरे अवसरे प्राप्ते अधिकारकाल इति यावत्। उत्पाद्य प्रजाः आयु पालितवन्तः। स्वे स्वे ऽन्तरे अधिकारावसरे यस्य मनोर्यस्मिन्काले प्राप्तः सर्गस्थितिपालनाधिकारः। अन्ये त्वन्तरशब्दं मासादिशब्दवत्कालविशेषवाचिनं मन्यन्ते। तदयुक्तम्। मनुशब्दोपसहितः कालविशेषो मन्वन्तरो नाम कालो न तु केवल इति॥ मे०॥

अनन्तरोक्ताः षट्स्वायंभुवश्चैवं सप्त। एते स्वायंभुवप्रमुखा मनवो बहुतेजस आत्मीयात्मीयान्ये काले इदं जङ्गमस्थावरमुत्पाद्यायुः प्रजाः पालितवन्तः। कियान्पुनः कालः प्रत्येकं मनूनामधिकार इत्याह॥ गो०॥

स्वायंभुवाद्या इति। आयुर्थामव-तस्थ।...॥ ना०॥

इदानीं वर्तमाने स्वे स्वे ऽन्तरे स्वकीयस्वकीयमन्वन्तरे इदं स्वानुरूपाः प्रजा उत्पाद्य चराचरं सर्वमापुः।...॥ रा०॥

अन्तरशब्देन कालविशेष उच्यते। आपुः पान्ति स्म। अथ सृष्टिसंहारौ कालतः परिच्छेत्तुं कालपरिमाणविभागं तावन्नवश्लोकैराह॥ न०॥ ६३॥

---

स्थितिप्रलयकालपरिमाणनिरूपणार्थं ज्योतिःशास्त्रगोचरं कालविभागं वक्तुमुपक्रमते। अष्टादश निमेषाः काष्ठा नाम कालो भवति। त्रिंशत्काष्ठा कलेति त्रिंशत्कला एको मुहूर्तः। तावत्त्रिंशदित्यर्थः। त्रिंशन्मुहूर्ता अहोरात्रं विद्यादिति क्रियापदमाहृत्य तावत इति द्वितीया बहुवचनम्॥ मे०॥

निमेषो ऽक्षिपक्ष्मणोः स्वाभाविकः कम्प उन्मेषसहचारी। ते अष्टादश

काष्ठा। त्रिंशत्काष्ठाः कला नाम कालस्त्रिंशत्कला मुहूर्तसंज्ञः। अहोरात्रं तु तावतस्त्रिंशन्मुहूर्ताः। तावत इति द्वितीयानिर्देशाद्विद्यादित्यध्याहार्यम्॥ गो०॥

...तावन्तस्तावतः विभक्तिव्यत्ययात्।...॥ ना०॥

कालं कालविभक्तीश्चेत्युक्तं स्वर्गादिज्ञापनार्थं विवृणोति निमेषा इति दशभिः।... तावतो मुहूर्तांस्त्रिंशन्मुहूर्तानहोरात्रं कालं विद्यादिति शेषः॥ रा०॥

तावतस्तावन्तः। ते मुहूर्ता। अहोरात्रपरिच्छेदनकालमाह॥ न०॥ ६४॥

---

अथ को ऽयं निमेषो नाम। अक्षिपक्ष्मणोर्नैसर्गिककम्प उन्मेषसहचारी। अन्यैस्तु पठितम्। यावता कालेन व्यक्तमक्षरमुच्चार्यते स निमेषः। अहश्च रात्रिश्च अहोरात्रे। तयोर्विभागं करोत्यादित्यः। उदिते आदित्ये यावत्तदीयरश्मयो दृश्यन्ते। तावदहर्व्यवहारः। अस्तमिते तु प्रागुदयाद्रात्रिव्यवहारः। मनुष्यलोके देवलोके वा यत्र तत्रादित्यो न व्याप्नोति रश्मिभिः। तत्र कथमयमहोरात्रविभागो विज्ञेयः। अतः अहोरात्रे स्वप्रायेति स्वयं प्रलयेषु भूतेषु नित्यप्रकाशित्वात् कर्मचेष्टाकार्यारम्भेन स्वापेन च विभागः। यथैवौषधीनां नियतः प्रादुर्भावकालः। स्वाभाव्यादेवं कर्मचेष्टास्वापावपि कालस्वभावत एव नियतौ॥ मे०॥

दैवमानुषसंबन्धिनी अहोरात्रे तयोर्विभजते आदित्यो विभागीकरोति तयोश्च भूतानां रात्रिः स्वापार्थं भवति कर्मोद्यमार्थं चाहः॥ गो०॥

...स्वप्नाय निर्व्यापाराय चेष्टाय कर्मणा कर्मानुष्ठानार्थं बहिरिन्द्रियाणां प्रवृत्त्यर्थं वा। भूतानां मनुष्यपितृदेवलक्षणाम्॥ ना०॥

मानुषदैविके मनुष्यदेवसंबन्धे। अहोरात्रे सूर्य उदयास्तमयाभ्यां विभजते पित्र्यहोरात्रस्याप्युपलक्षणमेतत्। अथ पितृणामहोरात्रपरिणाममाह॥ म०॥ ६५॥

यो मनुष्याणामहः स पितृणामहर्निशम्। कतरदहः कतमा च रात्रि-रिति प्रविभागः। इदमहः इयं च रात्रिरित्येष विभागः पक्षयोः पञ्चदश-रात्रिसंमितयोरर्धमासयोर्व्यवस्थितः। पक्षाश्रित इत्यर्थः। एकः पक्षो ऽहः अपरो रात्रिस्तयोश्च भिन्नस्वभावत्वान्नियतक्रमत्वाच्च विशेषमाह। अहः कृष्णः पक्षः। शुक्लः पक्षः शर्वरी रात्रिः। कर्मचेष्टाभ्य इति युक्तः पाठो यथा स्वप्नायेति तदर्थमेव। विषयभावेन विवक्षितं वृत्तानुरोधादिति सप्तमी॥ मे०॥

मानुषो मासः पितृणामहोरात्रम्। तत्र च पक्षाभ्यां विभागः कृष्णः पक्षो ऽहः कर्मोद्यमार्थम्। शुक्लपक्षः पुनः स्वापार्थं रात्रि॥ गो०॥

...यथा तत्र प्रबुध्यते तथा च कृष्णपक्षे श्राद्धादिकं क्रियत इति॥ रा०॥

तेन पितृकर्मानुष्ठाने कृष्णपक्षः प्रशस्त इति शास्त्रे उच्यते॥ न०॥ ६६॥

वर्षं मनुष्याणां द्वादश मासास्तदेकमहोरात्रं देवानाम्। तयोश्च विभाग उदगयनदक्षिणायनाभ्याम्। तत्र उदीचीं दिशमभिप्रतिष्ठमानस्यादित्यस्य षण्मासा उदगयनं भवति। अयनं गमनमधिष्ठानं वा। तस्यां दिशि षण्मा-सानादित्य उदेति। ततः परावृत्तस्य दक्षिणायनम्। तथा हि दक्षिणां दिशमाक्रम्य उदीचीं हित्वा उदयं करोति॥ मे०॥

मानुष्यं वर्षं देवतानामहोरात्रम्। तत्र चोत्तरायणमहः। दक्षिणायनं रात्रिरिति विभागः॥ गो०॥

नृणां द्वादशभिर्मासैर्वर्षं तत्र दैवरात्र्यहनी। तयोरुदगयनं दैवकर्म यत्रा दिप्रवृत्त्यर्थमहः दक्षिणायनं रात्रिरिति विभागः॥ रा०॥ ६७॥

---

ब्रह्मा प्रजानां स्रष्टा तस्य यो लोकस्तत्र क्षपाहस्य अहोरात्रस्य यत्प्रमाणं युगानां च एतत्समासतः संक्षेपेण निबोधत मत्सकाशाच्छृणुत। एकैकशः

एकैकस्य युगस्य वक्ष्यमाणस्य प्रकरणस्य पिण्डार्थकथनार्थोऽयं श्लोकः । श्रोतृणामवधारणार्थः ।... ॥ मे० ॥

प्राजापत्यस्याहोरात्रस्य यत्प्रमाणं युगानां च प्रत्येकं तत् क्रमेण संक्षेपतः शृणुत ॥ गो० ॥

तेनाहोरात्रस्य सत्यत्रेताद्वापरकलिसञ्ज्ञकानां चतुर्णां प्रमाणं क्षपा रात्रिः तया सह अहः क्षपाहः तस्य प्रमाणम्... ॥ रा० ॥

ब्राह्मस्य हैरण्यगर्भस्य प्रमाणं परिमाणं क्रमशः अर्थक्रमेण न निर्दिष्टक्रमेण ॥ न० ॥ ६८ ॥

---

प्रकृतत्वाद्दैविकानि वर्षाणि परिगृह्यन्ते । तथा च पुराणकारः । इत्येतदृषिभिर्गीतं दिव्यया संख्यया द्विजाः । दिव्येनैव प्रमाणेन युगसंख्या प्रकीर्तिता । तानि चत्वारि सहस्राणि कृतयुगं नाम कालः । .. ॥ मे० ॥

दैविकानामनन्तरप्रस्तुतत्वात्पुराणे च दिव्येनैव प्रमाणेन युगसंख्या प्रकीर्तितेति दर्शनात् दैविकानि चत्वारि वर्षसहस्राणि कृतयुगं कालमाहुः । मन्वादयः । तस्य च तावन्त्येव वर्षशतानि संध्या । अतीतागामियुगधर्मानुवर्तनं संध्यांशो ऽतीतयुगधर्माणामीषदनुवृत्तिरागामियुगधर्मेवाऽऽहुस्त्यं चत्वार्येव शतानि ॥ गो० ॥ ६९ ॥

---

कृतयुगादन्येषु त्रेतादिषु संध्यासंध्यांशसहितेषु सहस्राणि एकापायेन वर्तन्ते । हानिरपायः । एकं सहस्रं हीनं त्रेताया कृतयुगात् । एवं त्रेतातो द्वापरस्य द्वापरात्कलेः । एवं च त्रीणि सहस्राणि त्रेता द्वे द्वापर एकं कलिरिति भवति । शतानि हीयन्ते संध्यातदंशयोः विशिष्टो ऽहःसंघातो युगाख्यस्तस्य विशेषाः कृतादयः ।... ॥ मे० ॥

त्रेतादिषु पुनस्त्रिषु युगेषु संध्यासंध्यांशसहितेष्वेकहान्या सहस्राणि शतानि च भवन्ति । त्रेता त्रीणि सहस्राणि तत्संध्यासंध्यांशौ च त्रीणि

त्रीणि शतानि । एवं द्वापरकलियुगयोः संध्यासंध्यांशसहितयोः पूर्वस्मात्पूर्वस्मादेकैकसहस्रशतापायो वेदितव्यः ॥ गो० ॥

...त्रेताख्यं युगं षट्शताधिकसहस्रत्रितयपरिमितं द्वापराख्यं चतुःशताधिकद्विसहस्रपरिमितं कलिसंज्ञकं द्विशताधिकसहस्रपरिमितमिति ॥ रा० ॥

इतरेषु त्रेताद्वापरकलियुगेषु । एकापायेन एकलोपेन ॥ न० ॥ ७० ॥

---

यदेतदिति लौकिकी वाचो युक्तिः । समुदायेन प्रक्रान्तो ऽर्थः परामृश्यते । यदेतच्चतुर्युगं परिसंख्यातं चत्वारि सहस्राणीत्यादि निश्चितसंख्यमादौ प्रागस्मात्तस्य चतुर्युगस्य द्वादशभिः सहस्रैः देवाना युगमुच्यते । द्वादश चतुर्युगसहस्राणि देवयुगं नाम काल इत्यर्थः। सहस्रशब्दात्स्वार्थे ऽण् । द्वादश सहस्राणि यस्मिन्निति परिमाणे विग्रहः ॥ मे० ॥

यदेतत्परिगणितमादावस्माच्छ्लोकात् प्राक् चतुर्युगमेतद्द्वादशसहस्रगुणं देवयुगं नाम कालः ॥ गो० ॥

देवयुगमाह यदिति ॥ रा० ॥

द्वादशसाहस्रं देवानामिति पूर्वोत्तरपदाभ्यां संबध्यते ॥ न० ॥ ७१ ॥

---

देवयुगसहस्रं ब्राह्ममेकमहः । तावती ब्रह्मणो रात्रिः । देवयुगसहस्रमेव । परिसंख्यया संख्यानेन यत्सहस्रमिति संबन्धः । श्लोकपूरणार्थश्चायमनुवादः । न ह्यसंख्यया सहस्रादिव्यवहारो हेतौ तृतीया ॥ मे० ॥

एषां देवयुगाना सहस्रं ब्राह्ममहर्विज्ञेयं सहस्रमेव रात्रिः संख्ययेत्यनुवादः ॥ गो० ॥

...ब्राह्ममहः ब्रह्मा च विराट् तस्य संबन्धि तथा तावती रात्रिः देवयुगसहस्रपरिमितेत्यर्थः ।... ॥ रा० ॥

ब्राह्मं हैरण्यगर्भम् । अथ हिरण्यगर्भाहोरात्रविदा फलमाह ॥ न० ॥ ७२ ॥

---

युगसहस्रमन्तो यस्याह्नस्तद्युगसहस्रान्तं ये मनुष्या एतज्जानन्ति ते अहोरात्रविदः। किं तेषामित्यपेक्षया पुण्यं तथा भवतीति मन्तव्यं ब्राह्मस्याह्नः परिमाणवेदनं पुण्यमतस्तद्वेदितव्यमिति अर्थाद् विधिप्रतिपत्तिः ॥ मे० ॥

युगसहस्रेणान्तो यस्य तत्प्राजापत्यमहः । तद्वेदनस्य पुण्यहेतुत्वात् पुण्यं रात्रिं च तत्परिमाणतो ये विजानन्ति तेऽहोरात्रज्ञानिनः। ननु मनुष्याहोरात्रवेदनं नेति। ब्राह्माहर्विज्ञानप्रशंसा तद्वेदनप्रसवनार्थम् ॥ गो० ॥

...पुण्यं पुण्यहेतुत्वात्।... ॥ रा० ॥

युगसहस्रान्तं दैवयुगं सहस्रान्तं स्वपरिमाणविदां पुण्यफलप्रदत्वात्पुण्यं तद् ब्राह्ममहस्तावतीं रात्रिं च ये विदुस्ते जना अहोरात्रविदो भवन्ति। ब्रह्मलोकं प्राप्य ब्रह्माहोरात्रपरिवृत्तिमनुसंदधत इत्यर्थः ॥ नं० ॥ ७२ ॥

---

स ब्रह्मा तावतीं दीर्घां निशामनुभूय निद्रां प्रतिबुध्यते । ततः पुनर्जगत्सृजति। स्वापो ब्रह्मण उक्तरूपः। न ह्यसौ प्राकृतपुरुषवत्स्वपिति नित्यं प्रतिबोधात्। तत्र सर्गक्रममाह। मनः सदसदात्मकमिति। ननु चायमेव ससर्जादावित्युक्तम्। केचिदाहुर्द्विविधः प्रलयो महाप्रलयोऽवान्तरप्रलयश्च। अवान्तरप्रलयेऽयं क्रमः। मनश्चात्र न तत्त्वान्तर्गतं तस्य पूर्वमुत्पन्नत्वात्किं तर्हि प्रजापतिः प्रबुद्धः सन्मनः सर्गाय सृजति नियुङ्क्त इत्यर्थः। द्वितीये पक्षे मनःकारणत्वात् महत्तत्त्वमेव मनस्तत्त्वं प्रागुक्तक्रमहानिः पुराणे हि मनो महात्मबुद्धिरित्यादिपर्यायवाचकाः शब्दा महतः परिकीर्तिता इति। उक्ताप्येवा तत्त्वसृष्टिर्यो विशेषो नोक्तस्तत्प्रतिपादनाय पुनरुच्यते ॥ मे० ॥

स ब्रह्मा तस्याहोरात्रस्यान्ते सुप्तः सम्प्रतिबुध्यते । ततो मन आत्मीयं सृजति।लोकपिण्डसृष्ट्यर्थं नियुङ्क्ते न तूत्पादयति। अस्मिन्नन्तरालप्रलयापगमे तस्य महाप्रलयानन्तरमुत्पन्नत्वात्। तथा च मनः सिसृक्षया युक्तः सर्गाय निदधे पुनरिति पुराणे उक्तम्॥ गो० ॥

...मनो महान्तं वर्तमानावर्तमानवस्तूपादानभूतम्।...॥ ना० ॥

...प्रतिबुद्धः किं चकारेत्याह प्रतिबुद्धश्चेति। मनो लिङ्गशरीरं तच्छा-स्त्रदृष्टसंयुक्तं सृजति। .. ॥ रा० ॥

...प्रसुप्तः तावन्तं कालमुपरतक्रियो भूत्वा प्रतिबुध्यते पुनः सृष्ट्युन्मुखो भवति। सदसदात्मकं प्रकृतिविकृत्यात्मकम्। मनःशब्देन महदहंकारमनांसि गृह्यन्ते।... ॥ न० ॥ ७४ ॥

---

विकुरुते विशेषतः करोति ब्रह्मणा चोद्यमानं तस्माच्चोदितादाकाशं जायते। तस्याकाशस्य शब्दगुणो भवति। गुण आश्रित उच्यते। आकाशं तस्याश्रयो न ह्याकाशं विना शब्दस्य संभवः ॥ मे० ॥

तन्मनः प्रजापतिसंबन्धि तदीययैव स्रष्टुमिच्छया प्रेर्यमाणं सृष्टिं कुरुते। कथमित्यत आह ॥ गो० ॥

सृष्टिं सृज्यं विकुरुते तद्रूपेण विक्रियते।...तस्मादहंकारतया परिण-तात्।... ॥ ना० ॥

स्रष्टं मनः कर्तृचोद्यमानजीवादृष्टाकृष्टं सत्सृष्टिं स्थूलाकाशादि कुरुते...॥ रा० ॥

सिसृक्षया भगवतः ॥ न० ॥ ७५ ॥

---

भूताद्भूतान्तरस्योत्पत्तिर्नेष्यते। महतः सर्वभूतानामुत्पत्त्यभ्युपगमात्तेनैव व्याख्यायते। आकाशादनन्तरं विकुर्वाणान्महतः स्पर्शमात्रभावं गताद्वायु-र्जायते। सर्वगतत्वात्। शुचीनशुचींश्च|तद्वत्यथ शुचिः पवित्रम्।... यत्किं-चिच्चलितं स्पन्दितं तत्सर्वं वाय्वायत्तमित्येतत्प्रदर्शयितुं बलवानित्युक्तम्। उत्त-रत्रापि याः पञ्चम्यस्ता न जात्यार्थापेक्षाः किं तर्हि वायोः परतः अनन्तर-मित्येवं योजनीयाः ॥ मे० ॥

आकाशात् स्वविकारजननोन्मुखीभूताद्वायुः सुरभ्यसुरभिगन्धवहः शुचिः पवित्रो बलवांश्च जायते। स च स्पर्शाख्यगुणयुक्त इत्यषीणां मत' ॥ गो० ॥

गन्धवह इति तदर्थक्रियोपदर्शनार्थम् । शुचिः पवित्रहेतुरन्येषामिति ।
...॥ ना० ॥ ७

...शुचिः पावनः पश्यानश्च विशुध्यन्ति सोमसूर्याग्निमारुतैरित्युक्तेः ॥ रा० ॥ ७६ ॥

---

विरोचिष्णु भास्वदिति समानार्थेन शब्दद्वयेन स्वपरप्रकाशता प्रतिपाद्यते । स्वयं दीप्तिमत्परं च भासयति ॥ मे० ॥

वायोः पूर्ववत्तेजो विरोचिष्णु प्रकाशकं तमोनाशनं भास्वत्प्रकाशकमुत्पाद्यते । तच्च रूपाख्यगुणयुक्तं कथ्यते ॥ गो० ॥

विरोचिष्णु ततः प्रकाशमानं तमोनुदमन्धकारविरोधि । भास्वत्परप्रकाशकदीप्तिमत् ॥ ना० ॥

रोचिष्णु परप्रकाशकम् । अत एव तमोनुदं भास्वत्स्वप्रकाशम् ॥ रा० ॥

स्पष्टो ॥ न० ॥ ७७ ॥

---

रसो मधुरादिः सलिलगुणः । गन्धः सुरभिरसुरभिश्च । स भूमेर्गुणः । तथा च वैशेषिकाः क्षिताविव गन्धा इति । एतेषां सिद्धिका एकैकस्य गुणाः संसर्गात्तु संकीर्यन्ते । तदुक्तं यो यो यावतिथ इति । एतच्च गुणानुकथनमध्यात्मचिन्तायामुपयुज्यते । उक्तं हि पुराणकारेण । दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रं त्वभिमानिनः ॥ अहंकारचिन्तकाः सहस्राणि दश तिष्ठन्ति विज्वराः । पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः । पुरुषं निर्गुणं प्राप्य परिसंख्या न विद्यते ॥ मे० ॥

तेजसः पूर्ववदापो रसाख्यगुणयुक्ता जायन्त इति स्मृता मन्वादिभिः । अद्भ्यश्च गन्धाद्यगुणयुक्ता भूमिर्जायते । इत्येषान्तरालप्रलयानन्तरं प्रथमतः सृष्टिः ॥ गो० ॥

रसगुणत्वमात्मा स्वभावो वा यासां ता रसगुणात्मिकाः । आदितोऽवान्तरसृष्ट्यादौ ॥ ना० ॥

आदितः स्थूलब्रह्माण्डसृष्टेः पूर्वं मन्वन्तरसंख्यापनार्थं पूर्वोक्तमनुवदति ॥ रा० ॥

गन्धवहा गन्धगुणा आदितः अण्डसृष्टेः प्राक् । अथ मन्वन्तरं कालेन परिच्छिनत्ति ॥ न० ॥ ७८ ॥

---

एकसप्ततिर्दैविकानि युगानि मन्वन्तरं नाम कालः ॥ मे० ॥

तदेतच्चतुर्युगं द्वादशसाहस्रपरिमाणं दैवं युगमुक्तम् । तदेकसप्ततिगुणं मन्वन्तराख्यः काल इह शास्त्र उच्यते । एतावान्काल एकस्य मनोः सर्गाद्यधिकारः ॥ गो० ॥

एकसप्ततिगुणं किंचिदधिकमित्यल्पत्वान्नोक्तम् ।...॥ ना० ॥

यदिति दैवैकयुगसप्ततिर्मन्वन्तरमित्यर्थः ॥ रा० ॥

द्वादशसहस्रं देववर्षाणां गणः ॥ न० ॥ ७९ ॥

---

नैषां संख्या विद्यत इत्यसंख्यानि । ननु चतुर्दश मन्वन्तराणीति ज्योतिःशास्त्रादौ श्रूयते । आवृत्त्या ह्यसंख्यानि । यथा द्वादश मासाः सर्गसंहारयोरथावृत्तिरनुपरतैव । क्रीडन्निवैतत्कुरुत इति सुखार्थितया क्रीडा । तस्य चाप्तकामत्वादानन्दैकरूपत्वाच्च क्रीडाप्रयुक्तौ सर्गसंहारावत इवशब्दः प्रयुक्तः । अत्र च यथार्थपरिहारं तत्प्रागुक्तमेव लीलया निःप्रयोजनापि लोके राजादीनां प्रवृत्तिर्दृश्यत इति ब्रह्मविदः ॥ मे० ॥

यद्यपि पुराणे चतुर्दश मन्वन्तराणि संख्यायन्ते । तथाप्यावृत्त्या असंख्यानि यदा भवन्ति तदा सृष्टिसंहारौ भवतः । एतच्च सर्गसंहाराख्यं वस्तु परमेणावृत्तिलक्षणे स्थाने स्थितत्वात्परमेष्ठी प्रजापतिः क्रीडन्निवैतत्पुनः पुनः कुरुते । न केवलं तदिच्छयैवात्र कारणम् । यावत्प्राणिकर्माण्यपीत्यत इवशब्दः ॥ गो० ॥

असंख्यान्येकस्मिन्ब्रह्मायुषि ।...॥ ना० ॥ ८० ॥

---

चत्वारः पादा यस्य चतुष्पाद्धर्मः । यागादेश्च धर्मत्वात् । तस्य चानुष्ठेयस्वभावत्वादिग्रहाभावान्न पादशब्दः शरीरावयववचनः । किं तर्हि अंशमात्रवचनः । न हि धर्मस्य शरीरमस्ति पुरुषविधं पशुपक्ष्यादिविधं वा । तेन चांशैश्चतुर्भिरुपेतश्चतुष्पादुच्यते । तेन यो ऽयं धर्मश्चतुष्पात्मकः कृतयुगे आसीत् यागस्य तावत्प्रयोगावस्थस्य चत्वारो होतृकाः होता ब्रह्मा उद्गाताध्वर्युरिति । चत्वारो वर्णाः कर्तारः । आश्रमा वा । सर्वथा यावान्वेदे धर्म उक्तः स सर्वतस्तस्मिन्काले ऽशतो ऽपि न हीनः । अविगुणाः सर्वो ऽनुष्ठीयते । बाकल्येन चतुःसंख्याः एवं दानादिष्वपि योज्यम् । दाता द्रव्यं पात्रं भावशुद्धिः । अथवा यागदानतपांसि ज्ञानं च । तथा च वक्ष्यति । ततः परमिति । अथवा धर्मप्रतिपादकं वाक्यं धर्मस्य चत्वारः पादाः चत्वारि पदजातानि । नामाख्याने चोपसर्गनिपाताश्च । तथा चाह । चत्वारि वाक्यपरिमितानि पदा तानि विदुर्ब्राह्मणा ये मनीषिणः मनस ईषिणः समर्था विद्वांसो धार्मिकाः आद्यत्वे तु गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति । न हि प्रकारान्ते चतुर्थं भागं वैदिकादीनां मनुष्या वदन्ति ।... ये स्वन्तृतिनस्ते लोकार्जनार्थं किंचिदनुतिष्ठन्ति अन्यत्त्यजन्ति । नाधर्मेण प्रतिषिद्धेन मार्गेण कश्चिदागमो विद्याया अर्थस्य वा मनुष्यानुपवर्तते आगच्छति युगस्वाभाव्यान्न मनुष्या अधर्मेण विद्यामागमयन्ति । विद्याधने धर्मानुष्ठानकारणे तत्परिशुद्धिः सकलधर्मसद्भावस्य हेतुत्वेनानेनोच्यते ॥ मे० ॥

यो ऽयं चतुःपादाश्रयो धर्मः सकल एव । तथा सत्यं कृतयुगे आसीत । सत्यस्य प्राधान्यात्पृथग्ग्रहणम् । एवं च शास्त्रातिक्रमेण विद्यया वा धनस्यागमः कश्चिन्मनुष्यान्प्रति न वर्तते ॥ गो० ॥

धर्मो हि।तपोज्ञानयज्ञदानपादचतुष्टयवान् ।...॥ ना० ॥

चतुष्पादिति वृषो हि भगवान्धर्म इत्यागमात् । तपोज्ञानयज्ञदानानां पदत्वेन निरूपणम् । .॥ रा० ॥

चतुष्पाच्चातुर्वर्ण्याश्रयः सकलः संपूर्णः । सत्यस्य पृथगुपादानं प्राधान्य-

प्रतिपत्त्यर्थम्। आगमो ऽर्थादिः प्राप्तिर्नाधर्मो नागमः कश्चिदिति च पठन्ति। तत्रायमर्थः। नाधर्मो मनुष्याननुप्रवर्तते। आगमः शास्त्रं स चापि नोपवर्तते। शास्त्रापेक्षा तत्र नास्ति स्वयमेव धर्मं धर्मफलं च साक्षात्कुर्वन्तीत्यर्थः। अयमेव साधुः पाठः॥ न०॥ ८१॥

---

कृतयुगादन्येषु युगेष्वागमाद्वेदाख्याद्धर्मः पादशो युगे युगे पादेनावरोपितो अपनीतः। अन्तर्हितो वेदशाखापुरुषाणां ग्रहणधारणशक्तिवैकल्यात् यो ऽप्यत्र धर्मो ज्योतिष्टोमादिः प्रचरति सो ऽपि चौर्यादिभिः पादशो ह्रीयते। ऋत्विजां यजमानानां दातृणां संप्रदानानां चैतैर्दोषैर्युक्तत्वान्न यथाविधि धर्मो निष्पद्यते फलमतो यथोक्तं न प्राप्यते।...॥ मे०॥

त्रेतादिषु पुनरागमात् शास्त्राद्धर्मो यागाद्यनुष्ठानं यथाक्रमं प्रतियुगं पादं पादमवरोपितं ह्रीनीकृतं चौर्यासत्यच्छद्मभिः नाग्रयुगैर्यथासंख्यं चौर्यादीनां सर्वेषां सर्वयुगेषु दर्शनात्। एवं च पादशो ऽनुष्ठानापगमात्तत्साध्यो ऽप्यभ्युदयहेतुर्मुख्यो धर्मः पादशो अपगच्छति॥ गो०॥

...येन धर्मो ऽवरोपितः तानेव निषिद्धागमान्धमस्य चौर्यादार्थान्॥ ना०॥

इतरेषु त्रेतादिषु। आगमात् चौरिकादेः। पादशः अंशेन तपआदिचतुर्णामिति शेषः। अवरोपितस्त्याजितः।...॥ रा०॥

इतरेषु त्रेतादिषु आगमाच्छास्त्राद्धर्म अध्यवसीयते। स तु धर्मः पादशो ऽवरोपितः धर्माध्यवसायावरोपणमेव धर्मावरोपणमभिप्रेतम्।...॥ न०॥ ८२॥

---

अधर्मस्य रोगकारणस्याभावादरोगाः। रोगो व्याधि सर्व एव चत्वारो वर्णाः सिद्धाभिप्रेतार्थाः। अर्थः प्रयोजनम्। अथवा सर्वे ऽर्थाः सिद्धाः। येषां काम्यानां कर्मणां प्रतिबन्धकाभावादत्यान्तेपेणाशेषफलसिद्धिः। चतुर्वर्षशतायुषः इति। ननु षोडशवर्षशतमजीवदिति परमायुर्वेदे श्रूयते। अत एवाह। वर्षशतशब्दो वयो ऽवस्थाप्रतिपादकः। चत्वारि वयांसि जीवन्ति।

न पुनरायुषः प्रमीयन्ते । नाप्राप्य चतुर्थं वयो म्रियन्ते । अत एव द्वितीये श्लोकार्धे वयो ह्रसतीत्याह । पूर्वत्र वयसो वृद्धावुक्तायामुत्तरत्र तस्यैव ह्रासाभिधानोपपत्तिः । पादश इति । न चात्र चतुर्थो भागः पादः किं तर्हि भागमात्रमंशत आयुः क्षीयत इत्यर्थः । तथा च केचिद्बाला म्रियन्ते केचित्तरुणाः केचित्प्राप्तजरसः परिपूर्णमायुर्दुर्लभम् ॥ मे० ॥

अरोगा रोगनिमित्तस्याधर्मस्याभावात् । सर्वसिद्धार्थाः सिद्धसकलकर्मफलाः प्रतिबन्धकस्याधर्मस्याभावात् । चतुर्वर्षशतायुषः । पुराणदृष्ट्यैतदाह । स्वाभाविकमेतदायुरतः आयुः प्रापककर्मकरणेनाधिकायुषो ऽपि भवन्ति । तेन दश वर्षसहस्राणि रामो राज्यमकारयदित्यविरोधः । शतायुर्वै पुरुष इत्यादि श्रुतौ च शतशब्दो बह्वर्थः । एवंविधा मनुष्याः कृते भवन्ति । त्रेतादिषु पुनरेषां पादं पादं वयो ऽल्पीभवति ॥ गो० ॥

...शतायुर्वै पुरुष इति वेदे पठ्यते । तदेव चतुर्वर्षशतमेव शतवर्षत्वेनोक्तम् ।...॥ ना० ॥

सर्वसिद्धार्थाः सर्वे आरम्भाः फलदा इति ।...॥ रा०॥

यत्पुनरितिहासपुराणेषु बहुवर्षसहस्रजीवितत्वमुक्तम् । तत्तु तेषां श्रद्धासाधितमिति वेदितव्यम् ।...॥ न० ॥ ८३ ॥

---

केचिदाहुः । वैदिकैः कर्मभिः सहस्रसंवत्सरादिभिरपेक्षितमायुर्वेदोक्तं तदनुयुगं फलति । युगानुरूपेण संपद्यते । न सर्वेषु युगेषु ।...॥ मे० ॥

शतायुर्वै पुरुष इत्यादि वेदोक्तमायुः । कर्मणां च काम्यानां प्रधानानां प्रभावश्च वृद्ध्यतिशययोगो मनुष्याणां युगानुरूपेण फलति ॥ गो० ॥

...ह्रासवचनं तु तपोविद्याराहित्यसूचनपरम्...॥ रा० ॥

आयुश्चतुर्वर्षशतादि । आशिषः फलानि । प्रभावः शापानुग्राहकशक्तिः । अनुयुगं युगानुरूपेण पूर्णानि हीनानि हीनतराणि हीनतमानीत्यर्थः ॥ न० ॥ ८४ ॥

---

युक्तस्य कालभेदेन पदार्थस्वभावभेदस्योपसंहारः। धर्मशब्दो न यागवचन एव। किं तर्हि पदार्थगुणमात्रे वर्तते। अन्ये पदार्थानां धर्माः प्रतिगुणं भवन्ति। यथा प्राक् प्रदर्शितम्। यथा वसन्ते पदार्थानां स्वभावो ऽन्यो ग्रीष्मे ऽन्य एव वर्षास्वेवं युगेष्वपि। अन्यत्वं चात्र न कारणानां दृष्टकार्यत्यागेन कार्यान्तरजनकत्वमपि तु अपरिपूर्णस्य कार्यस्योत्पत्तिः शक्तिरपयात् तच्चाह। युगह्रासानुरूपत इति ह्रासो न्यूनता॥ मे०॥

कृतादिषु युगेषु युगानुरूप्येण धर्मवैलक्षण्यं मनुष्याणां भवति तथा च॥ गो०॥

...तपो ध्यानं ज्ञानमात्मधीः शास्त्रधीर्वा॥ रा०॥

युगह्रासानुरूपतश्चान्ये भवन्ति। यथा युगानामादौ धर्माः न तथा मध्ये न तथान्त इत्यर्थः॥ न०॥ ८५॥

---

अयमन्यो युगस्वभावभेदः कथ्यते। तपःप्रभृतीनां वेदे युगभेदेन विधानाभावात्। सर्वदा सर्वाण्यनुष्ठेयानि। अयं त्वनुवादो यथाकथंचिदाख्येयः। इतिहासेषु ह्येवं वर्ण्यते। तपः प्रधानं तच्च महाफलं दीर्घायुषो रोगवर्जितास्तपसि समर्था भवन्त्यनेनाभिप्रायेणोच्यते। ज्ञानमध्यात्मविषयम्।...द्वापरे यज्ञः प्रधानम्। दानेन तु शरीरक्लेशो नान्तःसंयमो न चातीतविद्वत्तोपयुज्यत इति सुसंपादता॥ मे०॥

तपः कृच्छ्रचान्द्रायणादि कृते कृतयुगे परं प्रधानतो ऽनुष्ठीयते मनुष्यैर्युगस्वाभाव्यादात्मज्ञानयागदानानुषङ्गतः। एवं त्रेतायां ज्ञानं परं तपःप्रभृतीति आनुषङ्गिकानि। एवं द्वापरे यज्ञमाहुर्दानं कलाविति॥ गो०॥

सर्वयुगेषु चातुर्वर्ण्यानुष्ठेयत्वे ऽपि प्राधान्येनानुष्ठेयार्थमाह। तप इति। तपो ध्यानं ज्ञानमात्मधीः शास्त्रधीर्वा॥ रा०॥

तपस्सात्त्विको निवृत्तिधर्मः रजस्तमोघ्नं यत्कर्म तपस्तत्स्वलक्षणमिति

भारतस्मरणात् । परं प्रधानं ज्ञानं नानाशास्त्रविज्ञानम् । यज्ञं फलाभिसंयुक्तं कर्म ।...॥ न० ॥ ८६ ॥

---

उक्तः कालविभागः । ब्राह्मणादीनां गुणा इदानीं कथ्यन्ते तत्रायमुपक्रमः । सर्वस्य सर्वेषां लोकानां गुप्त्यर्थं रक्षणार्थं महातेजाः प्रजापतिः मुखादिजातानां ब्राह्मणादीनां चतुर्णां वर्णानां दृष्टार्थानि कर्माण्यकल्पयत् । व्यवस्थापितवान् ॥ मे० ॥

स महादीप्तिर्ब्रह्मा सर्गस्य जगतोऽसौ प्रास्ताङ्कृतिरित्यादिन्यायेन रक्षार्थं मुखादिजातानां ब्राह्मणादीनां पृथक् पृथक्कर्माणि अदृष्टार्थानि दृष्टार्थानि च कल्पितवान् । एतानि स्मृतिशेषत्वेनेहाभिधीयन्ते । तथा च ॥ गो० ॥

गुप्त्यर्थं ब्राह्मणैर्यज्ञादिद्वारा अन्यै रक्षणादिद्वारा ।...॥ ना० ॥

सर्गस्य सृज्यमानप्रपञ्चस्य ब्रह्मणः मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयदित्यन्वयः ।...॥ रा० ॥ ८७ ॥

---

तानीदानीं कर्माण्युच्यन्ते ॥ मे० ॥

सर्वस्यास्य तु सर्गस्य गुप्त्यर्थमित्युक्तम् । विधिस्तेषामस्यार्थवादप्रकरणत्वादुत्तरत्र भविष्यति । तत्र ॥ गो० ॥

कर्माण्येवाह । अध्यापनमिति अध्यापनं शिष्येभ्यः प्रतिपादनम् ॥ रा० ॥

स्पष्टः ॥ न० ॥ ८८ ॥

---

विषयाभिलाषजनका गीतशब्दादयो भावा उच्यन्ते । तत्राप्रसङ्गः पुनः पुनरनासेवनम् ॥ मे० ॥

इज्या यागः । विषयेषु स्रगादिगतरूपादिष्वत्यन्तमेव परिहारः । समासतः संक्षेपेण ॥ गो० ॥

इज्या यज्ञः अप्रसक्तिरनासङ्गः ॥ रा० ॥ ८९ ॥

वणिक्पथः वणिक्कर्मणा स्थलपथवारिपथादिना धनार्जनम्। उपयुज्यमानदेशान्तरीयद्रव्यसंनिधापनम्। यस्य राज्ञो देशे वसति। कुसीदं वृद्ध्या धनप्रयोगः॥ मे०॥

वणिक्पथः स्थलपथवारिपथादिना वणिज्यायै गमनम्। कुसीदं वृद्ध्यर्थं धनप्रयोगः॥ गो०॥

वणिक्पथं वाणिज्यं कुसीदं वृद्धिजीवनम्।...॥ ना०॥

वणिक्पथं वाणिज्यं कुसीदं लाभेन वित्तवर्धनम्॥ रा०॥ ९०॥

---

प्रभुः प्रजापतिरेकं कर्म शूद्रस्यादिष्टवान्। एतेषां ब्राह्मणक्षत्रियवैश्यानां शुश्रूषा त्वया कर्तव्या। अनसूयया अनिन्द्या चित्तेनापि तदुपरि खेदो न कर्तव्यः। शुश्रूषा परिचर्या तदुपयोगि कर्मकरणं शरीरसंबाहनादि वित्तानुपालनम्। एतद्दृष्टार्थं शूद्रस्याभिधायकत्वाच्चैकमेवेति न दानादयो निबध्यन्ते।...॥ मे०॥

स प्रभुरनिन्द्या ब्राह्मणादिपरिचरणं शूद्रस्य कर्मादिष्टवान्। इदानीं ब्राह्मणादिकर्मविवेकार्थत्वमुखेन प्राशस्त्यं स्तुतिमध्ययनश्रवणानुष्ठानफलां कर्तुं ब्राह्मणस्तुतिमिमाह॥ गो०॥

...इदानीमर्थवादपूर्वकं ब्राह्मणस्यैव श्रैष्ठ्यं हव्यकव्यादिभोक्तृत्वं विध्यादिस्वामित्वमेतच्छास्त्राधिकारित्वं च निब्रूते॥ रा०॥

अनसूयया अनहंकारेण। एवं तावद्वर्णधर्माणां श्रद्धेयतत्वमुक्तम्। इदानी तत्प्रवचनाधिकारिणा ब्राह्मणाना वैशिष्ट्यं वक्तुमाह॥ न०॥ ९१॥

---

आ पादान्तान्मेध्यः पुरुषः। तस्य नाभेरूर्ध्वमतिशयेन मेध्यं ततो ऽपि मुखम्। एतच्च स्वयमेव जगत्कारणेन पुरुषेणोक्तम्। ततः किमत आह॥ मे०॥

पुंसः सर्वतो ऽपि सिद्धत्वे सति नाभेरूर्ध्वं मेध्यतरत्वं ततो ऽपि मुखस्य मेध्यतमत्वं स्वयंभुवोक्तम्। ततः किमत आह॥ गो०॥

तस्मात्ततो ऽपि उत्तमाङ्गं शिरस्तदेकदेशो मुखम् तदुद्भूतत्वात् ।...
॥ रा० ॥

तस्मान्नाभेरूर्ध्वप्रदेशात् । अत्र सामान्येन पुरुषाणां मुखोत्कर्षवचनं ब्राह्मणोत्पत्तिस्थानस्य हिरण्यगर्भस्य प्रतिपत्त्यर्थम् ॥ न० ॥ ६२ ॥

---

उत्तममङ्गं मूर्धा तत उद्भव उत्पत्तिर्ब्राह्मणस्य ज्येष्ठ्यासौ । अन्येभ्यो ब्राह्मणाः पूर्वं सृष्टाः । ब्रह्मणो वेदधारणात् । तस्य हि सविशेषं तद्विहितम् । अतः सर्वस्य जगतो ऽस्माद्धेतुत्रयाद् ब्राह्मणः प्रभुः । विनयेनोपसर्पणीयः । तदाज्ञायां च धर्मे स्थातव्यम् । धर्मतः प्रभुः धर्मे प्रभुरित्यर्थः । आद्यादित्वात्तसिः ॥ मे० ॥

मूर्धो भवत्वात्पूर्वोत्पन्नत्वात्प्रवचनादियुक्तत्वात्सातिशयवेदधारणात्सर्वस्य जगतो धर्मानुशासने ब्राह्मणः प्रभुः । कस्य पुनरयमुत्तमाङ्गादुद्भूत इत्यत आह ॥ गो० ॥

...धर्मतो न बलतः प्रभुर्यथेष्टनियोगकारी ॥ ना० ॥

...सर्गस्य सृष्टस्य ब्राह्मणादेः धर्मादौ शास्ता । अन्योन्यं गुरवो विप्रा इत्युक्तेर्विप्रस्यापि विप्रः शास्ता ।...॥ रा० ॥

उत्तमाङ्गं मुखं मेध्यतरमित्युक्तत्वात् ब्रह्मणो वेदस्य धारणात् । अध्यापनाद्धर्मतः न्यायतः हेतुरित्यर्थः । प्रभुः स्वामी न चैवं हेतूनामसिद्धिराशङ्कनीयेत्याह ॥ न० ॥ ६३ ॥

---

पूर्वस्यैव हेतुत्रयस्य विशेषार्थमिदम् । अन्यस्यापि पुरुषस्योत्तमाङ्गं प्रधानम् । तं पुनर्ब्राह्मणं स्वयंभूः स्वादास्यान्मुखादसृजत् । तपश्च कृत्वा । एषामुत्तमाङ्गादुत्पत्तिः । ज्यैष्ठ्यमाह । आदित । यद्देवानुद्दिश्य क्रियते तद्धव्यम् । पितॄनुद्दिश्य यत्क्रियते तत्कव्यम् । तयोरभिवाहनाय देवान्पितॄंश्च प्रतिपादनाय ।...॥ मे० ॥

तं ब्राह्मणं स्वयंभूरात्ममुखात्तपः कृत्वा देवपितृहव्यकव्यवहनार्थं जगद्रक्षणाय च प्रथमसृष्टौ सृष्टवान्। एवं च ॥ गो० ॥

यतः स्वादास्यादादितो ऽसृजत्तपस्तप्त्वा अतस्तपःप्रभावादपि प्रभुरसौ न त्वेवमन्ये ऽपि तपसा सृष्टा इत्यर्थः।...॥ ना० ॥

...अतिवाह्यमतिवहनं प्रापणं देवान्पितॄंश्च हव्यकव्यानि मन्त्रैः प्रापयितुमिति यावत्। अत्र स्वादास्यादिति उत्तमाङ्गोद्भवत्वं समर्थ्यते। तपस्तप्त्वेत्यादरातिशयः। आदित इति ज्यैष्ठ्यं हव्यकव्यातिवाह्यायेति वेदधारणम्। अस्य गुप्तय इति प्रपञ्चलक्षणम्। गुप्तिश्चाध्यापनयाजनप्रतिग्रहैरित्यवगन्तव्यम् ॥ नं० ॥ ९४ ॥

---

हव्यादिवहनं पूर्वोक्तं दर्शयति। त्रिदिवमोको गृहं येषां त एवमुच्यन्ते। स्वर्गवासिनो देवाः। ब्राह्मणेन भुक्तमन्नं देवा उपतिष्ठन्ति। श्राद्धे ऽपि अस्य कर्मणो ऽङ्गभूतं विश्वेदेवानुद्दिश्य ब्राह्मणभोजनं विहितम्। यद्येव्यैतदुक्तम्। किं भूतमन्यदधिकं श्रेष्ठम्। ततस्तस्मादिति स्वयं विस्मर्यते। देवाः पितरश्च उत्तमस्थाना मध्यमस्थानाश्चाप्रत्यक्षाः। न तेषां भोजनोपायो ऽन्यो ऽस्ति अन्यतो ब्राह्मणभोजनात्। अतो महान्ब्राह्मणः ॥ मे० ॥

यस्य ब्राह्मणाख्यस्य महात्मनो मुखेन महाप्रभावास्त्रिदिवौकसः स्वर्गवासिनो देवा हव्यान्यनवरतमश्नन्ति। पितरश्च कव्यानि। ततो ऽन्यत्प्रकृष्टं किंभूतं स्यात्। अधुना विद्वत्तादिगुणयोगेन ब्राह्मणं स्तोतुमाह ॥ गो० ॥

यस्य ब्राह्मणस्यास्येन मुखेन ब्राह्मणो मनुष्येष्विति श्रुतेः अग्निरिति शेषः।...रा० ॥ ९५ ॥

---

पृथिव्यां ये भवन्ति स्थावरा वृक्षादयो जङ्गमाः कृमिकीटादयस्ते भूतशब्देनोच्यन्ते। तेषां ये प्राणिन आहारविहारादिचेष्टासमर्थास्ते श्रेष्ठाः। ते हि पटुतरं सुखमनुभवन्ति। तेषां च ये बुद्ध्या जीवन्ति हिताहिते विचिन्वन्ति शृगालादयस्ते हि घर्मेणोपतप्ताः छायामुपसर्पन्ति शीते-

नार्दिता आतपम् ।...तेषामधिकतरा मनुष्यास्तेषां च ब्राह्मणास्ते हि लोके पूज्यमानाः सर्वेषां परिभूयन्ते । जातिमात्राश्रयं हि तद्वधे महत्प्रायश्चित्तम् ॥ मे० ॥

भूतानामाकाशादिभूतविशेषाणां मध्ये प्राणिनः प्राणवन्तः शरीरभूतानि भूतानि ।...॥ ना० ॥

भूतानां स्थावरजङ्गमानां मध्ये प्राणिनो जङ्गमाः मक्षीलतादयः श्रेष्ठाः । तेष्वपि बुद्धिजीविनः पशुपक्षितिर्यञ्चः तेषु नराः ॥ रा० ॥

भूतानां जङ्गमस्थावराणां प्राणिनो जङ्गमाः बुद्धिजीविनः पश्वादयः ॥ न० ॥ ९६ ॥

---

विदुषां श्रैष्ठ्यं महाफलेषु यागादिषु अधिकारात् । तेषामपि कृतबुद्धयः परिनिष्ठितवेदतत्त्वार्थाः । न बौद्धादिभिः कथंचित्कलधीक्रियन्ते तेषामपि कर्तारः कर्मणामनुष्ठातारः । ते हि विहितकरणात्प्रतिषिद्धासेवनाच्च नोपहन्यन्ते । तेषामपि ब्रह्मवादिनः ब्रह्मस्वरूपत्वात् । तत्र ह्यत्यय आनन्दः ॥ मे० ॥

...कृतबुद्धयः शास्त्रानुष्ठानेषूत्पन्नसंकल्पाः । तेभ्यो ऽप्यनुष्ठातार इष्टानिष्टप्राप्तिपरिहारयुक्तत्वात् । तेभ्यो ऽपि ज्ञानात्मानः । अपवर्गफलत्वात् । किं च ॥ गो० ॥

...कृतबुद्धयः कुशलाः सम्यक्तत्त्वज्ञाः । कर्तारो विदित्वानुष्ठातारः । ब्रह्मवादिनो ब्रह्मकाण्डार्थतत्त्वविदः । ब्रह्मवेदिन इति क्वचित्पाठः ।... ॥ ना० ॥

...कृतबुद्धयः कृतं कर्तव्यं ब्राह्मणेन मयेदमिति बुद्धिर्येषाम् ।...॥ रा० ॥

विद्वांसो वेदविदः । कृतबुद्धयः परिचितवेदार्थाः । कर्तारश्चोदितकर्मकृतः । ब्रह्मवादिनः परमार्थवेदिनः ।...॥ न० ॥ ९७ ॥

---

विद्वत्तादिगुणसंबन्धिनो ब्राह्मणस्य विशेषदर्शने जातिमात्रं ब्राह्मणं कश्चिदवमन्येत । तन्निवृत्त्यर्थमिदमुच्यते । उत्पत्तिरेव गुणानपहाय जन्मैव ब्राह्मणस्य जातिरेव शाश्वती धर्मस्य मूर्तिः शरीरं धर्मार्थमुत्पन्नम् । द्वितीयेन जन्मना उपनयनेन संस्कृतम् । सा हि तस्य धर्मार्था उत्पत्ति-र्ब्रह्मत्वाय कल्पते संपद्यते । धर्मशरीरमुर्जित्वा परानन्दभाग्भवतीति श्रुतिः ॥ मे० ॥

जन्ममात्रमेव ब्राह्मणस्याविनश्वरं धर्मस्य शरीरम् । यस्मादसौ धर्मार्थ-मुत्पन्नः । उपनीतः सन्नात्मज्ञानेन ब्रह्मत्वाय संपद्यते ॥ गो० ॥

मूर्तिर्देह इव शाश्वती शाश्वन्निरन्तरं धर्महेतुत्वात् । ब्रह्मभूताय ब्रह्म-त्वायमुक्ताय इति यावत् ।...॥ रा० ॥

उत्पद्यत इत्युत्पत्तिः शरीरं कल्पते शक्नोति ॥ न० ॥ ९८ ॥

---

सर्वलोकस्योपरि भवति । श्रेष्ठमुपरिभावेनाह । ईश्वरः सर्वभूताना-मिति । प्रभुत्वं धर्माख्यस्य कोशस्य गुप्तये जायते । द्रव्यसंचयः कोश उपमानाद्धर्मसंचय उच्यते कोश इति ॥ मे० ॥

यस्माद्ब्राह्मणो उत्पद्यमानो धर्मसंचयरक्षार्थं सर्वभूतानामीश्वरः प्रभुः सन्पृथिव्यामधिकः एकः श्रेष्ठः श्रुतैर्गुणैर्जायते । तस्मादसौ मूर्तिर्धर्मस्य शाश्वती पूर्वोक्तहेतुरयं कोशो धनसंचयो न इहोपचारात्कोशशब्दः । सद्गोप्तृत्वं च ब्राह्मणे उपदेशकत्वात्सर्वधर्माणाम् ॥ गो० ॥

जायमान एव पृथिव्यां पृथिव्याधि ईश्वरो भूत्वा जायते । न तु क्षत्रि-यादिः । अतो ऽसौ सर्वभूतानामीश्वरः ।...॥ ना० ॥

जायमानो जातमात्रः पृथिव्यां वर्तमानेनाधिक्येन । आधिक्यमाह । ईश्वर इति । धर्मकोशस्य वेदस्य वेदाद्धर्मो हि निर्बभौ । तथा ब्रह्म-कर्मोद्भवं विद्धीति स्मृतेः ॥ रा० ॥ ९९ ॥

---

असंतुष्टस्य प्रतिग्रहादिषु पुनः प्रवृत्तौ दुष्कृतितामाशङ्क्य समाधत्ते । सर्वमिदं त्रैलोक्यान्तर्वर्ति ब्राह्मणस्य स्वं नात्र प्रतिग्रहो विद्यते । प्रभुत्वेनासौ गृह्णाति न प्रतिग्रहीतृतयेति । प्रशंसैषा न विधिः । अत एवार्हतिशब्दः । अभिजनः अभिजाततावशिष्टत्वम् ॥ मे० ॥

वक्ष्यमाणस्तेयादिशास्त्रविरोधादस्य च स्तुतिप्रधानत्वात्सर्वं जगद्गतं द्रव्यजातं ब्राह्मणस्वमिव स्तुत्योच्यते न तु स्वमेव ।...॥ गो० ॥

सर्वस्याब्राह्मणस्य संबन्धि स्वं तद्ब्राह्मणस्यैव । एतच्च तस्य हरणे दोषास्पत्वेनोपचारात् । तत्र हेतुः । श्रैष्ठ्येनेति । अभिजन उत्पत्तिस्थानं पुण्यरूपम् ॥ ना० ॥ १०० ॥

---

यत्परगृहे आतिथ्यादिरूपेण भुंक्ते तदात्मीयमेव । नैवं मन्तव्यं परपाकेनेति एष वस्ते । याचित्वा अयाचित्वा वा वस्त्रं लभते नासौ तस्य लाभाय । अपि तु स्वकस्याच्छादने विनियोगः । तिष्ठतु तावदात्मोपयोगि गृह्णाति ।...आनृशंस्यं कारुण्यम् । तदीयया महासत्त्वतया पृथिव्यां राजानः स्वानि धनान्युपयुञ्जते । अन्यथा यद्यसाविच्छेदहमेतदादाय स्वकार्ये विनियुञ्जीयेति तदा सर्वे निर्धना निरुपयोगाः स्युः ॥ मे० ॥

यत्परकीयस्यापि भोजनाच्छादनदानादि असौ करोति तत्तस्य स्वमेवेति पूर्ववत् स्तुतिः । एवं च आनृशंस्यात्तद्गतकारुण्यादन्ये जना भोजनाच्छादनादि कुर्वते । अधुनोक्तब्राह्मणस्तुतेः फलमाह ॥ गो० ॥

ब्राह्मणस्य करुणया प्राणिनां स्वेच्छया भोग्यत्वं धनस्य विवक्षितत्वान्न मत्वा प्रभुतेत्यर्थः ॥ ना० ॥ १०१ ॥

---

सर्वस्या ब्राह्मणस्तुतेः फलप्रदर्शनार्थं श्लोकोऽयम् । एवंविधमिदं महार्थं शास्त्रं यत्तस्य स्वमहिम्ना आत्यन्तिकेन महामस्य ब्राह्मणस्य कर्मविवेकार्थमिमानि कर्माणि कर्तव्यानि । इमानि वर्ज्यानि । एष विवेकस्तदर्थं

शेषाणां च क्षत्रियादीनामनुपूर्वशः । प्राधान्याद्ब्राह्मणस्यानुषङ्गात्क्षत्रियादीनामिदं शास्त्रमकल्पयत्कृतवान् ॥ मे० ॥

इष्टमेतन्महच्छास्त्रं यदुक्तात्क्षणस्य ब्राह्मणस्य प्रधानतः कार्याकार्यविवेकार्थं शेषाणां क्षत्रियादिसंकरपर्यन्तानामनुषङ्गस्तद्विवेकार्थमेतत्प्रजापतिनाम्ना प्रशस्तबुद्धिर्मनुः कल्पितवान् ॥ गो० ॥

तस्य ब्राह्मणस्य कर्मविवेकार्थमिमानि कर्माणि कर्तव्यानि नेमानीति निर्दोषेण शुद्ध्यर्थं शेषाणां क्षत्रियादीनां च इदं मन्वाख्यं शास्त्रमकल्पयत् । पूर्वपूर्वसर्गानुरोधात् ॥ रा० ॥ १०२ ॥

---

अध्येतव्यं प्रवक्तव्यम् ।...अयं ह्यध्यायो ऽर्थवाद एव । नात्र कश्चिद्विधिरस्ति । तेन यथा राजभोजनाः शालय इति शालिस्तुतिर्न राज्ञो ऽन्यस्येति तद्भोजननिषेधः । एवमत्रापि नान्येन केनचिदिति नायं निषेधः । केवलं शास्त्रस्तुतिः । सर्वस्मिञ्जगति श्रेष्ठो ब्राह्मणः । सर्वशास्त्राणां शास्त्रमिदम् । अतस्तादृशस्य विदुषो ब्राह्मणस्याध्ययनप्रवचनार्हं न सामान्येन शक्यते अध्येतुं प्रवक्तुं वा ।...॥ मे० ॥

हिताहितज्ञेन ब्राह्मणेनेदं शास्त्रं प्रयत्नेनाध्येतव्यमिति । ब्राह्मणस्य प्रयत्नाध्ययनार्थो ऽयमारम्भः । प्रयत्नशब्दग्रहणात् क्षत्रियवैश्ययोरप्यत्राध्ययनस्याधिकारस्तथा च निषेकादिश्मशानान्त इति वक्ष्यति ।...॥ गो० ॥

प्रयत्नतो ऽवश्यमध्येतव्यम् अन्ययोस्त्वनियमः । शिष्येभ्यस्तु प्रवचनमन्येन न कर्तव्यम् । किंतु विप्रेणैव ॥ सम्यक् यथाविधि ॥ ना० ॥

...नान्येन क्षत्रियादिना । अयमर्थः । इदं हि धर्मशास्त्रं धर्मवक्तृत्वं च विप्रस्यैव न राजन्यादेः । तेनात्रापि विधिनिषेधाभ्यां विप्र एवाधिक्रियते ।...॥ रा० ॥

विदुषा साङ्गवेदविदा । प्रयत्नतः आदरेण । अन्येन विदुषा ब्राह्मणेन विदुषापि क्षत्रियादिनेत्यर्थः । शास्त्रार्थस्य फलमाह ॥ न० ॥ १०३ ॥

---

एवं संबन्धिद्वारेण ब्राह्मणार्थतया शास्त्रं स्तुत्वाधुना साक्षात् स्तौति। इदं शास्त्रं जानानः शंसितव्रतो भवतीति। परिपूर्णयमनियमानुष्ठानं वा भवति शास्त्रादनुष्ठाने प्रत्यवायं ज्ञात्वा तत्कुर्यादनुतिष्ठति। सर्वान्यमनियमान्यथाशास्त्रं सर्वमनुतिष्ठति। अनुतिष्ठन्विहितातिक्रमप्रतिषिद्धकर्मजनितैर्दोषैर्न लिप्यते न संबध्यते॥ मे०॥

इदं शास्त्रं पठन्ब्राह्मण एतदर्थावबोधेन शंसितव्रतो विशिष्टयमनियमः सन्मनोवाक्कायजैर्विहिताकरणप्रतिषिद्धसेवनजनितैः पापैर्न संबध्यते। किंच॥ गो०॥

शंसितव्रतोऽनुष्ठितब्रह्मचर्यादिव्रतः। कर्मदोषैः पापैः॥ रा०॥ १०४॥

---

पंक्तिपावनो भवति विशिष्टानुपूर्वकः संघातः पंक्तिरुच्यते। तां पुनाति निर्मलीकरोति। सर्वे दुष्टास्तत्संनिधानाददुष्टाः संपद्यन्ते। वंश्यान्स्वकुलसंभूतान्। सप्त परानुपरितनान्पित्रादीनागामिनोऽवरान् जनिष्यमाणान्। समुद्रपर्यन्तां पृथिवीं प्रतिग्रहीतुमर्हति। धर्मज्ञता हि प्रतिग्रहाधिकारे हेतुरितश्च सर्वे धर्मा ज्ञायन्ते॥ मे०॥

भोजनादावपंक्तिसंबन्धादपवित्रीकृतां पंक्तिं शास्त्रस्यत्वात्पंक्तिपावनत्वे सति पवित्रीकरोति।...॥ गो०॥

पंक्तिर्यस्यां पंक्तौ भुंक्ते पठति वा। परावरान्परान्पित्रादीनवरान्पुत्रादीन्।...रा०॥ १०५॥

---

स्वस्ति अभिप्रेतस्यार्थस्याविनाशः। अयनं प्रापणं स्वस्ति प्राप्यते येन तत्स्वस्त्ययनम्। श्रेष्ठमन्येभ्यो जपहोमादिभ्यः। न हि शास्त्रमन्तरेण तेषामनुष्ठानं संभवति अतस्तदनुष्ठानहेतुत्वाच्छ्रेष्ठमेतत्।...इदं बुद्धिविवर्धनम्। शास्त्रे ह्यभ्यस्यमाने तदर्थस्य प्रकाशनाद् ग्रन्थिविप्रमोक्षाद्बुद्धिसिद्धिः प्रसिद्धैव। इदं यशस्यं धर्मज्ञः संशयानैः पृच्छ्यमानः ख्यातिं लभते। यशसो निमित्तं यशस्यं विद्वत्तौदार्यादिगुणवत्तया प्रसिद्धिर्यशः।...

इदमन्यस्मात्स्वस्त्ययनकर्मणः श्रेष्ठमतिशयेन प्रशस्तम्। स्वस्त्ययनमविनाशप्रापकं विनाशोपशमकर्मावबोधनबुद्धिविवर्धनं च। शास्त्रार्थपरिमाणानाद्बुद्धिविकाशेन यशोनिमित्तं च सततं सर्वकालं ख्यातिकरत्वात्। परं प्रकृष्टं निःश्रेयसं निःश्रेयसस्य मोक्षस्य साधनत्वात्॥ गो०॥

एतच्छास्त्राधिगमेन धर्मज्ञता प्रतिग्रहहेतुः॥ रा०॥ १०६॥

---

...अस्मिञ्छास्त्रे धर्मः स्मार्तो ऽखिलेन निःशेषेणोक्तो गुणदोषौ च कर्मणाम्। इष्टानिष्टे फले गुणदोषौ कर्मणां यागादिब्रह्महत्यादीनामेवं हि साकल्यं भवति।...॥ मे०॥

धर्माधर्मसाधनम्। कर्मगुणदोषौ हिंसादिकर्मणो वैधत्वे गुणवत्त्वमवैधत्वे दोषवत्त्वमिति।...॥ ना०॥

...अखिलेन समग्रेण गुणदोषौ विहितस्य करणं गुणः निषिद्धाचरणं दोषः। तदुभयमप्युक्तम्॥ रा०॥

कर्मणां विहितप्रतिनिषिद्धानां गुणदोषौ इष्टं फलं गुणः अनिष्टं दोषः।...॥ न०॥ १०७॥

---

परमः प्रकृष्टो धर्म आचारः। तथा श्रुतौ वेदे चोक्तं स्मार्तः स्मृतिमूक्तः। तस्मादाचारधर्मे नित्ययुक्तः स्यात्। नित्यमनुतिष्ठेत्। आत्मवानात्मनो हितमिच्छन्।...॥ मे०॥

यः श्रुत्युक्त आचारः पुरुषधर्माख्यो यश्च स्मार्तः स परमः प्रकृष्टो धर्मो ज्योतिष्टोमाष्टकादिभ्यः श्रौतस्मार्तधर्मेभ्यो यतस्तस्माद्यो नित्यं प्रशस्तात्मा आचारे सर्वकालं युक्तो यत्नवान्स्यात्॥ गो०॥

...अस्मिन्नाचारे सदा युक्त उद्युक्तः। आत्मवान्धृतिमान्॥ ना०॥

...सदा युक्तः सर्वदोद्युक्तः। आत्मवान् पारलौकिकास्तित्वज्ञानवान्। तदभावे अनाचारे अविश्वासात्। प्रहृष्टमना वा॥ रा०॥

श्रुतस्तो ऽग्निहोत्रादिः । स्मार्तो ऽष्टकादिः । उभये श्रौतस्मार्ताचाराणाम् । एतमेवार्थं प्रपञ्चयति ॥ न० ॥ १०८ ॥

---

प्रकारान्तरेणेयमाचारस्तुतिः । आचारात्प्रच्युतः आचारहीनो न वेदफलं प्राप्नोति । वेदविहितकर्मानुष्ठानफलं वेदफलमित्युक्तम् । समग्राण्यविकलानि कर्माण्यनुतिष्ठन्नप्याचारभ्रष्टो न ततः पुत्रकामादिफलमश्नुत इति निन्दा । एष एवार्थो विपर्ययेणोच्यते ॥ मे० ॥

आचारच्युतः श्रौतस्मार्ताधिकाराद् भ्रष्टाचारो ब्राह्मणो न वैदिककर्मफलं लभते आचारवान्पुनः समग्रफलभाग्भवति ॥ गो० ॥

विच्युतः सम्यगकर्ता । वेदफलं वैदिककर्मफलं संपूर्णं नाश्नुते ।...॥ ना० ॥

आचाराद्यथाविध्याचमनादेः ॥ रा० ॥

वेदफलं वेदोक्तफलं धर्मफलमिति यावत् ।...॥ न० ॥ १०९ ॥

---

यावत्किंचित्तपः प्राणायाममौनयमनियमकृच्छ्रचान्द्रायणाशनादि तस्य संबन्धस्य फलप्रसवे मूलमाचारः । अतस्तमेव मुनयः तपः फलार्थिनो मूलत्वेन कारणतया जगृहुः गृहीतवन्तः । आचाराद्दृष्ट्वा धर्मस्य मुनयो गतिं प्राप्तिमतिक्लेशपरं तपः तथाप्याचारहीनस्य न फलतीति श्रुतिः ॥ मे० ॥

एवमाचाराद्धर्मस्य प्राप्तिम्मयो बुद्ध्वा कृच्छ्रचान्द्रायणादेस्तपसः सफलात्परं प्रकृष्टं मूलकारणं तस्मिन्सति तपसां साफल्यादाचारमनुष्ठेयत्वेन गृहीतवन्त इति ।...इदानीं शास्त्रस्य महावृत्तान्तोपेतत्वप्रदर्शनार्थमनुक्रमणीमाह ॥ गो० ॥

आचारतः आचारानुष्ठानेन शुद्धान्तःकरणात् । धर्मस्य गतिं स्वरूपं दृष्ट्वा ज्ञात्वा सर्वस्य तपसो धर्मस्य आचारो मूलमित्यनुष्ठेयतया जगृहुरित्यन्वयः ॥ रा० ॥

यथा मुनयस्तात्पर्येण धर्मान्तरूपमुपेक्षितवन्तः । न तथा कदाचिदाचारं

तस्मादाचाराधीनत्वं धर्मस्येति द्रष्टव्यमित्यभिप्रायः। अथ शास्त्रविषयानर्थानध्येतृप्ररोचनार्थं संक्षेपेणानुक्रामति ॥ न० ॥ ११० ॥

---

कालपरिमाणं तत्स्वभावभेदो ब्राह्मणस्तुतिरित्यादि सर्वं जगदुत्पत्तावन्तर्भूतम्। एतच्चार्थवादतयोक्तम्। न प्रमेयतया। संस्कारविधिं व्रतचर्योपचारं च। गर्भाधानादयः संस्काराः। तेषां विधिः कर्तव्यता। ब्रह्मचारिणो व्रतचर्या उपचारो ऽनुष्ठानमिति कर्तव्यता वा। एष द्वितीयाध्यायप्रमेयार्थः। स्नानं गुरुकुलान्निवर्तमानस्य संस्कारविशेषः ॥ मे० ॥

.. स्नातकस्य विधिं गुरुकुलसमावृत्तसंस्कारस्य ॥ ना० ॥

...उपचारं गुर्वादीना पूजाभिवादनादीनि।...॥ रा० ॥

संस्कारो निषेकादिः। व्रतचर्या ब्रह्मचारिधर्मः। उपचारो गुरुशुश्रूषा ॥ न० ॥ १११ ॥

---

दाराणामधिगमनं भार्यासंग्रहः। विवाहानां ब्राह्मादीनां तत्प्राप्त्युपायानां च लक्षणं स्वरूपाधिगमहेतुः। महायज्ञाः पञ्च वैश्वदेवादयः। श्राद्धस्य पितृयज्ञस्य कल्पो विधिरिति कर्तव्यता। परग्रहणं शाश्वतग्रहणं च वृत्तपूरणार्थम्। एष तृतीयाध्यायार्थः ॥ मे० ॥

दाराधिगमनं दाराणा यादृशानामधिगमनं कार्यम्।. ॥ ना० ॥

दाराधिगमनं विवाहः। विवाहाना ब्राह्मादीना लक्षणमाच्छाद्येत्यादि। ...॥ रा० ॥ ११२ ॥

---

वृत्तीनां जीवनोपायानां धनार्जनात्मकानामृतादीनां लक्षणम्। स्नातकस्य समाप्तवेदाध्ययनस्य गुरुकुलान्निवृत्तस्य व्रतानि नेक्षेतोद्यन्तमादित्यमित्यादीनि। एष चतुर्थाध्यायार्थः। भक्ष्याभक्ष्यं पञ्चनखा भक्ष्या। अभक्ष्यं पलाण्ड्वादि। शौचं कालकृतं जन्मादौ उदकादिना च द्रव्यशुद्धिः ॥ मे० ॥

...स्नातकस्य गृहस्थस्य व्रतानि नियमाः। भक्ष्यं दध्यादि अभक्ष्यं लशुनादि। शौचं जननादौ दशाहादिना। द्रव्याणां तैजसादीनां क्षारादीनां शुद्धिः॥ गो०॥

...व्रतानि नियमाः। एतस्माद् ग्राह्यमेतस्मान्नेति चतुर्थकम्। भक्ष्यं दध्यादि अभक्ष्यं लशुनादि। शौचं मरणादिदशाहादिना शुद्धिः। द्रव्याणां चोदकादिना॥ रा०॥

वृत्तीनां जीवनानाम्। स्नातकस्य गृहस्थस्य॥ न०॥ ११३॥

---

स्त्रीधर्मयोगः संबन्धः...एतत्पाञ्चमिकम्। तापसाय हितं तापस्यं तपःप्रधानस्तापसो वानप्रस्थस्य धर्मस्तापस्यं मोक्षः परिव्राजकधर्मः। संन्यासश्च तद्विशेष एव स च तत्रैव दर्शयिष्यते। षष्ठाध्यायवस्त्वेतत्। राज्ञः पृथिवीपालनाधिकृतस्य प्राप्तैश्वर्यस्य धर्मः। अखिलो दृष्टार्थो ऽदृष्टार्थश्च। एष सप्तमाध्यायगोचरः। कार्याणामृणादानादीनां विनिर्णयः विचार्य संशयच्छेदेनावधारणमनुष्ठेयनिश्चयः॥ मे०॥

स्त्रिया धर्मयोगो धर्मानुष्ठानम्। तापस्यं तापसस्य वानप्रस्थस्य कर्म। भिक्षोः संसारहेतुत्वान्मोक्षः संन्यासश्च भिक्षुधर्मप्रकार एव॥ गो०॥

...राज्ञो धर्मं धर्मसाधनम्। कार्याणां व्यवहाराणाम्॥ ना०॥

स्त्रीधर्मयोगं स्त्रीनिमित्तकधर्मोपायमिति पाञ्चमिकम्।...कार्याणामृणादीनाम्॥ रा०॥ ११४॥

---

साक्षिणां च प्रश्ने यो विधिः प्राधान्यात्पृथङ्निर्देशः। आष्टमिको ऽयमर्थः। द्यूतं तद्विषयो विधिः द्यूतशब्देनोक्तः। कण्टकादीनां चोराटविकादीनां शोधनं राष्ट्रान्निरसनोपायः। यद्यपि विभागादिरृणादानपदान्तर्गतत्वात्कार्याणां चेत्यनेनैवोपादानादृणादानादिवन्न पृथङ्निर्देशो ऽध्यायभेदात्तु पृथङ्निर्देशः॥ मे०॥

साक्षिणां व्यवहाराङ्गत्वेऽपि यत्नाधिक्यार्थं पृथङ्निर्देश इत्याष्टमिकम्। स्त्रीपुंसयोः संनिधानासंनिधाननिबन्धनधर्मानुष्ठानम्। धनविभागस्य व्यवहाराङ्गत्वेऽपि अध्यायपृथक्त्वात्पृथङ्निर्देशः। द्यूतं द्विविधं कण्टकानां चोराणां शोधनं निरसनम्॥ रा०॥ ११५॥

---

वैश्यशूद्रयोरुपचारः स्वधर्मानुष्ठानम्। एतन्नवमे। संकीर्णानां क्षत्तृवैदेहिकादीनां संभवमुत्पत्तिम्। आपद्धर्मं च स्ववृत्त्या अजीवतां प्राणात्यये यो धर्मः। एतद्दशमे। प्रायश्चित्तविधिरेकादशे॥ मे०॥

वैश्यशूद्राभ्यां कार्यमुपचारम्। वर्णस्य संकीर्णानामनुलोमप्रतिलोमानाम्। ...॥ ना०॥

वैश्यशूद्रोपचारं च स्वस्वधर्मानुष्ठानमिति नावमिकम्। संकीर्णानामनुलोमप्रतिलोमजानां संभवमुत्पत्तिमापद्धर्मं जीविकान्तराद्युपदेशमिति दाशमिकम्। धर्मभिक्षुकादिप्रायश्चित्तविधानमित्यैकादशिकम्॥ रा०॥ ११६॥

---

संसारगमनं...देहाद्देहान्तरप्राप्तिरथवा संसारविषयाः पृथिव्यादयो लोका उच्यन्ते। तत्र गमनं पूर्ववत्। त्रिविधमुत्तमाधममध्यमकर्मसंभवं शुभाशुभकर्मनिमित्तम्। श्रेयसं न केवलं कर्मनिमित्ता गतय उक्ता यावद्यतः परमन्यच्छ्रेयो नास्ति तदुपायोऽप्यध्यात्मज्ञानमुक्तम्। कर्मणां च विहितप्रतिषिद्धानां गुणदोषपरीक्षा॥ मे०॥

संसारस्य जीवस्य गमनमुत्तममध्यमाधमसंभवेन त्रिविधम्। कर्मणां निःश्रेयसस्य साधनत्वम्।...॥ ना०॥

निःश्रेयसं तत्त्वज्ञानात्कर्मणां विहितनिषिद्धानामिति द्वादशिकम्॥ रा०॥

त्रिविधं मनोवाक्कायभेदेन कर्मणां नैश्रेयसं नितरां श्रेयो निश्रेयसं तत्रभवं नैश्रेयसं श्रेयस्कराणां कर्मणां मध्ये प्रशस्ततरं कर्मेत्यर्थः॥ न०॥ ११७॥

---

तदेव साकल्याभिधानं द्रढयति । प्रतिनियतदेशे ऽनुष्ठीयमाना न सर्वस्यां पृथिव्यां ते देशधर्माः । ब्राह्मणादिजात्याश्रया जातिधर्माः । कुलधर्माः प्रख्यातवंशप्रवर्तिता धर्मा इति । पाखण्डाः प्रतिषिद्धव्रतचर्या बाह्यस्मृतिसमाश्रयास्तत्र ये धर्माः । पाखण्डिनो विकर्मस्थानिति । गणः संघातो वणिक्कारुकुशीलवादीनाम् । तान्सर्वान्भगवान्मनुरस्मिञ्छास्त्रे उक्तवान् ॥ मे० ॥

देशधर्मास्तत्तद्देशासाधारणा धर्मास्तत्र तत्र प्रसङ्गेन न तु प्रकरणेन । एवं जातिधर्मान्ब्राह्मणादिजातिधर्माः । कुलधर्मांस्तत्तदसाधारणगोत्रधर्मान् । पाषण्डधर्मान् पाषण्डान्प्रति ये ऽन्यैः कार्या धर्मास्ते पाषण्डधर्माः । गणधर्मा नैगमादिगणधर्मांस्तान्प्रति तैर्वा कर्तव्यास्तान् ॥ ना० ॥

देशधर्मान्प्रतिनियतदेशानुष्ठेयहोलाकादिधर्मानिति ।...॥ रा० ॥११८॥

---

पूर्वं मया मनुः पृष्टो यथैवेदमुक्तवान् । तथैवाविभ्रष्टागमं मत्सकाशाच्छृणुतेति ।...॥ गो० ॥

यथा येन श्लोकादिनिबन्धनप्रकारेण ॥ ना० ॥ ११९ ॥

---

इति श्रीभट्टमेधातिथिविरचिते मनुभाष्ये प्रथमोऽध्यायः ॥ मे० ॥

इति भट्टमाधवात्मजगोविन्दराजविवरणे मनुटीकायां प्रथमोऽध्यायः ॥ गो० ॥

श्रीनारायणसर्वज्ञकृता वृत्तिर्मनुस्मृतेः । कुनिबन्धकृतव्याख्यामियं दूरे निरस्यति ॥ सर्वज्ञश्रीनारायणकृतायां मनुवृत्तौ प्रथमो ऽध्यायः ॥ ना० ॥

इति श्रीरामानन्दविरचितायां मन्वर्थचन्द्रिकायां प्रथमो ऽध्यायः । इति मानवीये धर्मशास्त्रे भृगुप्रोक्तसंहितायां प्रथमो ऽध्यायः ॥ रा० ॥

इति श्रीलक्ष्मणात्मजेन श्रीवीरमल्लप्रियसखेन श्रीनन्दनेन विरचिते मानवव्याख्याने प्रथमो ऽध्यायः ॥ न० ॥

---

प्रथमो ऽध्यायः शास्त्रार्थप्रतिपाद्यार्थतत्त्वदर्शनार्थो ऽनुक्रान्तो जगत्सृष्ट्यादिवर्णनं च तच्छेषमेव व्याख्यातम्। इदानीं शास्त्रमारभते। तत्र प्रतिज्ञातो ऽर्थो जगत्सर्गादिवर्णनेन व्यवायाद्विस्मृत इत्यनुसंधानार्थं पुनः शिष्यान्परिबोधयति। यो धर्मो भवतां शुश्रूषितस्तमिदानीं मयोच्यमानं निबोधत। अवहिता भूत्वा शृणुत।... हृदयशब्देन चित्तम्।..॥ मे०॥

धर्मस्यानन्यप्रमाणत्वाद्विद्वद्भिर्वेदार्थज्ञैः सद्भिर्धार्मिकैः सर्वदा रागद्वेषशून्यैराचरितो हृदयेनाभ्यनुज्ञातो ऽन्तःकरणचिकित्साशून्यो यो धर्मो ऽदृष्टार्थकर्तव्यरूपस्तं शृणुत। परिभाषान्तरमाह॥ गो०॥

अथ प्रकृतपरिज्ञातं धर्मसाधनमभिधातुमवतारयति। विद्वद्भिर्विद्यावद्भिः। सद्भिराचारपरैः। द्वेषः क्रोधानुबन्धो रागो ऽभिलाषानुबन्धः। तद्रहितैः सेवितो यो धर्मो धर्महेतुः। तथा सेव्यमानो ऽपि हृदयेन शङ्कावतां नाभ्यनुज्ञायते चेन्नासौ धर्मो ऽत उक्तं हृदयेनेति। अभ्यनुज्ञातः स्वीकृतः। एवंविधो यो धर्मस्तमस्माच्छास्त्रान्निबोधत।...॥ ना०॥

एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिमित्यनेन पूर्वाध्याये धर्म उपेक्षितस्तमनुष्ठातृविशेषानुष्ठेयत्वेनाह। विद्वद्भिरिति। विद्वद्भिः धर्मबुद्ध्यनुष्ठेयत्वेन वेदवेदार्थविद्भिः। सद्भिर्वेदप्रमाणकाग्निहोत्राद्यनुष्ठानवद्भिः। एतेन बौद्धादीनां परजिगीषाकुतूहलादिना वेदतदर्थवित्त्वेऽपि वेदतदर्थानुष्ठातृत्वेनाशिष्टता व्याख्याता। अद्वेषरागिभिरित्यनेन श्येनयागवामदेव्युपासनादीनां वेदबोधितत्वे ऽपि दृष्टार्थतया न धर्मतेति दर्शितम्। हृदयेनेति शास्त्रद्वैधे सति साधूनां मनस्यतीवेष्टो यः स धर्मः। तथा च व्यासः। वैकल्पिके आत्मतुष्टिः प्रमाणमिति।...॥ रा०॥

एवं जगतः सृष्टिप्रलयौ शास्त्रावतारा श्लोकाः। इदानीं धर्मस्य प्रतिपत्त्युपायान्विवक्षुंस्तस्य लाघवेन प्रतिपत्त्यर्थं लक्षणं तावदाह। विद्वद्भिर्वेदार्थविद्भिरद्वेषरागिभिः सद्भिर्धर्मो नित्यं सेवितः धर्मत्वेनानुष्ठितः न शोकमोहादिना कदाचित्केन निमित्तेन। किंच हृदयेनाभ्यनुज्ञातः इदमेव श्रेय इति स्वारस्ययुक्तेन हृदयेन स्वीकृतः।...॥ न०॥ १॥

फलाभिलाषः कर्मप्रवृत्तेर्हेतुर्यस्य स कामात्मा । तद्भावः कामात्मता । तत्प्रधानता आत्मशब्देन प्रतिपाद्यते । सा न प्रशस्ता निन्दिता । अतश्च निन्दया प्रतिषेधानुमाने न कर्तव्ये इति प्रतीयते । अथ किं शौर्यादीनां सर्वेषां काम्यानां निषेधो ऽयम् । अथ वा किं विशेषेण ब्रूमः । शौर्यादीनामिति सर्वमेव क्रियानुष्ठानं फलसिद्ध्यर्थं न स्वरूपनिष्पत्तये ।... ॥ मे० ॥

कामात्मता न प्रशस्ता फलाभिलाषशीलत्वमयुक्तम् । यतः शास्त्रचोदितकर्माणि फलाभिलाषत्यागेनाचर्यमाणान्यात्मज्ञानसाचिव्येन मोक्षाय कल्पन्ते । फलेच्छया त्वनुष्ठाने तेषां संसारहेतुत्वात् ।... न चैवेति । इच्छामन्तरेण नेह शास्त्रप्रवृत्तिरस्ति । यस्मादिदमीकरणं वैदिककर्मसंबन्धश्चाभिलषणीयावेतौ । अत्रैवोपपत्तिमाह ॥ गो० ॥

तत्र व्यवस्थामाह । कामात्मतेति चतुर्भिः । इहेति प्राणिभूमौ अतीव फलाभिलाषिता कामात्मता तदभावस्त्वकामता । तथा च किं कार्यमित्यपेक्षायामाह । वेदाधिगम इति वेदाधिगमः वेदतदर्थज्ञानं वैदिको वेदप्रमाणको ऽग्निहोत्रादिः । चकारात्स्मार्तो ऽपि धर्मः पत्नीसंयोगादिः ।... ॥ रा० ॥

चोदितेषु कर्मसु फलाभिसंधिः कामात्मता । सा न प्रशस्ता निन्दिता प्रतिषिद्धेति यावत् । न च कर्मणः स्वरूपवृत्तिं प्रति निष्कामता प्रशस्तायुक्तम् । न चैवेहास्त्यकामत इति ईहा प्रवृत्तिः । अत्र हेतुरुक्तः । काम्यो हीति वेदाध्ययनं वेदार्थज्ञानं च वेदाधिगमः । कर्मयोगः कर्मप्रयोगः पञ्चमहायज्ञादिकम् । काम्यः कामसाध्यः । तौ काममन्तरेण दुष्करावित्यभिप्रायः । एतदेव प्रपञ्चयति ॥ न० ॥ २ ॥

---

यदुक्तं यागकामेन विना न स्वरूपनिष्पत्तिरिति तदनेन विस्पष्टं कृत्वा कथयति । संकल्पो यागादीनां मूलं कामस्य च । तत्र यागादींश्चिकीर्षन्प्रथमं संकल्पं करोति । संकल्पे क्रियमाणे तत्कारणेन कामेन संनिधातव्यमनिष्टेनापि यथा पाकार्थिनो ज्वलनं कुर्वतस्तत्समानकारणो धूमोऽप्यनिष्टो

जायते ।... तत्र किमुच्यते । यज्ञाः संकल्पसंभवा इति संकल्पस्याद्यकारण-त्वाददोषः । अत एवोत्तरत्र नाकामस्य क्रिया काचिद्दृश्यत इति वक्ष्यति । व्रतानि मानसो ऽध्यवसायो व्रतमिदं मया यावज्जीवं कर्तव्यमिति यदिष्टितम् । यथा स्नातकव्रतानि । यमधर्माः प्रतिषेधरूपा अहिंसादयः । कर्तव्येषु प्रवृत्तिर्निषिद्धेभ्यो निवृत्तिर्नान्तरेण संकल्पमस्ति ॥ मे० ॥

अनेन वस्तुनेयमर्थक्रिया साध्यते । इत्येवंविधो मनोव्यापारः संकल्पः स मूलं कामस्य तदनन्तरं हि तद्वस्तुसंपादनेच्छोपजायते । तदनु वाध्यवसायो भौतिकव्यापारेण करणोद्योगो भवत्येवं च यज्ञादयः संकल्पप्रभवास्तेषां च संकल्पोद्भवत्वे सत्यवश्यमन्तरिच्छया भवितव्यम् । संकल्पाभिमानव्यवसायेभ्यः क्रियाप्रवृत्तिरतथेच्छानिषेधात्तान्यपि न घटत इत्यभिप्रायः । व्रतान्यनुष्ठेय-रूपाणि यमधर्माप्रतिषेधात्मकाः । अत्रैव लौकिकं दृष्टान्तमाह ॥ गो० ॥

स च कामः संकल्पमूल इत्याह । संकल्पमूल इति ।... संकल्पो नाम अनेन कर्मणेदं फलं साध्यमिति निश्चयः । तदनन्तरमिष्टसाधनतयावगते तस्मिन्कर्मणि कामः । तदनन्तरं प्रयत्न इत्येवं यज्ञाः संकल्पसंभवा इति ॥ रा० ॥

संकल्पः कर्मानुष्ठानाध्यवसायः । तस्य मूलं कारणं कामः । यज्ञा इति गृहस्थधर्मा उच्यते । व्रतानीति ब्रह्मचर्यम् । यमधर्म इति वानप्रस्थसं-न्यासिधर्मा ।... ॥ न० ॥ ३ ॥

---

पूर्वेण शास्त्रीयप्रवृत्तिनिवृत्ती संकल्पाधीने व्याख्याते । अनेन लौकिकेषु कर्मसु तदधीनत इति विशेषः । नेह लोके कर्हिचित्कदाचिदपि जाग्रदव-स्थायां क्रिया काचिदनुष्ठेयत्वेनानिच्छतः संभवति । यत्किंचिल्लौकिकं वैदि-कं वा कुरुते कर्म विहितं प्रतिषिद्धं च तत्सर्वं कामस्य चेष्टितम् । हेतुत्वाच्चे-ष्टितं कामस्यैवेत्युक्तं तदिदमतिसंकरम् । कामात्मता न प्रशस्ता । न चानया विना किंचिदनुष्ठानमस्ति । अत्र प्रतिविधत्ते ॥ मे० ॥

बुद्धिपूर्वकतया साध्या या काचित् दृष्टार्था क्रिया सानिच्छतो न कदाचिद्दृश्यते। यस्माद्यत्किंचित्कुरुते कर्म तत्सर्वं कामस्यैव चेष्टितम् इच्छाकार्यम्। अत्र परिहारमाह॥ गो०॥

कामस्य कर्ममूलतामन्वयव्यतिरेकाभ्यामाह। अकामस्येति। नात्र प्रमाणयुक्त्यपेक्षेति भावः॥ रा०॥ ४॥

---

तेषु कामेषु सम्यग्वर्तितव्यम्। का पुनः सम्यग्वृत्तिर्यद्यथाश्रुतं तत्तथैवानुष्ठेयम्। नित्येषु फलं नाभिसंधेयम्। अश्रुतत्वात्। काम्येषु त्वनिषेधः। तथा तेषां श्रुतत्वात्। फलसाधनतयैव तानि विधितोऽवगम्यन्ते। फलानिच्छोस्तदनुष्ठानमश्रुतकारणं स्यात्। नित्येषु फलाभिसंधिर्व्यामोह एव। न ह्यभिसंधिमात्रात्प्रमाणतोऽनवगते फलसाधनत्वे फलमुत्पाद्यते। एवं कुर्वन्गच्छति प्राप्नोत्यमरलोकताम्। अमरा देवास्तेषां लोकः स्वर्गः। तन्निवासादमरेषु लोकशब्दः। स्थानस्थानिनोरभेदात्। मंचाः क्रोशन्तीतिवत्। तेनायं समासः। अमराश्च ते लोकाश्च अमरलोकास्तद्भाव अमरलोकता। देवजनत्वं प्राप्नोति। य एवार्थो देवजनत्वं प्राप्नोति वृत्तानुरोधादेवमुक्तम्। अथवा अमराँल्लोकयति पश्यत्यमरलोकः कर्मण्यण्। तदन्ताद्भावप्रत्ययः देवदर्शी संपद्यते। अनेनापि प्रकारेण स्वर्गप्राप्तिरेवोक्ता भवति। अथवा अमर इव लोक्यते लोके। अर्थवादश्चायम्। नात्र स्वर्गफलत्वेन विधीयते। नित्यानां फलाभावात्काम्यानां न नानाफलश्रवणात्। तेन स्वर्गप्राप्त्या शास्त्रानुष्ठानसंपत्तिरेवोच्यते।... तत्र नित्यानां प्रत्यवायानुत्पत्तिर्विध्यर्थसंपत्तिर्वा प्रयोजनं तु यथा संकल्पितं यथा श्रुतं संकल्पितप्रयोगकाले यस्य कर्मणो यत्फलं श्रुतं तत्संकल्प्याभिसंधाय मनसा कामयित्वा इदमहमतः फलं प्राप्नुयामिति ततः काम्यानर्थान्कामान्समश्नुते प्राप्नोति।... मे०॥

नाचेच्छा निषिध्यते। अत्रापि तु यच्छ्रुतं तत्तथैवानुष्ठेयम्। इतीयं सा सम्यग्वृत्तिस्तत्र तेषु कर्मसु फलाभिलाषत्यागेन वर्तमानो बन्धात्मकत्वाभावादमरलोकताममरधर्मित्वं मोक्षं प्राप्नोति। इह संसारे आत्मज्ञानाभ्यासे-

नाष्टगुणैश्वर्ययोगाद्यथाभिलषितान्सर्वानर्थान्प्राप्नोति। इदानीं धर्मप्रमाण-परिगणनार्थमाह ॥ गो० ॥

ततः किमित्यत आह। तेष्विति तेषु कर्मसु सम्यगिति अर्थकामाद्युपाधिं विना प्रवर्तते यो ऽनुष्ठाता सो ऽमरलोकतां साक्षान्मुक्तिं वा... इह च मर्त्यलोके कामान्पशुपुत्रादीनश्नुते प्राप्नोति।... ॥ रा० ॥

सम्यग्वर्तमानः समीचीनं वर्तमानः। समीचीनत्वं च कर्मफलत्यागेन चोदितकर्मानुष्ठानम्। अमरलोकतां शाश्वतलोकतां मुक्तिमित्यर्थः। इह अस्मिँल्लोके यथा संकल्पितान्स्वसंकल्पानुरूपान्कामान्भोगान्। केचित्तु वक्ष्य-माणयोर्धर्मप्रतीतिप्रवृत्त्योः प्रतिपन्थिनिराकरणपरत्वेन श्लोकचतुष्टयमिदं व्याचक्षते कामात्मतेति कामात्मता नाम निषिद्धेष्वपि प्रवर्तकः कामप्रकर्षः न चैवेहास्त्यकामत इति कामस्यात्यन्तोच्छेदः प्रतिषिध्यते। कार्यवशेन कामस्य वर्जनीयत्वात्।... ॥ न० ॥ ५ ॥

---

को ऽस्याभिसंबन्धः। यावता धर्मो ऽत्र वक्तव्यतया प्रतिज्ञातव्यः। स च विधिप्रतिषेधलक्षणस्तत्र न वेदस्य धर्ममूलता विधेया वेदो धर्ममूलत्वेन ज्ञातव्यो धर्मप्रामाण्य आश्रयणीयः। अन्तरेणैवोपदेशं तत्सिद्धेः। न हि मन्वाद्युपदेशं समधिगम्य वेदस्य धर्ममूलत्वम्।... ननु नैव केचिदाथर्वणं वेदं मन्यन्ते। यतस्त्रयी विद्या। ऋचः सामानि यजूंषीति। . स्मृतिशीले च तद्विदाम्। अनुभूतार्थविषयं विज्ञानं स्मृतिरुच्यते। तच्छब्देन वेदः प्रत्यवमृश्यते। तं विदन्ति तद्विदः वेदार्थविदः कर्तव्यमिदं न कर्तव्यमिति यत्स्मरणं तदपि प्रमाणम्। ननु च स्मृतिर्न प्रमाणमित्याहुः। स हि सर्वप्र-माणावगतप्रमेयानुवादिनीनामधिकमर्थं परिच्छिनत्ति इति वदन्तः। सत्यम्। ये स्मरन्ति तेषामाद्यमेव तत्र शब्दादिप्रमाणं नात्मीया स्मृतिः। अस्माकं तु मन्वादिस्मृतिरेव प्रमाणम्। न हि वयं तामन्तरेणान्यतो ऽष्टकादिकर्तव्य-तामवगच्छामः। तच्च मन्वादीनामीदृशं स्मरणं तत्कृतेभ्यो वाक्येभ्यः स्मृतिः परंपरया तेभ्यो ऽवसीयते। तस्माच्च स्मरणादनुभूतो ऽयमर्थः। प्रमाणेन

मन्वादिभिरिति निश्चिनुमो यत एते स्मरन्ति। न ह्यनुभूतस्य स्मरणोपपत्तिर्न च कल्पयित्वा ग्रन्थमुपनिबध्नीयुरननुभूयैव केनचित्प्रमाणेन यथोत्पाद्य वस्तुकथानकं केचन कथयेयुः।... स्मृतिश्च शीलं च स्मृतिशीले। शीलं रागद्वेषप्रहरणमाह्नः। तच्च धर्ममूलं वेदस्मृतिवत्।... आचारश्चैव साधूनां चशब्देन वेदविदामिति संबध्यते। पदद्वयेन शिष्टत्वं लक्ष्यते। शिष्टानां य आचारः सो ऽपि धर्ममूलम्। आचारो व्यवहारः अनुष्ठानं यत्र श्रुतिस्मृतिवाक्यानि न सन्ति शिष्टाश्च धर्मबुद्ध्यानुतिष्ठन्ति। तदपि वैदिकमेव पूर्ववत् प्रतिपत्तव्यम्। यथा विवाहादौ कङ्कनबन्धनादि माङ्गलिकत्वेन यत्क्रियते। या च कन्यायास्तदहर्विवाहयिष्यमाणायाः प्रख्यातवृत्तचतुष्पथादिपूजा देशभेदेन। तथा चूडासंख्या देशभेदश्च। या चातिथ्यादीनां गुर्वादीनां चानुवृत्तिः।... आत्मनस्तुष्टिरेव च। धर्ममूलमित्यनुषज्यते। वेदविदां साधूनामिति। अस्याश्च धर्ममूलत्वं प्रामाण्येनैवेत्याहुर्येन ह्येवंविधानामनुष्ठेये ऽर्थे मनः प्रसीदति द्वेषश्च न भवति स धर्मः।... अतश्च शीलवदस्याः सर्वशेषतया धर्ममूलत्वाभिधानम्॥ मे०॥

वेद ऋग्यजुःसामलक्षणो ऽखिलः समग्रो ऽर्थवादादीनामपि विध्येकवाक्यत्वेन श्रवणाद्धर्मस्य मूलं प्रमाणम्। मिथ्याज्ञानसंशयाभावात्। निसर्गप्रामाण्याच्चैव।... तथा च मानवादिशास्त्रनिबन्धनं वेदविदां कर्तव्याकर्तव्यस्मरणं शीलं च रागद्वेषपरित्यागात्मकम्। आचारश्च कङ्कणबन्धनाद्याचरणरूपः साधूनां धार्मिकाणामात्मनस्तुष्टिश्चाष्टकार्थाचर्यमाणपदार्थचेतःपरितोषरूपा वैकल्पिकपदार्थविषया च धर्मं प्रति प्रमाणमेषां सर्वेषां वेदमूलत्वात्। तथा च वेदमूलत्वमेषां दर्शयति॥ गो०॥

वेदो ऽखिल इति। अखिलः सार्थवादः। तेषामपि विधितात्पर्यात्। स वेदो धर्मस्य मूलं प्रमाणम्। यत्र साक्षाच्छ्रुतिर्नोपलभ्यते तत्र कथं तदुक्तं स्मृतिशीले चेति। वेदविदां या स्मृतिवाक्यविशेषविवक्षोत्पादिकार्थविशेषविषया चिन्ता तत्प्रभवत्वात् वाक्यमपि स्मृतिः। वेदे ऽनुपलभ्यमाने सा धर्मे प्रमाणम्। तस्या अप्यनुपलम्भे यत्र वेदविदां बहूनां शीलं चित्तस्य स्वभाव-

प्रमाणता सापि धर्मस्य मूलम्। यथा श्रुतिः। यद्वै किं चानूचानो ऽभ्य-हति तदार्षेयं वेदयन्तीति तस्याप्यनुपलम्भ उक्तमाचार इति। साधवो वेदार्थसाधनप्रवृत्ताः तेषामाचारः स्वसपूर्वकालीनसाध्वाचरितत्वप्रतिसंधि-नामनुष्ठानं तच्च प्रमाणं धर्मे तच्च शीलादन्यप्रयुक्तत्वशङ्कारहितादनिर्धारित-मूलं मिथ्याप्रसिद्धिमूलताशङ्काकलुषितमीषत्प्रत्ययकरमिति क्रमार्थः। यत्रा-चारो ऽपि नोपलभ्यते तत्राह। आत्मन इति। वक्ष्यति च। यत्कर्म कुर्वतो ऽस्य स्यात्परितोष इति तदयमर्थः। यत्र विषये वेदादिकं धर्मप्रमाणचतु-ष्टयं सदपि नोपलब्धमुत्सादादिवशात्। तत्र यत्कर्म कुर्वतस्तस्यासौ लाघवापर-नामाप्रसादातिशयः। तस्य साधनत्वे स एव प्रमाणम्।... ॥ ना० ॥

अखिलः ऋग्यजुःसामाथर्वाणः धर्ममूलं धर्मे प्रमाणं स्मृतिशीले स्मृतिर्म-न्वाद्या शीलं वृत्तं चरित्रम् तद्विदामनुष्ठेयत्वेन वेदार्थविदाम्। अत्र स्मृतिः श्रुत्यविरोधिनी ग्राह्या ब्रह्मण्यता पितृदेवभक्तता सौम्यता अपरो-पतापिता मृदुता अनसूयता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शर-ण्यता कारुण्यं प्रशान्तितेति त्रयोदशगुणं शीलमिति हारीतोक्तं वा। विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति प्रत्यक्षश्रुतिविरोधे स्मृत्यादि हेयम्। ...आचारो विवाहादौ कङ्कनबन्धादिः। साधूनामात्मप्रियां तुष्टि-र्मनसः परिणामविशेषः ॥ रा० ॥

वेदः जातावेकवचनम्। धर्ममूलं धर्मस्य प्रमाणम्। न केवलं विध्यादेश एव धर्मप्रमाणम्। किंतु मन्त्रार्थवादावपीत्युक्तमखिल इति। तद्विदां वेदा-र्थविदां स्मृतिधर्मशास्त्रेतिहासपुराणानि शीलं च धर्ममूलं सत्संभावनीयता हेतुरात्मगुणसंपच्छीलम्। तदुक्तं महाभारते। तत्तु कर्म तथा कुर्याद्येन श्लाघ्येत संसदि। शीलं समासेनैतत्ते कथितं कुरुनन्दनेति।... तद्विदामाचार-श्चैव धर्ममूलम्। आचारो व्याख्यातः। साधूनां परमधार्मिकाणामात्मनस्तु-ष्टिर्मानसी रुचिः। सा च धर्ममूलं प्रमाणान्तरागोचरत्वेन धर्मत्वम्...। एषु पूर्वं पूर्वं बलीयः।... ॥ न० ॥ ६ ॥

---

यदुक्तं वेदवित्संबन्धेन स्मृतेः प्रामाण्यं तदनेन दर्शयति। यः कश्चिद्धर्मो वर्णधर्मः संस्कारधर्मः सामान्यरूपो विशेषरूपश्च कस्यचिद्ब्राह्मणादेर्वर्णस्य मनुना परिकीर्तितः। स सर्वो वेदेऽभिहितः प्रतिपादितो यथा चैतत्तथा पूर्वश्लोक उक्तम्। सर्वज्ञानमयो हि सः। सर्वेषां ज्ञानानामदृष्टविषयाणां हेतुर्निमित्तं वेदः सर्वैर्ज्ञानैर्निर्मित्त इति ज्ञाने तद्विकारत्वमारोप्यम्।... ॥ मे० ॥

यः कश्चित् श्रुतशीलाचारात्मतुष्टिप्रमाणको धर्मः कस्यचिद्ब्राह्मणादेर्मनुना कथितः स सर्वो वेदे उक्तः। उत्सन्नविप्रकीर्णमन्त्रार्थवादलिङ्गमूलत्वात्स्मरणस्यातीन्द्रियार्थप्रतिपादने हि वेदविदामदृष्टप्रमाणकारणाना वेदस्यैव मूलत्वसंभवात् यस्मात्सर्वदृष्टार्थज्ञानहेतुत्वात्सर्वज्ञानमयः। सर्वज्ञानारब्ध इव वेदः। अत्राष्टकादीनां महाप्रत्यवायादीनां ग्रन्थेनोपनिबन्धः शीलाचारात्मतुष्टीनां पुनरल्पप्रत्यवायत्वादुपनिबन्धः ॥ गो० ॥

यः कश्चिदिदानीमनुपलभ्यमूलवान्वेदो ऽपि कस्यचित्संकीर्णस्यापि सर्वेषां वेदानां यज्ज्ञानं तत्... ॥ ना० ॥

सर्वासां स्मृतीना वेदमूलत्वे ऽपि मनुस्मृतेरतिशयमाह। य इति। कस्यचित्पुंसः स वेदः सर्वज्ञानमयः सर्वेषां ज्ञानानामदृष्टविषयाणां हेतुतया निर्मितः सर्वविषयज्ञानवतो भगवतः पूर्वपूर्वसर्गसदृशतया कार्यत्वेऽपि सर्वार्थप्रकाशत्वात् ॥ रा० ॥

सर्वज्ञानमयो सर्ववेदार्थज्ञानप्रकृष्टः। शीलादिभ्यश्च श्रुतिस्मृती बलीयस्याविंत्यभिप्रायेणाह ॥ न० ॥ ७ ॥

---

सर्वं ज्ञेयं कृतकाकृतकशास्त्रगोचरप्रत्यक्षादिगोचरं समवेक्ष्यैतज्ज्ञानचक्षुषा तर्कव्याकरणनिरुक्तमीमांसादिविद्यास्थानश्रवणचिन्तनात्मकेन चक्षुषेव चक्षुः शास्त्राभ्यासो ज्ञानस्य करणत्वसाम्यात्। यथा चक्षुषा रूपं ज्ञायते एवं शास्त्रेण धर्म इति सामान्यं समवेक्ष्य सम्यग्विचारपूर्वकं विरूप्य श्रुति-

प्रामाण्यतो वेदप्रामाण्येन धर्मं निविशेत धर्ममनुतिष्ठेत्। सर्वेषु हि शास्त्रेषु सम्यग्ज्ञातेषु वेदप्रामाण्यमेव तिष्ठते नाज्ञातेषु।... ॥ मे० ॥

यावत्किंचिच्छास्त्रजातं तत्सर्वं विज्ञानाख्येन चक्षुषा निखिलं निःशेषं कृत्वा पर्यालोच्य वेदप्रामाण्येनैव शास्त्रज्ञः स्वधर्मे ऽवतिष्ठते। वेदस्यैव धर्मं प्रति प्रामाण्यान्न वेदबाह्यशास्त्रप्रामाण्येन ज्ञानं चक्षुरिव प्रमेयपरिच्छेदात् ॥ गो० ॥

सर्वं त्विति सम्यगवेच्यालोच्य। इदं मानवशास्त्रम्। एतच्छास्त्रोक्तेन ज्ञानरूपचक्षुषानुपलभ्यमानवेदमूलेषु कर्मसु उपलभ्यमानतन्मूलेन च श्रुतेरपि प्रामाण्यतः प्रमाणत्वेन सिद्धेः तदुक्ते स्वधर्मे स्वसंपाद्ये धर्मे निविशेत... ॥ ना० ॥

अतः किं तत्राह। सर्वमिति। ज्ञानचक्षुषा ज्ञायते ऽनेनेति ज्ञानं गुरुः स एव चक्षुः तेनोपदिष्टमवेच्य शब्दतो ऽर्थतश्चाधीयीतेत्यर्थः। इदं ननु शास्त्रश्रुतिप्रामाण्यतः श्रुतिस्मृतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिर्गृहीततात्पर्यः विद्वान्स्वधर्मे अनुष्ठेये कर्तव्याकर्तव्ये निविशेत प्रवर्तेत ॥ रा० ॥

इदं श्रुत्यादिप्रमाणजातं निखिलं निरवशेषम्। ज्ञानचक्षुषा बुद्ध्या श्रुतिप्रामाण्यतः। श्रुतिशब्दः स्मृतेरप्युपलक्षणार्थः। उत्तरश्लोकानुगुण्यात्। श्रुतिसमत्वाभ्युपगमाच्च। श्रुतिस्मृत्योस्तुल्यवच्यतां विशदीकरोति ॥ न० ॥ ८॥

---

... श्रुतिस्मृतिषु यदुदितमुक्तं धर्माख्यं कर्म तदनुतिष्ठन्निहास्मिँल्लोके यावज्जीवति तावत्कीर्तिं प्रशस्यतां पूज्यतां सौभाग्यतां लभते। न्याय्ये पथि स्थितो महापुण्यो ऽयमिति सर्वेण पूज्यते प्रियश्च सर्वस्य भवति। प्रेत्य देहान्तरे यस्मादन्यदुत्तमं नास्ति तत्सुखं प्राप्नोति। प्रायेण स्वर्गकामस्याधिकारो निरतिशया प्रीतिः स्वर्गस्तत उच्यते। अनुत्तममिति तस्मान्नास्तिकस्यापि दृष्टफलार्थिनो ऽत्रैव प्रवृत्तिः प्रयुक्तेत्येवंपरमेतत् ॥ मे० ॥

श्रुतिस्मृत्युक्तं धर्ममनुतिष्ठन्नाचरन्मनुष्य इहलोके ख्यातिं परलोके

चोत्कृष्टं सुखमवाप्नोति । इति सद्भूतगुणाख्यानेनानुष्ठानस्तुतिः प्ररोचनार्था न स्तुत्यकस्मान्निःप्रयोजना स्तुतिः प्रवर्तत इत्येवं सर्वत्रेह श्रुतिषु विज्ञेयम् ॥ गो० ॥

अत्र फलमाह । श्रुतीति । श्रुतिस्तत्कालोपलभ्या । अनुत्तमं सुखं स्वर्गाख्यं मोक्षाख्यं च । अत्र च शीलादीनामनुक्तिरपकृष्टत्वकथनार्थम् । अत एव वक्ष्यमाणस्य श्रुतिस्मृत्यमीमांसत्वस्य शीलादावपि प्रसङ्गं निवारयितुं श्रुतिस्मृतिपदार्थौ व्याकरोति ॥ ना० ॥

किं च श्रुतीति । अनुत्तमं नास्त्युत्तमं यस्मात् मानवः मनुष्याधिकारकं शास्त्रमिति न्यायात् ॥ रा० ॥

श्रुतिस्मृत्योस्तुल्यवक्ष्यतामेव प्रकारान्तरेणाह ॥ न० ॥ ९ ॥

---

यत्र श्रूयते धर्मानुशासनः शब्दः सा श्रुतिः । यत्र स्मर्यते सा स्मृतिः । तत्र समाचारेऽप्यस्तीत्यतः सोऽपि स्मृतिरेव । न हि तत्राप्यस्मृते वैदिके शब्दे प्रामाण्यम् । अथ वा स्मृतिग्रहणं स्मृतेर्वेदतुल्यत्वार्थम् । किं पुनः श्रुतिस्मृत्योः समानं कार्यम् । यत्समाचारेऽप्यनेन प्राप्यते उच्यते । ते सर्वार्थेष्वमीमांस्ये ।... आशङ्कापक्षान्तरसभावनं मीमांसनम् ।... ॥ मे० ॥

मन्दबुद्धिव्युत्पादनार्थं मीमांसा प्रतिषेधादिव्यवहारफलं लोकसिद्धपदार्थकथनम् । श्रुतिर्वेदो धर्मशास्त्रं स्मृतिरिति । स्मृतिग्रहणं शीलादेरपि स्मरणप्रभेदकत्वात्प्रदर्शनार्थम् । ते श्रुतिस्मृती सर्वार्थेषु बुद्धिजन्यफलसुरापानाद्यात्मकेषु कुतर्कविकल्पैर्विचारयितव्ये । कथमेतत्स्यादिति । यतः प्रमाणान्तरागोचरो धर्मस्ताभ्यामेव निर्बभौ प्रकाशतां गतः । एवं कर्तुर्बहिष्करणमाह ॥ गो० ॥

श्रुतिस्त्विति । तुशब्देन शीलादिशब्दव्यवच्छेदः । वै इति प्रसिद्धतामाह । धर्मशास्त्रं प्राधान्येन । यत्रानुशासनीयं तद्धर्मशास्त्रम् । अमीमांस्ये तद्विरोधिशीलाचारादिभिर्न बाधनीये शीलादिकं तद्विरोधे बाध्यमेवेत्यर्थः । निर्बभौ प्रकाशितः ॥ ना० ॥

श्रुतिस्मृत्युदितमित्युक्तम्। तत्र का श्रुतिः का च स्मृतिरित्याकांक्षायामाह। श्रुतिरिति। धर्मशास्त्रं धर्मप्रतिपादकं मन्वादि तस्य वक्तृविशेषात्प्रामाण्यम्। तदाह याज्ञवल्क्यः। वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः।... इति। ते श्रुतिस्मृती सर्वार्थेषु ज्ञातव्येषु अमीमांस्ये प्रतिकूलतर्केण न विचारयितव्ये इति कुल्लूकः। तन्न। सर्वार्थेष्विति पाठः। तथा च सर्वार्थेषु ज्ञातव्येषु अमीमांस्ये एव धर्मस्यातीवसूक्ष्मत्वात्। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतर इत्युक्तेः। त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सतेत्युक्तेश्च। त्रयं प्रत्यक्षानुमानशब्दाः। मीमांसा हि पूजितविचारवचना। अथातो धर्मजिज्ञासेत्यादि सूत्रजातम्।... ॥ रा० ॥

स्पष्टः ॥ न० ॥

निर्बभौ प्रादुरासीत् ॥ का० ॥ १० ॥

---

असत्यप्रामाण्यहेतोर्वेदस्य यो देषाद्धेतुशास्त्राश्रयाद्धेतुशास्त्रं नास्तिकतर्कशास्त्रं बौद्धचार्वाकादीनां शास्त्रं यत्र न वेदो धर्मायेति पुनः पुनरुद्घोष्यते तादृशं तर्कमाश्रित्य यो ऽवज्ञां कुर्याच्छ्रुतौ स्मृतौ च केनचिदकार्यान्निवर्तयतो मैवं कार्षीः प्रतिषिद्धं वेदेनेति। तमनादृत्य चिकीर्षेत्किं नाम यदि वेदे वा स्मृतिषु वा प्रतिषिद्धं न हि किंचित्तयोः प्रामाण्यमस्तीति कथयेन्मनसा वा चिन्तयेत्। तर्कशास्त्रेषु निबद्धादरो यदि दृश्येत। स साधुभिः शिष्टैः बहिष्कार्यस्तिरस्कार्यो याजनाध्यापनातिथिसत्कारादिभ्यः क्रियाविशेषणस्यानिर्देशाद्विवदद्भ्य इति गम्यते।... अत एव पूर्वश्लोके विचारदृशः प्रतिषिध्यते। यतस्तदवज्ञानपरतया क्रियते न तु यतस्तदर्थविशेषजिज्ञासया। एवमर्थमेव हेतुमाह। नास्तिको वेदनिन्दकः। अतश्च पूर्वपक्षे यो वेदस्याप्रामाण्यं ब्रूयान्नासौ नास्तिकः स्यात्। सिद्धान्तदार्ढ्यार्थमेव पूर्वपक्षहेतुकथनं वेदनिन्दक इत्यतः स्मृतिग्रहणं न तुल्यत्वेनोभयोः प्रकृतत्वादन्यतरनिर्देशेनैव सिद्धमुभयस्यापि ग्रहणमित्यभिप्रायः।... ॥ मे० ॥

यः श्रुतिस्मृतिभ्यामेवोपात्तद्विजभावः सन्स्त। एवासत्तर्कशास्त्रावलम्बनेन

निन्देन्नास्ति परलोक इत्येवं स्थितप्रतिज्ञो वेदनिन्दको द्विजसंपाद्यात्कर्मणो ऽध्ययनादेः शिष्टैः परिहार्यः । इदानीं श्रुतिशीलाचारात्मतुष्ट्यात्मकप्रकार-भेदस्यातन्त्रतां दर्शयितुं शीलापातेन चतुर्धा धर्मलक्षणमाह ॥ गो० ॥

य इति । तथा च शीलादिभिस्तदपवादे धर्मव्यवस्थैव न स्यात् अतस्त-दुभयं न विचार्यम् । हेतुशास्त्रं श्रुतिविरोधि तर्कशासनम् । बहिष्कार्यः साधुभावात् । स हि नास्तिको नास्ति परलोक इत्येवं च वर्तते । वेदानां च निन्दको भवति । अतो बहिष्कार्य इत्यर्थः ॥ ना० ॥

अत एवाह य इति । अवमन्येत अप्रमाणो ऽयं वेद इति स्वर्गकामो यजेत... । वेदनिन्दकत्वेन पतितत्वेन सर्वधर्मानधिकारित्वमाह बहिष्कार्य इति ॥ रा० ॥

ते श्रुतिस्मृती वेदस्मृतिनिन्दक इत्येव वक्तव्ये वेदनिन्दक इति स्मृतिरपि तन्मूलत्वाद्वेदत्वाभ्युपगमेनोक्तम् । धर्मप्रमाणात्वयं संहरति ॥ न० ॥ ११ ॥

---

नात्र कश्चिद्विशेषः । वेदनिन्दाप्रतिषेधेन स्मृतिसदाचारात्मतुष्टीनामपि निन्दकस्य बहिष्कारो ऽनेन विहितः ।... महाभाष्यकारो ऽपि क्वचित्सूत्रं वार्त्तिकं वा पठित्वा व्याख्याय पुनः पठति ॥ मे० ॥

स्मृत्यादीनां प्रकारमात्रभेदो न तु वस्तुतः । सर्वेषां शिष्टानुस्मरणरूप-त्वाच्च । तथा च श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिरिति स्वयमेवा-वोचत् । सदाचारः साध्वाचारः स्वात्मनश्च प्रियमात्मतुष्टिः ॥ गो० ॥

वेद इति । सदाचारपदं बहूना साधूनामपि प्रतिपत्तिविषयतामात्रकृ-तानुष्ठानपरम् । तेन शीलसंग्रहः । स्वस्य स्वीयस्यात्मनः मनसः प्रियम् ।... ॥ ना० ॥

वेदो ऽखिल इत्यत्रोक्तमनुवदन् । तत्रान्येषां संमतिमाह । वेद इति । वेद इत्यत्र पाठक्रमः स्मृतेर्मूलत्वस्य वेदस्य सूचनार्थः ।... स्वस्य वेदार्थानु-ष्ठातु प्रियं रागाद्यनुपहतं तदपि धर्मे प्रमाणमित्यन्वयः । संमतिं द्योत-यति प्राहुरिति लक्षणं मानम् ॥ रा० ॥

सदाचारशब्देन शीलस्यापि परिग्रहः। लक्ष्यते ऽनेनेति लक्षणं प्रमाणम्। यथा धर्मस्य श्रुत्यादीन्यवसायमूलम्। एवमर्थकामेष्वनासक्तिरपि ह्यभिप्रायेणाह ॥ न० ॥ १२ ॥

---

गोभूहिरण्यादिधनमर्थः तत्र सक्तिस्तात्पर्येण तदर्जनरक्षणार्थं कृषिसेवादिव्यापारकरणम्। कामः स्त्रीसंभोगस्तत्र सक्तिर्नित्यं तदासेवनं तदङ्गादीनां च गीतवादित्रादीनाम्। तद्वर्जितानां पुरुषाणां धर्मज्ञानं धर्मावबोधो विधीयते विशेषेण धीयते व्यवस्थितं भवति। ... तत्र सक्तानां न भवति धर्मज्ञानं ... धर्मं जिज्ञासमानानामिति मुख्यं प्रमाणं धर्मे वेदः स च तैर्न शक्यते ज्ञातुम्। अत्यन्तदुर्विज्ञानो ह्यसौ निगमनिरुक्तव्याकरणतर्कपुराणमीमांसाशास्त्रश्रवणमपेक्षते न स्वार्थं बोधते चेद्गुरुशरासिः सर्वव्यापारपरित्यागेन विना न शक्य आसादयितुम्। ... अत उक्तम्। प्रमाणं परमं श्रुतिर्न तु समाचारादेः प्रामाण्यापकर्षः। ... अपरस्त्वर्थकामादृष्टफलैषणमुच्यते। तत्र सक्तानां पूजाख्यात्यादिकामानां दृष्टफलार्थितया लोकपक्तिमात्रप्रयोजनानां धर्मज्ञानं धर्मानुष्ठानं विधीयते उपदिश्यते ज्ञायतेऽस्मिन्निति ज्ञानमनुष्ठानमुच्यते। अनुष्ठीयमानो ऽपि धर्मो व्यक्ततरो भवति। ... ॥ मे० ॥

अर्थकामाख्यदुष्टपुरुषार्थेष्वसक्तानां तच्चिन्ताशून्यानां तत्त्वावबोधः शास्त्रेण विधीयते। तल्लिप्सया लोकपक्त्यर्थं धर्मानुष्ठाने सत्यदृष्टफलाभावात्। किं धर्मज्ञानेनेत्यभिप्रायः। तथा च। श्रुतिस्मृत्यादिविरोधे सति तत्त्वं ज्ञातुमिच्छता स्मृत्यादीनां मध्यात् श्रुतिः प्रकृष्टं प्रमाणमतस्च श्रुतिविरोधे स्मृत्यविरोधः। प्रत्यक्षविरोधे ऽनुमानस्य दुर्बलत्वात् ॥ गो० ॥

अर्थेति। धर्मविरोधिनोरर्थकामयोः प्रबन्धेन प्रवृत्तिः सङ्गस्तद्रहितानामेव धर्मज्ञानं विधेयम्। तदीयस्यैव धर्मज्ञानस्य प्रवृत्तिपर्यन्तत्वात्। तेषां च परमं प्रमाणं श्रुतिरेवातः श्रुतिमूलकतयैव स्मृतेरप्यादरणीयतेत्यर्थः ॥ ना० ॥

संप्रत्यधिकारिणं विशिनष्टि । अर्थकामेष्विति । असक्तानामलोलुपानां तद्ग्रहणं धर्मे अनाश्वासात् । धर्मज्ञानं धर्मानुष्ठानं विधीयते कर्तव्यतया उपदिश्यते परमं प्रधानं परमं तत्त्वं मातीति ज्ञात्वा वा ॥ रा० ॥

प्रमाणेषु बलाबलजिज्ञासायामुक्तमुत्तरार्थं श्रौतस्मार्तसंपाते श्रौतो ऽनुष्ठेय इत्यर्थः ॥ न० ॥ १३ ॥

---

प्रागुक्तो व्याघातः परिह्रियते । यत्र श्रुत्योर्द्वैधं विरुद्धाभिधानं धर्मो ऽयमिति काचिच्छ्रुतिराह । तमेवाधर्म इत्यन्या तत्र उभावपि तौ धर्मौ अनुष्ठेयौ । विकल्पेन तुल्यफले हि ते श्रुती । तत्रेयं प्रमाणमियं नेति न शक्यो विवेकः । अत्र एकार्थे तुल्यबलविरोधे विकल्प इति उभावपि तौ धर्मौ इत्युक्तम् । तत्र समुच्चयः प्राप्नोति । एवमुभौ भवतो ऽन्यथा एकः स्यात् नेति ब्रूमः । पर्यायेणापि प्रयोगेनोभयशब्दस्य प्रवृत्तिविरोधो न ह्ययं सापेक्षद्वयविशेष एव । न्याय्यश्च विकल्पः यथा अग्निहोत्राख्यमेकं कर्म तस्य कालत्रयमुपदिष्टं तत्र कर्म प्रधानं कालो गुणो न चैकस्मिन् प्रयोगे कालत्रयसंभवो न च कालानुरोधेन प्रयोगवृत्तिर्युक्ता । नाङ्गानु-रोधेन प्रधानमावर्तनीयम् । तस्मान्न्याय्यो ऽयं तुल्यबलविरोधे विकल्प इति वचनात् । उभावपि हि तौ धर्मौ । ननु च को भेदस्तस्य न कश्चित् । पूर्वेण स्वमतमुपन्यस्तमुत्तरेणान्यैरपि मनीषिभिरेतदेवोक्तमिति स्वमत-माचार्यान्तरसंवादेन दृढयति ॥ मे० ॥

यत्र पुनः श्रुत्योर्द्वैविध्यं परस्परविरुद्धाभिधानं तत्र तत्प्रतिपाद्यौ द्वावपि विकल्पानुष्ठेयत्वेन मन्वादिभिः पूर्वतरैरपि विद्वद्भिर्द्वावपि तौ धर्मौ सम्यक् समीचीनावित्युक्तं नात्र कस्यचिदपि हानं युज्यते । तुल्यप्रमाणशिष्ट-त्वादेवं च समानन्यायत्वात् स्मृत्योरपि विरोधे एतदेव विज्ञेयमिति प्रकृतोपयोगः । अत्रोदाहरणमाह ॥ गो० ॥

श्रुतिद्वैधमिति । द्वैधं विरुद्धार्थद्वयदर्शकत्वम् । तस्मिन्व्यवस्था उभौ

धर्मौ तत्तच्छाखीयपरतया विकल्पेन वा। सम्यगित्यव्ययम्। समीचीनौ मनीषिभिरुक्तौ यत इत्यर्थः ॥ ना० ॥

स्पष्टः। अत्रोदाहरणमाह ॥ न० ॥ १४ ॥

---

उदाहरणमिदं समनन्तरदर्शितविरोधे। य एते त्रयः काला इतरेतरनिन्दया होमस्य विहिताः। तत्रायमर्थः श्रुतिवाक्यानाम्। सर्वथा वर्तते यज्ञः। सर्वप्रकारो होमः प्रवर्तते। प्रवर्तनीय इत्यर्थः। या उदिते होमनिन्दा सा न तत्प्रतिषेधार्था किं तर्ह्यनुदिते होमविध्यर्था। एवमितरत्रापि। तेनायमर्थ उक्तो भवति। सर्वथा कर्तव्य एतेषां कालानामन्यतमस्मिन्काले तत्र यस्मिन्कृतस्तत्र संपन्नः शास्त्रार्थो भवति। इतीयं वैदिकी श्रुतिः। उदिते होतव्यमित्यादिका श्रुतिरेकदेशेन लक्ष्यते। येयमुदिते होतव्यं नोदिते होतव्यमिति श्रुतिः सा एवंपरेत्येवं योजना। समयाध्युषितशब्देन समुदायेनैव कोऽपि प्रासः काल उच्यते। अन्ये तु पदद्वयमेतदित्याहुः। समयशब्दः समीपवचनः समीपिनमपेक्षते उदितानुदितयोः संनिधानात्तत्समीपं संध्याकालः। अध्युषितं रात्रेर्विवासकालो व्युष्टायां रात्रावित्यर्थः। कासुचिच्छ्रुतिष्वेवं पठितं कासुचिदेवमिति श्रुतिवाक्यानुकरणमेषा स्मृतिस्तत्र किं पदद्वयमेतदुतैकमिति अत एव निर्णयः। अतो विकल्पेनैकं होमाख्यं कर्म प्रति कालत्रयेऽपि श्रुतिविधानान्नास्ति विरोधः। ... एष एव च स्मृतीना विरुद्धानां विकल्पो न्याय्यः ॥ मे० ॥

उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते रात्रिविवासकाले होतव्यमितीतरेतरविरुद्धहोमकालश्रवणेऽपि सर्वथा सर्वप्रकारमन्यस्मिन्नपि काले होमे कृते संपाद्यते यज्ञः। न हि कालाख्याङ्गानुरोधेन होमाख्यं प्रधानमावर्तयितुं युक्तमित्येवमिदम्। उदिते होतव्यमित्येवमादिकं वैदिकं वाक्यमिति ॥ गो० ॥

उदित इति। समयाध्युषिते उदयसमीपे। यज्ञो ऽग्निहोत्रहोमः। वैदिकी वेदरूपा श्रुतिः शब्दः। एतच्छ्रुतिविरोध उक्तम्। स्मृत्योरप्यन्योन्यविरोधे द्रष्टव्यम्॥ ना०॥

प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति ये ऽग्निहोत्रम्। तथा अतिथये प्रदृष्टाय बलिं हरन्ति यदुदिते जुहोतीत्यर्थवादोपेतः। उदिते जुहोतीत्यनुदिते जुहोतीत्यादि श्रुतिमाश्रित्याह श्रुतिद्वैधमिति द्वाभ्याम्। तस्मादुभावपीति। समयाध्युषिते सूर्यनक्षत्ररहिते काले। अत्र व्यवस्थितो विकल्पो ऽधिकारिभेदेन सर्वथा त्रिष्वपि पक्षेषु होमस्य नित्यत्वसिद्धिरित्यर्थः। ...॥ रा०॥

समाविषिते उदितानुदित इत्यर्थः। सूर्य इति शेषः। अयमेव स्मृत्यादिद्वैधे ऽपि न्यायो ऽवगन्तव्यः। तथा प्रमाणयोः श्रुतिस्मृत्योरध्ययनाधिकारमाह॥ न०॥ १५॥

---

विदुषा ब्राह्मणेनेदमध्येतव्यमिति पठितम्। स चार्थवादस्तत्र तत्प्रत्ययदर्शनात्कस्यचिद्विधिभ्रान्तिः स्यात्तथा च सति क्षत्रियवैश्ययोरध्ययनं निवर्तेत। इत्येतदाशङ्कानिवृत्त्यर्थो ऽयं श्लोकः। क्षत्रियवैश्ययोः प्राप्तिं दर्शयति। तथा यथाकामी शूद्रो ऽप्यप्रतिषेधादध्येतुं प्रवर्तेत। तन्निवृत्त्यर्थमपीत्येवमिमं श्लोकं पूर्वे व्याचक्षिरे। शास्त्रशब्दो ऽयं मानवग्रन्थवचनः। अधिकारो मयैतदनुष्ठेयमित्यवगमः। न च शब्दराशेः सिद्धत्वभावस्य अनुष्ठेयत्वावगतिः संभवति। ...॥ मे०॥

गर्भाधानाद्यन्त्येष्टिपर्यन्तो यस्य मन्त्रैरुक्तो ऽनुष्ठानकल्प उक्तः। स च द्विजातेरुक्तः। अतस्तस्यास्मिन्स्मृतिशास्त्रे ऽध्ययनश्रवणाधिकारो बोद्धव्यो न तु शूद्रादेः। अर्थानुष्ठानं पुनः प्रतिलोमपर्यन्तान् प्रत्यपि चोदितत्वाज्ज्ञानेन निषिध्यते। प्रवचनं त्वत्र ब्राह्मणस्येत्युक्तं विदुषेत्यत्र धर्मप्रमाणानि परिभाषास्वोक्ताः। अधुना सदाचारनिरूपणार्थं धर्मानुष्ठानयोग्यस्थानकथनार्थं च देशानाह॥ गो०॥

निषेकादिरिति। निषेको रेतःसेको गर्भाधानम्। श्मशानमन्त्येष्टिः। अधिकारो ऽध्ययने। नान्यस्य शूद्रस्य संकरस्य वा। उक्तं शिष्टाचारं व्यवस्थापयितुं शिष्टस्य निमित्तान्निवासदेशविशेषानाह ॥ ना० ॥

...त्रैवर्णिको निषेकादियोग्यो विवक्षितः।... ॥ रा० ॥

मन्त्रैः सहितो विधिः क्रियाकलापः। तस्य त्रैवर्णिकस्य अस्मिन्प्रकृते शास्त्रे श्रुतिस्मृत्याख्ये अधिकारो ऽध्ययनाधिकारः। अन्यस्य शूद्रस्य सर्वः सतामाचारः प्रमाणमित्युक्तम्। स पुनः कुत्रत्यानामित्यपेक्षायामाह ॥ न० ॥ १६ ॥

---

उक्तानि धर्मे प्रमाणानि विरोधे च विकल्पो ऽभिहितो ऽधिकारिणश्च सामान्येनोक्ताः। इदानीं येषु देशेषु योग्यतया यो धर्मो ऽनुष्ठेयतामापद्यते ते देशा वर्ण्यन्ते। सरस्वती नाम नदी। अपरा दृषद्वती। तयोर्नद्योर्यदन्तरं मध्यं तं देशं ब्रह्मावर्त इत्यनया संज्ञया प्रचक्षते। व्यवहरन्ति शिष्टाः। देवग्रहणमवध्यवधिमतोः स्तुत्यर्थम्। देवैः स निर्मितो ऽतः सर्वेभ्यो देशेभ्यः पावनतर इति ॥ मे० ॥

सरस्वतीदृषद्वत्याख्यनदीमध्यं ब्रह्मवर्ताख्यं देशमाहुः। देवनदी देवनिर्मितशब्दौ देशस्तुत्यर्थौ ॥ गो० ॥

सरस्वतीति। देवनद्योर्देवैरपि सेव्ययोर्नद्योः। देवनिर्मितं देवैरुत्तमदेशतया विहितम्। ब्रह्मावर्तत्यत्रावर्तते ऽनुवर्तते स ब्रह्मावर्तः ॥ ना० ॥

आचारश्चेत्युक्तम्। तत्र किंदेशीयः स आचारः किंप्रमाणकः। तस्मात् ... तेषां वसतिनियममाह। सरस्वतीति सप्तभिः। देवनिर्मितं देवो देवता तदुद्देश्यकयज्ञादि तदर्थं निर्मितं देवैरग्रे ऽधिष्ठितं वा निर्मितं वा ब्रह्मावर्तमित्यपूर्वा संज्ञा ॥ रा० ॥

अत्र देवसंबन्धवचनं प्रसङ्गार्थम्। ब्रह्मोत्पन्नं महर्षीणां मन्त्रप्रतिभातमिति ब्रह्मावर्तम् ॥ न० ॥ १७ ॥

---

अथास्मिन्देशे य आचारस्तस्य प्रामाण्ये किं विद्वत्ता शिष्टता चोपाधिरङ्गीक्रियते। अथाविदुषामशिष्टानां च देशोपाधिरेव प्रमाणम्। ... परंपरैव पारंपर्यम्। अन्यस्मादन्यमुपसंक्रामति। तस्मादन्यं ततो ऽप्यन्यमित्येवंरूपः प्रवाहः परंपराक्रमः। तदविच्छेदस्तत आगतः संप्राप्तः। संकीर्णयोनयो ऽन्तरालाः तत्सहितानां वर्णानाम्॥ मे०॥

तस्मिन्देशे प्रायेण सदाचारस्य संभवाद्यो ब्राह्मणादीनामन्तरप्रभवपर्यन्तानां पारंपर्यक्रमागतः प्रबन्धतो ऽविच्छेदेनागतो न सांप्रतिको य आचारः स सदाचार उच्यते॥ गो०॥

तस्मिन्निति। आचारस्वयंमाणो धर्मः। पारंपर्यं पित्रादिपरंपरात् क्रमेणागतो न त्वधुनातनेन केनचिदनुष्ठितः। अन्तरालाः संकरजालाः। सदाचारः सद्भिराचरितो धर्म इत्युच्यते॥ ना०॥

यस्मिन्पारंपर्यक्रमप्रमाणक आचारः सान्तरालानाम् अन्तरालः संकरजातिः तत्सहितानामन्तरो अन्यवहितः किंचिन्न्यूनो वा। ब्रह्मर्षिदेश इत्यपि समाख्या॥ रा०॥

सान्तरालानां वर्णसंकरसहितानां स सदाचारस्तस्य धर्मं प्रति प्रामाण्यमित्यर्थः॥ न०॥ १८॥

---

देशनामधेयान्येतानि। कुरुक्षेत्रं समन्तपञ्चकं प्रसिद्धम्। कुरवस्तत्र त्वयं गताः। ... मत्स्यादयः शब्दा बहुवचनान्ता एव देशवचनाः। ब्रह्मर्षिदेश इति समुदायसंज्ञा। देवनिर्मितो देशो ब्रह्मावर्तः। देवेभ्यः किंचिन्न्यूनो ब्रह्मर्षिरिति। अतो ऽयं देशो ब्रह्मर्षिसंबन्धाद् ब्रह्मावर्तान्न्यूनः। तथा चाह। ब्रह्मावर्तादनन्तर ईषद्भिन्नः। ...॥ मे०॥

मत्स्या विराटदेशाः। पाञ्चालाः कन्यकुब्जाहिच्छत्राः। शूरसेनजा माथुराः। एष ब्रह्मर्षिदेशाख्यो देशो ब्रह्मावर्तादीषन्न्यूनः॥ गो०॥

कुरुक्षेत्रं चेति । सूरसेनजाः सुरसेनाख्यनृपतिना निवासत्वेन निर्मिता नामसुरोपलक्षिता देशाः । अनन्तरो निर्विशेषः ॥ ना० ॥

अत्रापि ब्रह्मर्षिसंबन्धवचनं प्रशंसार्थम् । अनन्तरः किंचिन्न्यूनः ॥ न० ॥ १९ ॥

---

एतेषु देशेषु कुरुक्षेत्रादिषु प्रसूतस्य अग्रजन्मनो ब्राह्मणस्य सकाशात्स्वं स्वं चरित्रमाचारं शिक्षेरन् जिज्ञासेरन् । तस्मिन्देश इत्यनेनैतद्व्याख्यातम् ॥ मे० ॥

कुरुक्षेत्रादिदेशजातस्य ब्राह्मणस्य सकाशात् । स्वं स्वमाचारं पृथिव्यां सर्वे मनुष्याः शिक्षेरन् ॥ गो० ॥

एतद्देशेति । एतत्पदेन ब्रह्मावर्तस्यापि ग्रहणम् । चरित्रं चरणीयं धर्मप्रसङ्गेन ततोऽपकृष्टान्यपि देशान्तराणि निवासार्थं दर्शयति ॥ ना० ॥

अग्रजन्मनः ब्राह्मणात् चरित्रं चरमाणानामनुष्ठानं धर्मस्य येन तच्चरित्रं धर्मोपदेश इति यावत् । आचारं वा ॥ रा० ॥

अग्रजन्मनः ब्राह्मणस्य शिक्षन्तोऽवगच्छन्ति ॥ न० ॥ २० ॥

---

उत्तरस्यां दिशि हिमवान् पूर्वतो दक्षिणस्यां विंध्यः विनशनं सरस्वत्या अन्तर्धानदेशः । प्रयागो गङ्गायमुनयोः संगमः । एतान्देशानधिकृत्य मध्यं मध्यदेशनामानं देशं विद्यात् । नात्युत्कृष्टो नातिनिकृष्ट इत्यतो मध्यदेशो न तु पृथिवीमध्यभवत्वात् ॥ मे० ॥

हिमवद्विंध्याख्योत्तरदक्षिणदिगवस्थितपर्वतयोर्मध्यं विनशनाच्च सरस्वत्यन्तर्धानदेशात्प्रत्यग्दिग्वर्ति तत्प्राक् पूर्वदिग्भागे प्रयागाच्च गङ्गायमुनासंगमात्प्रत्यक् पश्चिमदिग्भागे स मध्यदेशाख्यो देशः कथितः ॥ गो० ॥

हिमवदिति । विनशनं यत्र सरस्वती विनष्टा । मध्यः पृथिवीजघनस्थानीयो देशः ॥ ना० ॥

हिमवानुत्तरस्यः पर्वतः दक्षिणस्थो विंध्यः। विनशनात्कुरुक्षेत्रात्। प्रयागात्प्रत्यगेव पश्चिमः॥ रा०॥

स्पष्टं॥ न०॥ २१॥

---

आ पूर्वसमुद्रादा पश्चिमसमुद्राद्योऽन्तरावर्ती देशस्तथा तयोरेव पर्वश्लोकोपदिष्टयोर्गिर्योः पर्वतयोर्हिमवद्विंध्ययोर्यदन्तरं मध्यं स आर्यावर्तो देशो बुधैः शिष्टैरुच्यते। आर्यावर्तास्तत्रोद्भवन्ति। आक्रम्याक्रम्यापि न चिरं तत्र म्लेच्छाः स्थातारो भवन्ति।. . एते चतसृषु दिक्षु देशावधय उपात्ताः। प्राच्या पूर्वसमुद्रः प्रतीच्यां पश्चिमः। उदग्दक्षिणयोर्हिमवद्विंध्यौ। एतौ त्ववधित्वेनोपात्तौ। न तयोरार्यवर्तत्वमस्ति। अतस्तत्र विवासाभावे प्राप्ते इदमाह॥ मे०॥

पूर्वपश्चिमसमुद्रयोः पुनरर्वागवर्ति यन्मध्यं तयोश्च हिमवद्विंध्ययोश्च उत्तरदक्षिणदिगवलम्बिनोः पर्वतयोर्यन्मध्यं तमार्यावर्ताख्यं देशं विद्वांसो मन्यन्ते॥ गो०॥

आ समुद्रादिति। तयोर्हिमवद्विंध्ययोः पर्वतयोर्मध्यम्।... आर्यास्तस्मिन्नावर्तन्ते भ्रमन्ति न तु मर्यादाः सन्तीत्यार्यावर्तः॥ ना०॥

इति चतुःसीमावच्छिन्नः। एवं पूर्वपश्चिमसमुद्राभ्यन्तरयोर्विंध्यहिमवतोर्मध्ये देशः स आर्यावर्त इत्यर्थः।... ॥ रा०॥

आर्या अस्मिन्वर्तन्त इत्यार्यावर्तः। हिमवद्विंध्ययोरिति श्लोकद्वये ऽप्येतद्देशप्रसूतस्येत्यनुषङ्गः। एषु ब्रह्मवर्तादिषु आचारविप्रतिषेधे पूर्वपूर्वदेशाचारो बलीयानित्यवगन्तव्यः। अथ सर्वदेशेषु यज्ञार्हदेशमाह॥ न०॥ २२॥

---

कृष्णश्वेतः कृष्णपीतः कृष्णसाराख्यो मृगो यत्र चरति निवसति संभव उत्पत्तिर्यत्र देशे तस्य स्वभावतो न पुनर्देशान्तरात्प्रशस्त्योपायादिनिमित्तेनानीतस्य कियन्तमपि कालं निवासः स देशो यज्ञियो यागार्हो बोद्धव्यः।

अतः कृष्णमृगाचरणाद्देशात्परो ऽन्यो म्लेच्छदेशः। म्लेच्छाः प्रसिद्धाः चातुर्वर्ण्यजात्यपेताः प्रतिलोमजातीयाः अनधिकृता मेदान्ध्रपुलिन्दशबरादयः॥... ॥ मे॰ ॥

कृष्णः शबलो मृगो यस्मिन्देशे स्वभावतो निवसति न त्वन्येनानीतः। स यागार्हो देशो विज्ञेयोऽतोऽन्यो ऽनधिकृतः। अन्ध्रादिम्लेच्छदेशो न यागार्हः। यत एतदेवमवः॥ गो॰ ॥

कृष्णसारस्त्विति। स्वभावतो न त्वन्येन नीतः। स आर्यावर्ताद्बहिर्भूतो ऽपि याज्ञिको यागार्हः। अतः परो यो म्लेच्छानां यज्ञानुष्ठानानर्हाणामेव निवासदेशः। एतेनाचारशिक्षानिवासयज्ञानुष्ठानोचिता देशाः क्रमादुक्ताः। सर्वे वैते निवासयोग्या इत्याह॥ ना॰ ॥

स्वभावतः बलात्कारं विना। आश्रयेरन्नित्यनेनान्यत्र वसतिरयोग्येति भावः॥ रा॰ ॥

स्वभावतः स्वैरम्। अतः परः एभ्यो ब्रह्मावर्तादिभ्यो ऽन्यः। म्लेच्छा यज्ञानधिकृताः॥ न॰ ॥ २३ ॥

---

यदर्थं देशसंज्ञाभेदकथनं तमिदानीं विधिमाह। एतान्ब्रह्मावर्तादीन्देशान्द्विजातयो देशान्तरेऽपि जाता आश्रयेरन्। जन्मदेशं त्यक्त्वा ब्रह्मावर्तादिदेशसंश्रयणं यत्नेन कर्तव्यम्।... ॥ मे॰ ॥

साध्वाचारयोगार्हत्वसंभवाद् दृष्टार्थत्वाच्चैतानेव देशान्देशान्तरोद्भूता अपि द्विजातयो यत्नतः आश्रयेरन्। शूद्रः पुनर्यदा जीविकाभावे पीडितो भवति तदैतद्व्यतिरिक्तदेशेऽपि निवसेत॥ गो॰ ॥

एतानिति म्लेच्छदेशादन्यान्। प्रयत्नतो महताप्यायासेन। यस्मिन् कस्मिन् म्लेच्छदेशे ऽपि वृत्तिकर्शितो न तु स्वस्थः। सोऽपि जीवनसंभवे सद्देशेष्वेव निवसेत्। द्विजातिस्तु वृत्तिकर्शितो न म्लेच्छदेशे वसेदित्यर्थः॥ ना॰ ॥

शूद्रस्य वसतेरनियम इत्याह । शूद्रस्त्विति वृत्तिकर्शितः वृत्त्यर्थम् ॥ रा० ॥

एतान्ब्रह्मावर्तादीन् कृष्णसारमृगावासपर्यन्तान् प्रयत्नतः आपद्यपि संश्रयेरन् अधिवसेयुः । एषु च पूर्वपूर्वदेशः प्रशस्त इत्यवगन्तव्यम् ॥ न० ॥ २४ ॥

---

अतिक्रान्तस्य सर्वस्य ग्रन्थार्थस्य पिण्डार्थकथनार्थमविस्मरणार्थं योनिः कारणं समासेन संक्षेपेण संभवश्चेति प्रथमाध्यायावमर्शः । अस्य सर्वस्येति जगन्निर्माणं बुद्ध्या प्रत्यक्षीकृत्य निर्दिशति वर्णानुष्ठेयधर्मा वर्णधर्मास्तान्निबोधत विस्तरेणेति विशेषः । इह पञ्चप्रकारो धर्म इति स्मृतिविवरणकाराः प्रपञ्चयन्ति ।... ॥ मे० ॥

एषा धर्मस्य योनिः कारणं यो विद्वद्भिः सेवितः । तस्य आफलदानावस्थायिनः कारणमिति संक्षेपेण वो युष्माकमुक्ता । इह धर्मशब्दो ऽपूर्वाख्यात्मकसंस्कारे वर्तते । विद्वद्भिः सेवित इत्यत्र तु तत्कारणेषु कदाचिदित्यत्रोभयत्रापि चायं दृष्टः प्रयोगः । संभवश्चोत्पत्तिर्जगतः उक्ता । सांप्रतं वर्णैर्ब्राह्मणादिभिर्ये ऽनुष्ठेया धर्मा वर्णधर्माश्रमधर्मवर्णाश्रमधर्मगुणधर्मनैमित्तिकाख्याः पञ्चप्रकारास्तान् शृणुत । वर्णधर्मो यथा ब्राह्मणस्य मद्यपानप्रतिषेधः । आश्रमधर्मा यथा ब्रह्मचारिणो भैक्षचरणम् । वर्णाश्रमधर्मो यथा ब्राह्मणस्य ब्रह्मचारिणो बैल्वदण्डधारणम् । गुणधर्मा यथा अभिषेकगुणयुक्तस्य राज्ञः प्रजापालनम् । नैमित्तिका यथा प्रायश्चित्तमिति ॥ गो० ॥

एषेति । धर्मस्याचर्यमाणस्य धर्मसाधनस्य कर्मणो वा योनिरुत्पत्तिस्थानम् । अस्य सर्वस्य प्राणिजातस्य संभव उत्पत्तिः । वर्णधर्मान् तत्तद्वर्णनियतान्धर्मान् । उपलक्षणं चैतत् । अन्तरप्रभवधर्ममाश्रमधर्मांश्चेत्यपि ॥ ना० ॥

एषेति योनिः कारणं श्रुतिस्मृतिसद्देशाचारब्राह्मणोपदेशैर्विना धर्मो ऽपि न जायत इति भावः ।... ॥ रा० ॥

योनिः कारणम् । धर्मपरिज्ञानोपायेनेति यावत् । संभवश्चास्य सर्वस्येति प्रथमाध्यायानुभाषणम् ॥ न० ॥ २५ ॥

---

मन्त्रप्रयोगा वैदिकानि कर्माणि। वेदा मन्त्रा इहाभिप्रेतास्तेषामुच्चरणानि तानि तत्रभवानि।... निषेको योनौ शुक्रनिक्षेपः।... पावन इति पावयति अशुद्धतामपकर्षतीति पावनः।... ॥ मे॰ ॥

वैदिकमन्त्रसाध्यत्वाद्वेदमूलत्वाच्च वैदिकैः स्मार्तैः कर्मभिर्विष्णुर्योनिं कल्पयित्वित्येवमादिमन्त्रप्रयोगादिभिः पुण्यैः पारंपर्येण धर्महेतुभिर्गर्भाधानादिभिर्द्विजातीनां शरीरसंस्कारः कर्तव्यः। पावनः पवित्रीकारकः। प्रेत्य परलोके संस्कृतस्य यागादिकर्मफलसंबन्धादिहलोके च संस्कृतस्याध्ययनाधिकारात्। निषेकग्रहणात्पितुरधिकारः।... ॥ गो॰ ॥

वैदिकैरिति। वेदोक्तैः क्रियाविशेषैः पुण्यैः पुण्यसाधनैर्गर्भाधानादिभिः। शरीरसंस्कारः शरीरगतातिशयजननं कार्यम्। इह ऐहिकफलेषु कर्मसु कर्तव्येषु। पावनो ऽनधिकारहेतुपापनाशकः। एवं प्रेत्यात्रापि तत्र निषेकः पित्रैव कार्यः।. ॥ ना॰ ॥

निषेकादिसंस्कारस्यैव खादिरादिवदधिकारार्थता स्वतन्त्रफलता चेत्याह। वैदिकैरिति। वैदिकैः कर्मभिर्वेदमन्त्रप्रयोगैः।. . ॥ रा॰ ॥

किं तु भविष्यतोऽपीत्युक्तं प्रेत्य च पावन इति। कार्यः। पित्रादिना संस्कारैरपनेतव्यं पापमाह ॥ न॰ ॥ २६ ॥

---

उक्तं सर्वसंस्कारप्रयोजनम्। पावनः शरीरसंस्कारः पुरुषस्य। तत्र पावनत्वमुच्यते। दुष्टस्य दोषापकर्षणम्। कुतः पुनः शरीरदुष्टतेत्याशङ्कायामाह। बैजिकं गार्भिकं चैव इति बैजिकं बीजभवं बीजनिमित्तं वेति। एवं गार्भिकम्। एनः पापमदृष्टं दुःखकारणं तस्य बीजगर्भयोर्निमित्तत्वभावादशुचित्वमात्रमिहोच्यते। शुक्रशोणिते पुरुषस्य बीजम्। ते च स्वभावादशुचिनी गर्भाधाने अपि दोषसंक्रान्त्या दुष्टे। अतस्तन्निमित्तमशुचित्वं पुरुषस्य संस्कारैरपमृज्यते। अपकृष्यते। तानिदानीं कांश्चिन्नामधेयेन कांश्चित्संस्कार्यविशेषोपलक्षितान्कृत्वा निर्दिशति।... ॥ मे॰ ॥

गर्भनिमित्तं ये क्रियन्ते ते गार्भाः। होमग्रहणं यथासंभवे गर्भे विशेष-णम्। गर्भाधानादेरहोमकत्वात्सीमन्तोन्नयनादेश्च सहोमत्वात्। जातस्य यत्क्रियते तज्जातकर्म। एते सर्वे गृह्याभिधेयस्वरूपाः। इहैव तेषां सामान्य-मात्राभिधानात्। सामान्ये स्मृतित्वादस्य। चौडं चूडाकर्म। मौञ्जीनिबन्ध-नमुपनयनम्। एतैर्बैजिकं प्रतिषिद्धमैथुनसंकल्पान्पितृरेतसो दुष्टत्वम्। गार्भिकं गर्भवासनिवासित्वाद् दुष्टत्वं द्विजानामुपपद्यते॥ गो०॥

गार्भैरिति। गर्भे गर्भावस्थायां कर्तव्यैर्निषेकादिकर्मभिः। तथा होमैरपि सीमन्तकर्मादिनामकैर्गार्भैरेव।...॥ ना०॥

...गार्भैर्होमैः सीमन्तोन्नयनादिप्रयुक्तैः। जातकर्म जातस्य यत्कर्म सम-न्त्रकं सर्पिःप्राशनादिरूपं तत्। चौडं चूडाकर्म। मौञ्जीनिबन्धनं मौञ्जी निबध्यते ऽनेनेति मौञ्जीनिबन्धनम् उपनयनम्। एतैरेनः पापमपमृज्यते नाश्यते नश्यतीति यावत्। बैजिकं प्रतिषिद्धमैथुनसंकल्पादिना पैतृकरेतो-दोषेणोत्पन्नम्। गार्भिकमशुचिमातृगर्भवासजं मातुर्व्यभिचारसंकल्पजं च यन्मे माता प्रलुलुभ इत्यादि श्रुतेः॥ रा०॥

गार्भैर्निषेकपुंसवनसीमन्तोन्नयनसंबन्धिभिः। जातकर्मचौलमौञ्जीनिबन्ध-नैश्च मौञ्जीनिबन्धनमुपनयनम्। बैजिकं गार्भिकं मातृपित्रोरपराधकृतमि-त्यर्थः। अथोत्तरेषां संस्काराणां फलविशेषमाह॥ न०॥ २७॥

---

अध्ययनक्रिया स्वाध्यायशब्देनात्राभिप्रेता। तस्या एष विषयनिर्देशस्त्रै-विद्येनेति।... व्रतैः सावित्र्यादिभिर्ब्रह्मचारिकर्तृकैर्होमैर्व्रतादेशैर्न काले ये क्रियन्ते। यदि वा सायंप्रातः समिद्भिरग्नीन्धनं ब्रह्मचारिणो होमशब्देना-ग्न्याधानसंबन्धसामान्यादुच्यते। अथ किं समिदाधानं न होमो येनैवमुच्य-ते। संबन्धसामान्यादिति भवतीति ब्रुवन्ति।... इज्यया देवर्षितर्पणेन। एष तावदुपनीतस्य ब्रह्मचर्ये क्रियाकलापः। इदानीं गृहस्थधर्माः। सुतैरपत्यो-त्पत्तिविधिना। महायज्ञैः पञ्चभिर्ब्रह्मयज्ञादिभिः। यज्ञैः श्रौतैर्ज्योतिष्टोमा-दिभिः।... ब्राह्मीयं क्रियते तनुः। ब्रह्म परमात्मा कारणपुरुषः तस्येयं

संबन्धिनी तनुः शरीरमेतैः श्रौतस्मार्तैः सर्वैः कर्मभिः क्रियते ।... अन्ये त्वाङ्गर्ब्रह्मत्वप्राप्तौ योग्या क्रियते । न हि कर्मभिरेव केवलैर्ब्रह्मत्वप्राप्तिः ।... ॥ मे० ॥

वेदाध्ययनेन व्रतैः सावित्र्यादिभिः होमैः सायंप्रातरग्निकार्यैः त्रैविद्याख्येन व्रतेन प्राधान्यात्पृथगुपदिष्टेनेज्यया ब्रह्मचर्यावस्थायां देवर्षिपितृतर्पणरूपया पुत्रैर्महायज्ञैर्वैश्वदेवादिभिः यज्ञैर्ज्योतिष्टोमादिभिर्ब्रह्मप्राप्तियोग्या तनुस्तस्य आत्मा क्रियते । ज्ञानकर्मसमुच्चयान्मोक्षप्राप्तेः ॥ गो० ॥

स्वाध्यायेनेति । उपनयनानन्तरं क्रियमाणेन स्वाध्यायेन । व्रतैः स्वाध्यायसमयमारभ्य कर्तव्यैः । नियमैर्भिक्षाटनाग्निसमिन्धनादिभिः स्नातकव्रतादिभिश्च । होमैरुपाकरणोत्सर्जनादिहोमैः । त्रैविद्येन षट्त्रिंशदब्दचर्यवेदत्रयाध्ययनार्थं गुरुकुलवासेन त्रिविद्येन स्वाध्यायेनेति व्यस्तपदसंबन्धः । इज्यया पाकयज्ञेन हविर्यज्ञैः । सुतैः पुत्रोत्पत्त्या । महायज्ञैः ब्रह्मयज्ञाद्यैः पञ्चभिः । यज्ञैरग्निष्टोमादिभिः सोमयज्ञैः । इयमेतस्मिँल्लोके या तनुर्देहः सा ब्राह्मी ब्रह्मप्राप्तियोग्या क्रियते । अपाकृतर्णत्रयस्य मोक्षोपाये ऽधिकारात् ॥ ना० ॥

...स्वाध्यायेन वेदाध्ययनेन । व्रतैर्मधुमांसादिवर्जनात्मकैः ।... त्रैविद्येन षट्त्रिंशदाब्दिकाख्यादिव्रतेन ।... ब्राह्मी ब्रह्मप्राप्तियोग्या तनुः क्रियते ।... ॥ रा० ॥

...व्रतैः प्राजापत्यादिभिः ।... त्रयी विद्या वेदं तस्या भावस्त्रैविद्यं वेदत्रयार्थज्ञानमिति यावत् । इज्यया स्मार्तेन पाकयज्ञेन श्रुतशब्देन समावर्तनं विवाहश्चोपचर्यते । महायज्ञैर्देवपितृभूतमनुष्यब्रह्मयज्ञैः । यज्ञैरग्न्याधानादिभिः । ब्राह्मी ब्रह्मप्राप्त्यर्हा ॥ न० ॥ २८ ॥

---

वर्धनं छेदनम् । जातकर्मेति कर्मनामधेयमेतत् । रूपं चास्य गृह्यस्मृतिभ्यो ज्ञातव्यम् । कस्य पुनः कर्मणो जातकर्मेति नाम । तदर्थमुक्तं प्राशनं

द्धिरण्यमधुसर्पिषाम्। अस्येति दारकं व्यपदिशति कर्म वा। अस्य जातकर्मण इदं प्रधानं यन्मन्त्रवत्प्राशनमिति। समन्त्रकं मन्त्रेण कर्तव्यमित्यर्थः। मन्त्रस्य चेहानुक्तत्वात्सर्वस्मृतीनां चैकार्थ्याद्यदन्यत्रोक्तं तदत्रापि प्रतीयते। तेन गृह्यस्मृतिषु ये मन्त्रा उपात्तास्तैर्मन्त्रवदिति।... कठानां गृह्यं बह्वृचां गृह्यमाश्वलायनानां गृह्यमिति यद्येन समाख्यायते स तदुक्तमनुष्ठास्यतीति।... ॥ मे० ॥

नाभिच्छेदनात्पूर्वं पुंसो जातकर्माख्यः संस्कारो विधीयते। अस्य च शिशोस्तदानीं प्रतिददामि मधुनो घृतस्येत्येवमादि मन्त्रयुक्तं हिरण्यमाक्षिकघृतानां प्राशनं कार्यम्। पुंसो ग्रहणं नपुंसकव्यावृत्त्यर्थम्। यद्यर्थिता तु दारैः स्यात्क्लीबादीनामिति नपुंसकस्य दारदर्शनात्।... ॥ गो० ॥

प्राङ्नाभिवर्धनादिति। वर्धनं छेदनम्। जातकर्म तन्नामकं कर्म। मन्त्रवत्... मन्त्रयुक्तं यद्धिरण्यसंसृष्टानां मधुसर्पिषामस्य शिशोः प्राशनं तदपि प्रागेव नाभिच्छेदात्। एतच्च गृह्यसूत्रेषु वर्ण्यते। पुंसो न नपुंसकस्य। स्त्रीणां तु वक्ष्यते ॥ ना० ॥

जातकर्मान्नप्राशनचौलोपनयनानां योग्यकालं दर्शयन् स्वरूपमाह प्रागिति दशभिः। नाभिवर्धनान्नाभिच्छेदनात्। वर्धनं छेदनमित्यमरः।... ॥ रा० ॥

वर्धनं छेदनम् ॥ न० ॥ २९ ॥

---

दशम्यां तिथौ द्वादश्यां वा अस्य दारकस्य नामधेयं कुर्वीत। शिशोर्जयौ न विवक्षितः। तथा च गृह्यम्। दशम्यामुत्थाप्य पिता नाम करोतीति। नामैव नामधेयं येन शब्देन कार्येष्वाह्वयेत तन्नाम प्राङ्नाभिवर्धनात् इति जातकर्मणः प्रभृति दशमीद्वादश्यौ गृह्येते न चन्द्रतिथी। इह केचिद्दशमीग्रहणमशौचनिवृत्तिराश्युपलक्षणार्थं वर्णयन्ति।... ॥ मे० ॥

जातकर्मेति प्रस्तुतत्वात् जन्मप्रभृति दशमेऽहनि द्वादशे वा प्रशस्ते वान्यस्मिन्नवम्यातिरिक्ताद्दोषवर्जिते मुहूर्ते ऽभिजिदादौ लग्ने पुण्ये नक्षत्रे वा

ज्योतिःशास्त्रगुणयुक्ते अस्य शिशोर्नाम कारयेत् । असामर्थ्ये सति शक्तौ वात्मनैव कुर्यात् । पिता नाम करोतीति गृह्यस्मरणात् ।... ॥ गो॰ ॥

नामधेयमिति । नाम्नो व्यवस्थापनम् । दशम्यां तिथौ द्वादश्यां वा कारयेत् । स्वयं करणाशक्तावन्येनापीत्येतदर्थं कारयेदित्युक्तम । मम नाम प्रथमं जातवेदः पिता माता च दधुरिति मन्त्रलिङ्गात् पित्रोरेव मुख्यत्वेनाधिकारात् । तत्र च तिथिङ्कासवृद्ध्योरपि दशमतिथावेव नामधेयम् । न दशमेऽहन्येवेत्येतदर्थं स्त्रीलिङ्गनिर्देशः ।... ॥ ना॰ ॥

नामेति । दशम्यां त्विति पूर्वाशौचनिवृत्तिपरम् । आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते । इति शङ्खोक्तेः ।... ॥ रा॰ ॥

दशम्यां द्वादश्यां तिथौ जन्मदिनाद्दशमे द्वादशे वा दिवस इत्यर्थः । पुण्ये मुहूर्त इत्यन्वयः ॥ नं॰ ॥ ३० ॥

---

मङ्गलाय हितं तत्र साधु वा मङ्गल्यमिति ।... तेन यद्वस्तु किंचित्प्रायेण सर्वस्याभिलाषणीयमगर्हितं पुत्रपशुग्रामकन्याधनादि तद्वचनाः शब्दा नामधेयत्वेन नियोक्तव्याः ।...क्षत्रियस्य बलान्वितं बलसंयुक्तं बलवाचि ।... वैश्यस्य धनसंयुक्तं न चात्र पर्याया एव गृह्यन्ते ।... शूद्रस्य तु जुगुप्सितं कृपणो दीनः शबरक इत्यादि ॥ मे॰ ॥

मङ्गलबलधननिन्दाप्रतिपादकान्येषां यथाक्रमं भद्रशक्तिधनदीनकादीनि नामानि स्युः । उपपदनियमार्थमाह ॥ गो॰ ॥

मङ्गल्यमिति । मङ्गलवत् भद्रमित्यादि । राज्ञः क्षत्रस्य बलसमन्वितमुदयवीर इत्यादि । धनसंयुक्तं धनकरमित्यादि । जुगुप्सितं पाण्डुरित्यादि ।... ॥ ना॰ ॥

मङ्गल्यं मङ्गलशब्दश्रवणेन । बलान्वितं बलसूचकम् । धनसूचकं धनवत्वख्यापकम् । जुगुप्सितं द्विजदासद्विजगुप्तरूपम् । एतान्येवोत्तरपदत्वेन वर्णानुरूपव्यवस्थित्या समाचारान्निगमयति । शर्मवदिति ॥ रा॰ ॥

मङ्गल्यं यथा विष्णुमित्रादि। बलान्वितं परंतपादि। धनसंयुक्तं निधिपालादि। जुगुप्सितं पैलवकादि। अत्र नामधेयमित्यनुकर्षः। कारयेत्पितान्यो वा तत्स्थानीयः। प्रकारान्तरमाह ॥ न० ॥ ३१ ॥

---

अत्र स्वरूपग्रहणं पाठक्रमाच्चादौ मङ्गल्यमन्ते शर्मशब्दस्तथा चोक्तम्।... अर्थग्रहणात्स्वामिदत्तभवभूत्यादिशब्दपरिग्रहः। इन्द्रस्वामी इन्द्राश्रमः इन्द्रदत्तः। तदाश्रयता प्रतीयते। एवं सर्वत्रोन्नेयम्।... ॥ मे० ॥

शर्मरक्षापुष्टिप्रेष्यवाचकान्येषां यथाक्रमं शर्मपालपुष्टदासानुपपदानि स्युः। उदाहरणानि भद्रशर्मा शक्तिपालो धनपुष्टो दीनदास इति ॥ गो० ॥

शर्मवदिति। अन्ते शर्मपदवत्। रक्षासमन्वितं पाल इत्यादिवत्। पुष्टिसंयुक्तमाद्यो गोमीत्यादि धनबाहुल्यख्यातम्। प्रेष्यपदवत् प्रेष्यसंयुक्तं दासादिपदवत् ॥ ना० ॥

यथाह यमः। शर्मदेवश्च विप्रस्य वर्मत्राता च भूभुजः। भूतिदत्तश्च वैश्यस्य दासः शूद्रस्य कारयेदिति। भूतिपदं पुष्टेरुपलक्षणम्। एतेन पूर्वपदे नियमाभावः। द्व्यक्षरं चतुरक्षरं वा नाम कुर्यादिति स्मृतेः ॥ रा० ॥

शर्मवत् सुखवत् सुखप्रकाशनसमर्थकमिति यावत्। एवमुत्तरत्र। यथा सुमन्तुरित्यादि। रक्षासमन्वितं धृतराष्ट्र इति। पुष्टिः समृद्धिः। तेन धनसंयुक्तमित्यनेन पुनरुक्तिः। यथा सुभद्र इति। प्रेष्यसंयुक्तं यथा पशुसख इति। अन्ये तु शर्मादीनां शब्दपरत्वमेवं मन्यन्ते। न त्वर्थपरत्वम् ॥ न० ॥ ३२ ॥

---

पुंस इति विवक्षितत्वात् स्त्रीणामप्राप्तौ नियम्यते। सुखेनोद्यते सुखोद्यं स्त्रीबालैरपि यत्सुखेनोच्चारयितुं शक्यते तत्।... अक्रूरमक्रूरार्थं डाकिनीपुरुषेति। विस्पष्टार्थं यस्यार्थो व्याख्यानगम्यो न भवति।... मनोहरं चित्ताह्लादकरम्। श्रेयसी। विपरीतं तु काकाक्षी शर्मवती रुद्रवतीति। मङ्गलं विपरीतमभागा मन्दभागेति। दीर्घो वर्णो ऽन्ते यस्य विपरीतं शरत। आशिर्म

वदतीत्याशिर्वादम्। अभिधानशब्दः तयोर्विशेषणसमासस्तद्यस्मिन्नस्ति विद्यते तदाशीर्वादाभिधानवत्। सपुत्रा बहुपुत्रा कुलवाहकेति।... अथ मङ्गलस्य आशिर्वादस्य च को विशेषः। न कश्चित्। वृत्तपूरणार्थं तु भेदेनोपादानम्॥ मे०॥

सुखोच्चारमक्रूरार्थवाचि विस्पष्टार्थवाचि विस्पष्टार्थं मनःप्रीतिकरं मङ्गलवाचि दीर्घाक्षरान्तमाशीर्वाचकेनाभिधानेन शब्देन संसक्तं नाम स्त्रीणां कार्यं यथा अमरदेवीति॥ गो०॥

स्त्रीणामिति। सुखोद्यं दुरुच्चाराक्षररहितम्। अक्रूरं हिंसादितीक्ष्णार्थशून्यम्। विस्पष्टार्थं शीघ्रेणार्थप्रत्यायकम्। मनोहरं प्रीतिजनकार्थवत्। मङ्गल्यं शुभहेतुत्वसूचकम्। दीर्घवर्णान्तमीकाराद्यन्तम्। आशीर्वादाभिधानवदाशीर्वादाभिधायि प्रत्ययादियुक्तम्॥ ना०॥

मङ्गलादिसूचकं देवादीनां नाम कार्यम्। शर्मादिपदं त्वर्थपरं तेन शरणमित्यादि। इति मेधातिथिः। सुखोद्यमनायासोच्चार्यम्। अक्रूरं प्रीतिजनकं शर्मदा यशोदेत्यादि॥ रा०॥

सुखोद्यं सुखेन विदितुमुच्चारयितुं शक्यं यथा यशोदेति। अक्रूरार्थं यथा सुमित्रेति। विस्पष्टार्थं यथा चित्राङ्गदेति। मनोहरं यथा चरुयतीति। मङ्गल्यं यथा कल्याणीति। दीर्घवर्णान्तं यथोदितम्। आशीर्वादाभिधानवत्। आशीर्वादकशब्दयुक्तं यथा सुभद्रेति॥ न०॥ ३३॥

---

जन्मचतुर्थे मासे गृहाद्बहिर्निष्क्रमणम्। आदित्यदर्शनं शिशोर्बालस्य कर्तव्यं त्रीन्मासान्क्षीराहार एव।.. शिशुग्रहणं शूद्रस्यापि प्राप्त्यर्थम्। एवं षष्ठे मास्यपि अन्नप्राशनम्। पञ्च मासान्क्षीराहार एव। अयं च सर्वसंस्कारशेषः। तेन नामधेयमुक्तलक्षणव्यतिरेकेणापि यथाकुलधर्मं लभ्यते।...॥ मे०॥

चतुर्थे मासि बालस्य गृहान्निष्क्रमणं कर्तव्यम्। षष्ठे चान्नप्राशनम्। यथा कुलधर्मत्वेन मङ्गलमिष्टं तथा कर्तव्यम्। पूर्वोक्तं वा॥ गो०॥

चतुर्थ इति। जन्मदिनाच्चतुर्थे गृहात्प्रसवगृहात्। षष्ठे मास्यन्नप्राशनं स्वगृह्योक्तविधानवदन्नभक्षणम्।...॥ ना०॥

निष्क्रमणं सूर्यावलोकनार्थं ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनमिति स्मोक्तेः। तृतीये चतुर्थोपलक्षणम्।... ॥ रा०॥

कुलधर्मानुसारेणेत्यर्थः॥ न०॥ ३४॥

---

चूडा शिखा तदर्थं कर्म चूडाकर्म केषुचिन्मूर्धदेशेषु केशानां स्थापनं रचनाविशेषश्चैतच्चूडाकर्मोच्यते। प्रथमे वर्षे तृतीये वा गृह्यस्मृत्या विकल्पः। श्रुतिचोदनादित्यनुवादस्तन्मूलतयैव प्रामाण्यस्योक्तत्वात्।...॥ मे०॥

द्विजातीनां षष्ठे वर्षे तृतीये वा चूडाकरणं धर्मतो धर्मार्थादृष्टार्थं कार्यम्।... अनेनैतद्दर्शयति यदेवं प्रायो वेदलिङ्गमूलाः स्मृतय इति॥ गो०॥

चूडाकर्मेति। सर्वेषां द्विजातीनां न विप्रस्यैव। धर्मतः कुलधर्मानुसारेण शिष्टाचारात्। प्रथमेऽब्दे तृतीये वाब्दे कर्तव्यम्। श्रुतेर्मन्त्ररूपायाश्चोदना लिङ्गतया प्रवर्तकत्वात्। मन्त्रश्च यत्र बाणाः संपतन्ति कुमारा विशिखा इवेति। बाणवत्संपतनयोग्यता हि तृतीय एव संभवतीति॥ ना०॥

तृतीये वर्षे चौलमित्याश्वलायनोक्तेः। श्रुतिचोदनात् यत्र बाणाः संपतन्ति कुमारा विशिखा इवेति श्रुतेः सशिखं तेषां छेदनम्॥ रा०॥

चूडा शिखा। द्विजातिग्रहणेन शूद्रं पर्युदास्यति। धर्मतः कुलधर्मतः। चूडादेशातिशेषस्य गोत्रविशेषेण स्मर्यते। दक्षिणतश्चूडा वासिष्ठानां वामतो भारद्वाजानामुभयतः काश्यपानामिति चूडाकर्मण्यादरातिशयं प्रकाशयति।...॥ न०॥ ३५॥

---

गर्भस्थस्य यः संवत्सरस्तत आरभ्यते योऽष्टमोऽब्दः गर्भशब्दसाहचर्यात्संवत्सरो लक्ष्यते। न हि मुख्यया वृत्त्या गर्भस्य संवत्सरोऽष्टम इति व्यपदेशं लभते। तस्मिन्नुपनायनं ब्राह्मणस्य कुर्वीत। उपनयनमेवोपनायनम्।...॥ मे०॥

गर्भग्रहणं गर्भसंवत्सरादष्टमे संवत्सरे ब्राह्मणस्योपनयनमेवोपनायनं कर्तव्यम्। एवं गर्भैकादशे क्षत्रियस्य। गर्भद्वादशे वैश्यस्य॥ गो०॥

गर्भाष्टमेऽब्द इति। जन्मानुग्रहणादिनादष्टमे। एवमुत्तरत्रापि। उपनयनं पित्रा कार्यमसंभवे अन्येनापि कारयितव्यमित्येतदर्थमुपनायनमिति प्रयोक्तृकव्यापारः पित्रादीनां दर्शिताः। राज्ञः क्षत्रस्य विशो वैश्यस्य॥ ना०॥

नामधेयादिषु जन्मारभ्य कुलसंख्योक्ता। उपनयने सा मा भूदिति गर्भग्रहणम्। गर्भशब्देन च गर्भसहचरितो विवक्षितः। गर्भाष्टमे गर्भादारभ्याष्टमे। उपनयनमेवोपनायनम्। उपनयनात्पूर्वमेव जन्मत एव ब्राह्मण्यमस्तीति सूचितम्। ब्राह्मणस्येति। अब्दसंख्यानियमस्यायमभिप्रायः। ब्रह्मक्षत्रविशां गायत्रत्रैष्टुभजागतैश्छन्दोभिः सहत्वं श्रूयते। तैरेव तेषामुपनयनम्।...॥ न०॥ ३६॥

---

पितृधर्मेणापत्यं व्यादिशति 'ब्रह्मवर्चसी मे पुत्रः स्यादिति पितृकामनया पुत्रो व्यपदिष्टस्तत्कामस्येति पुत्रस्य बालत्वान्नैवंविधा कामना संभवति।... ॥ मे०॥

अध्ययनविज्ञानाद्यतिशयकृतं तेजो ब्रह्मवर्चसं 'बालस्य विशेषविज्ञानाभावात्तद्युक्तः पुत्रो भवेदित्येवंविधा पितृकामना...उपदिश्यते। ब्रह्मवर्चसकाम इति। तस्य ब्राह्मणस्य गर्भपञ्चमे ऽब्दे उपनयनं कार्यम्। एवं क्षत्रियस्य हस्त्यश्वबाहुवीर्यादिबाह्याभ्यन्तरबलार्थिनो गर्भषष्ठे। वैश्यस्य बहुकृष्यादिचेष्टार्थिनो गर्भाष्टमे गर्भसंवत्सराणामेव प्रकृतत्वादनुकल्पमाह ॥ गो०॥

ब्रह्मवर्चसेति। श्रुततपःप्रभृतिरुत्कर्षो ब्रह्मवर्चसम्। पञ्चमे ऽब्दे जन्मत आरभ्य। बलार्थिनः सामर्थ्यातिशयार्थिनः। ईहा कृष्यादावुद्यमातिशयस्तदतिशयार्थिनः। अत्र बालस्य तादृक्कामनाया असंभवे ऽपि तत्पित्रादिकामनया तदेव तदीयत्वामचारेणोपनयनसामाधिकरण्यम्।...॥ ना०॥

ब्रह्मवर्चसं वृत्तं स्वाध्यायनिमित्तं तेजः। बलं हस्त्यश्वादिशरीरं वा। ईहार्थिनः ईहा कृष्यादिचेष्टा।...॥ रा०॥

ब्रह्मतेजो ब्रह्मवर्चसम्॥ न०॥ ३७॥

---

एवं तावन्मुख्यकाम्यावुपनयनकालावुक्तौ। इदानीं पितुरभावे व्याधिना वा कथंचिदनुपनीते माणवके कालातिपत्तावनुपनेयता प्राप्ता।...यावत्षोडशं वर्षं गर्भादारभ्य तावद्ब्राह्मणस्योपनयनार्हता न निवर्तते। सावित्रीशब्देन तदनुवचनसाधनमुपनयनाख्यं कर्म लक्ष्यते। नातिवर्तते नातिक्रान्तकालं भवतीत्यर्थः। एवमा द्वाविंशात्क्षत्रबन्धोः क्षत्रियजातीयस्येत्यर्थः।...द्वाविंशतेः पूरणो द्वाविंशो ऽब्दः तद्धितार्थः। आ चतुर्विंशतेर्विशः। प्राप्तोऽप्यत्र पूरणप्रत्ययो वृत्तानुरोधान्न कृतः। प्रतीयते तु तदर्थः।...॥ मे०॥

छन्दःसु पादाक्षरसदब्दसमवाये उपनयनमिति हारीतदर्शनात्।... षोडशवर्षं यावत् ब्राह्मणस्य सावित्र्यनुवचनसाधनमुपनयनं नातिक्रान्तकालं भवति। द्वाविंशं यावत्क्षत्रजातीयस्य चतुर्विंशं यावद्वैश्यस्य। उपनयनं च पुरुषस्य संस्कारः कार्यः। शरीरसंस्कार इत्याम्नानात्। तदनन्तरं वेदाध्ययनदर्शनात्। ब्रह्मसंस्कारे त्वभ्रान्तिः कार्या तत्रानुमानिकत्वात्॥ गो०॥

आ षोडशादिति। यथोक्तसमय उपनयनाशक्तौ षोडशाब्दसमाप्तिपर्यन्तं ब्राह्मणस्य सावित्री नातिवर्तते नातिक्रान्ता भवति।...॥ ना०॥

...अतिक्रान्ता प्रायश्चित्तं विना अधिकारित्वेन सावित्री पतितान्प्रति सावित्री नाधिगच्छति। पतिता यस्य सावित्री दश वर्षाणि पञ्च चेत्युपक्रम्य सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः। हविष्यं भोजयेदन्नं ब्राह्मणान्सप्त पञ्च वेति यमोक्तं प्रायश्चित्तम्॥ रा०॥

आ षोडशादब्दादाकारो ऽत्राभिविधिवचनः।... सावित्रीप्रधानत्वादुपनयनस्य सावित्रीति तस्य भेदोपचारनिर्देशः। क्षत्रबन्धोः क्षत्रियस्येति यावत्। आ चतुर्विंशतेः आ चतुर्विंशाब्दात्॥ न०॥ ३८॥

---

अस्मात्कालादूर्ध्वं परेण त्रयोऽप्येते वर्णा ब्राह्मणादयो यथाकालं यस्य उपनयनकालस्तत्रानुकल्पितेऽप्यसंस्कृता अकृतोपनयनाः सावित्रीपतिता उपनयनभ्रष्टा भवन्ति व्रात्याश्च संज्ञया आर्यैः शिष्टैर्विगर्हिता निन्दिता व्रात्यसंज्ञया व्यवहारप्रसिद्ध्यर्थोऽयं श्लोकः। अनुपनेयत्वं तु पूर्वेण च सिद्धम्। उक्तमार्यैर्निन्दित इति। का पुनरेषां निन्देत्याह ॥ मे० ॥

एते यथाकालं यो यस्योपनयनकालस्तत्रोपकल्पितेऽप्यसंस्कृताः सन्तोऽस्मात्कालादूर्ध्वं सावित्रीपतिता उपनयनभ्रष्टाः शिष्टविगर्हिताः सन्तो व्रात्यसंज्ञा भवन्ति। संज्ञाविधानं व्रात्यानां याजनं कृत्वेत्येवमादिव्यवहारार्थम् ॥ गो० ॥

अत ऊर्ध्वमिति। यथाकालं षोडशाद्यर्वाक्। सावित्रीपतिताः कालातिक्रमेण सावित्र्या अपगताः।...॥ ना० ॥

अतः षोडशादिभ्यः। असंस्कृता अनुपनीताः। सावित्रीपतिताः सावित्र्युपदेशहीनाः। व्रात्या व्रात्यनामानः।...॥ न० ॥ ३९ ॥

---

एतैर्व्रात्यैरपूतैरकृतप्रायश्चित्तैर्विधिवत्। यादृशो विधिः प्रायश्चित्ते शास्त्रेणोपदिष्टः। तांश्चारयित्वा त्रीन्कृच्छ्रानिति। आपद्यपि हि कर्हिचित्। कस्यांचिदप्यापदि न संबन्धानाचरेत्कुर्यात्तैः सह। किं सर्वसंबन्धनिषेधो नेत्याह। ब्राह्मान्यौनांश्च। ब्रह्म वेदः। तन्निमित्तान्संबन्धान्याजनाध्यापनप्रतिग्रहाः। न ते याज्या न याजकाः कर्तव्याः। एवं नाध्याप्या नैतेभ्यो ऽध्येतव्यम्। वेदार्थविदुषः प्रतिग्रहाधिकारादेषो ऽपि ब्राह्मः संबन्धो भवति। यौनः संबन्धः कन्याया दानादाने। ब्राह्मणग्रहणं प्रदर्शनार्थम्।...॥ मे० ॥

यावद्विधिवत् यथाशास्त्रमेते अपूताः कृतप्रायश्चित्ता न भवन्ति। तावदेतैः सहापद्यपि कदाचिदध्ययनकन्यादानादीन्संबन्धान्ब्राह्मणो नाचरेत् ॥ गो० ॥

नैतैरिति। विधिवत् व्रात्यस्तोमादिना ये न पूतास्तैः। ब्राह्मान् वैदिकान् अध्यापनादिसंबन्धान्। यौनान्कन्यादानप्रतिग्रहश्राद्धादिरूपान्। ब्राह्मण-

इति वचनं क्षत्रादेस्तत्संबन्धे तादृग्दोषाभावकथनार्थम् । ब्राह्मणैरिति पाठे ऽपि तद्दोषाधिक्ये दर्शनार्थं तदिति ग्राह्यम् ॥ ना० ॥

ब्राह्मान्ब्रह्म वेदः तन्निमित्तकान् अध्ययनाध्यापनादीन् । यौनान्ब्राह्माद्यष्टविवाहान् ॥ रा० ॥

अपूतैः अकृतप्रायश्चित्तैः । ब्राह्मानध्ययनाध्यापनादीन् । यौनान्कन्याप्रदानप्रतिग्रहादीन् । अत्र ब्राह्मणशब्दस्त्रैवर्णिकवचनः । एतच्छब्देन प्रकृतवर्णत्रयपरामर्शिना समानाधिकरण्यावगमात् ॥ न० ॥ ४० ॥

---

कृष्णशब्दो यद्यपि कृष्णगुणयुक्ते वस्तुमात्रे वर्तते । कृष्णा गौः कृष्णः कम्बल इति । तथापीह स्मृत्यन्तराद्रौरवसाहचर्याच्च मृग एव प्रतीयते । रुरुर्मृगजातिविशेषः । बस्तः छागः । सर्वत्र विकारे ऽवयवे वा तद्धितः । कृष्णाजिनं ब्राह्मणो रुरुचर्म क्षत्रियो वैश्यश्छागचर्म वसीरन्नाच्छादयेयुः । शणक्षुमोर्णास्तत्र कृतानि च वस्त्राणि । चशब्दः समुच्चये । तत्रानुत्तरीयाणि शाणादीनि चर्माणि उत्तरीयाण्यौचित्यात् ।...॥ मे० ॥

कार्ष्णा इति सामान्याभिधानेऽपि रुरुवर्तिमृगसाहचर्यात् कृष्णमृगरुरुच्छागचर्माणि ब्रह्मचारिण उत्तरीयाणि वसीरन् । चर्माण्युत्तरीयाणीति गृह्यवचनात् । शणक्षुमोर्णामयान्यर्थात्परिधानीयानि वासांसि वसीरन् । आनुपूर्व्यग्रहणं क्रमार्थं शाणं क्षौमं च ब्राह्मणस्येति गृह्यदर्शनात् ।...॥ गो० ॥

कार्ष्णेति कृष्णः कृष्णमृगः । तस्य चर्माद्यैरुत्पादितम् । रौरवं रुरोः । बास्तं छागस्य । एतानि चर्माणि विप्रादयः क्रमाद्वसीरन् उत्तराणि कुर्युः । अजिनं त्वेवोत्तरमित्यापस्तम्बवचनात् । तथा शणातसीमेषरोमसूत्रकृतानि वासांसि क्रमाद्वसीरन् ।..॥ ना० ॥

कार्ष्णं कृष्णहरिणसंबन्धि हारिणमैणेयं वा । कृष्णं ब्राह्मणस्येत्यापस्तम्बस्मरणात् । रुरुर्व्याघ्रः । रुरुनखविलसदिति क्रमदीपिकायाम् । बस्तो ऽजः । एतान्युत्तरीयाणि शाणादीनि वसनानि । तत्र शाणं शाणसूत्रनिर्मितम् ।...॥ रा० ॥

क्षयाः क्षयास्तगाः । रुरुः पृषतस्तगाः । बस्तश्छागविशेषः । तत्संबन्धीनि । ...चार्माण्युत्तरीयाणि शाणादीन्यन्तरीयाणीति विवेकः ॥ न० ॥ ४१ ॥

---

मुञ्जस्तृणविशेषस्तद्विकारो मौञ्जी । सा ब्राह्मणस्य मेखला रशना कार्या मध्यबन्धनी त्रिवृत्त्रिगुणा समा न क्वचित्सूक्ष्मा न क्वचित्सूक्ष्मतरा किं तर्हि सर्वत एव समा श्लक्ष्णा तनुत्वगुणयुक्ता परिघृष्टा च । क्षत्रियस्य पुनर्ज्या धनुर्गुणा सा कदाचिच्चर्ममयी भवति कदाचित्तृणमयी... । मौर्वीति तया धनुषो ऽवतारितया श्रोणीबन्धः कर्तव्यः । यद्यपि त्रिवृत्तादिगुणो मेखलामात्राश्रितो मौञ्ज्या एव तथापि ज्यायाः स्वरूपनाशप्रसङ्गान्न भवति । शणतन्तु विकारः शाणतान्तवी । छान्दसत्वादुत्तरपदवृद्धिः ।...॥ मे० ॥

मुञ्जाख्या कच्छमयी त्रिगुणा समगुणा अपरुषा ब्राह्मणस्य मेखला कार्या क्षत्रियस्य तु मूर्वामयी ज्या धनुर्गुणा मेखला । वैश्यस्य शणसूत्रमयी । अत्र च त्रैगुण्यमनुवर्तते । गुणानामुपेक्षणाद् गृह्यस्मृतौ तु गुणाम्नानात् ॥ गो० ॥

मौञ्जीति । मेखला कटिवेष्टनरज्जुः । मौञ्जी मुञ्जकृता । त्रिवृत्त्रिगुणवलिता । समा मध्ये निम्नोन्नतशून्या । श्लक्ष्णा मृदुस्पर्शा । मौर्वी मौर्वनामौषधिभेदकृता । ज्या धनुषि गुणत्वेनापि कृता । अत एव स्वतस्त्रैगुण्यमन्यथा त्रिवृत्कर्तव्यत्वोपगमापत्तेः । शणतन्तुकृतायां तु त्रिवृत्त्वमन्वीयते विरोधात् ॥ ना० ॥

...मौर्वी ज्या तृणविशेषः । तद्विकृतिः ज्याया धनुषः सैव त्रिगुणा प्रदक्षिणा मेखला भवतीति प्रचेतसो वचनात् । मेखलात्रयं तुल्य त्रयाणाम् ॥ रा० ॥

त्रिवृत्त्रिगुणा समा समगुणा श्लक्ष्णा परिघर्षेण सुस्पर्शा । मूर्वाविकारो मौर्वी । मौर्वीति ज्याविशेषणम् ॥ न० ॥ ॥ ४२ ॥

---

...त्रिवृता ग्रन्थिनैकेन । नायं ग्रन्थिसंख्याभेदो वर्णभेदेन अपि तु प्रत्येक

विकल्पः कुशादिमेखलाखप्ययं ग्रन्थिभेदो धर्मभेदश्चोद्यमानः स्मृत्यन्तर-समाचारस्यानित्यत्वे ऽपि द्रष्टव्यः ॥ मे० ॥

त्रयाणां ब्रह्मचारिणां प्रकृतत्वादभावस्य तुल्यत्वात्कौशादीनां बह्वीनामुपादानम्। मुञ्जालाभे मुञ्जाद्यलाभ इति व्याचक्षते। मुञ्जाद्यभावे कुशादिभिर्यथाक्रमं ब्राह्मणादिभिः कर्तव्याः। कुशादयस्तृणविशेषाः। एताश्च त्रिगुणेन ग्रन्थिनैकेन त्रिभिर्वा पञ्चभिर्वा कार्याः। वाशब्दाद्ग्रन्थीनां विप्रादिभिः क्रमसंबन्धाभावः। ग्रन्थिभेदश्चायं मुख्यास्वपि भवति। वित्तस्य समौऽसि दैव्यो ग्रन्थिरसि मा विश्रंस इति ग्रन्थिं कृत्वेति लौगाक्षिणा मुख्यासु ग्रन्थ्याम्नानात्। ग्रन्थिसंख्याभेदं च त्रैविद्यविदः स्मरन्ति ॥ गो० ॥

मुञ्जालाभ इति। अश्मन्तक उलपः। बल्बजमुञ्जालाभ इति बिसकुशशरमूर्वाशणालाभे क्षत्रियवैश्याभ्यामन्यः सदृशः प्रतिनिधिरवाचनिक एवोपादेयः।...सा च मौञ्जी त्रिगुणा वलिता कटौ त्रिर्वेष्टनेन धार्या। त्रिभिरपि च वेष्टनैरेको ग्रन्थिः। त्रयो वा पञ्च वा। वाशब्दो विप्रादिक्रमेणान्वयनिरासार्थः। केचित्प्रवरसंख्याव्यवस्थायां ग्रन्थिविकल्प इत्याहुः।...॥ ना०॥

...अश्मन्तको मालबतृणमिति नारायणः सर्वज्ञः*। बल्बज इति बाव इति प्रसिद्धं तृणम्। वाशब्दो ऽत्र याद‍ृच्छिकार्थः तेन ग्रन्थीनां विप्रादिषु न क्रमनियमः। यथाकुलाचारं व्यवस्था। यथा च त्रिवृता गुणत्रयेण मेखला कार्येत्यध्याहार्यमित्यनूद्यग्रन्थविधिः ॥ रा० ॥

मुञ्जाग्रहणं मौर्वीशाणतन्त्वोरप्युपलक्षणम्। कुशादयो विप्रादीनां यथासंख्यमश्मन्तकं दारुविशेषकत्वात्। बल्बजस्तृणविशेषः। अत्र मेखलेत्यनुषज्यते। मेखलानां मुख्यानुकल्पोक्तानां ग्रन्थिविकल्प उत्तरार्धेनोक्तः। त्रिवृता त्रिगुणेनैकेन ग्रन्थिना। त्रिविद्भिस्त्रिभिर्ग्रन्थिभिः। पञ्चभिर्वोपलक्षिता। त्रयाणां वर्णानामविशेषेण ग्रन्थिकल्पो ऽयमुक्तः ॥ न० ॥ ४३ ॥

---

* This quotation cannot be traced in the Deccan College copy of Nârâyana's Commentary.

उपवीतशब्देन वासोविन्यासविशेष उच्यते । वक्ष्यत्युद्धृते दक्षिणे पाणा-विति ।..ऊर्ध्वंवृ मूर्ध्वा दिशं प्रति वर्तते चेष्टते । त्रिवृत्त्रिगुणं कर्तनि-काभ्यो लब्धसूत्रभावस्य त्रिगुणीकृतवेदमूर्ध्वनिवर्तनं विधीयते ।...अविको मेषस्तस्य सूत्रं तेन कृतम् ।...अविकसूत्रिकमिति वा पठितव्यम् ।...॥ मे० ॥

भाविन्युपवीतसंज्ञा यस्य विशिष्टविज्ञानस्य तद्विप्रादीनां कार्पासशणोर्णा-मयं यथाक्रमं कार्यम् । त्रिवृत्त्रिगुणं सदूर्ध्ववृतं दक्षिणावर्तवलितम् ॥ गो० ॥

उपवीतं ब्रह्मसूत्रं त्रिवृत् त्रिसूत्रकम् । तच्चोर्ध्ववृतं प्रदक्षिणवलितम् । तान्यपि सूत्राणि त्रिभिः सूत्रैः कृतानीति स्मृत्यन्तरसिद्धम् । तानि चा-प्रदक्षिणवलितानि सामर्थ्यात् । अविकेन सूत्रेण कृतमाविकसूत्रिकम् ॥ ना० ॥

ऊर्ध्ववृतमूर्ध्वाकारेण वृतं त्रिगुणितं यत्सूत्रमधोवृतम् । त्रिवृत्तदेव त्रिवृत्कार्यम् । तदुक्तं छन्दोगपरिशिष्टे । ऊर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रय-मधोवृतम् । त्रिवृतं चोपवीत स्यात्तस्यैको ग्रन्थिरिष्यते ।...॥ रा० ॥

कार्पासविकारः कार्पाससूत्रमिति यावत् । ऊर्ध्ववृतं सव्यहस्ततले न्यस्य दक्षिणहस्ततलेनोर्ध्वमावर्तितम् ।...आविकसूत्रिकमविभवमाविकं रोमेति यावत् । सूत्रिकं सूत्रनिर्मितम् । अविरोमसूत्रनिर्मितमित्यर्थः ॥ न० ॥ ४४ ॥

---

सत्यपि द्वन्द्वनिर्देशे गुणविधिष्वेकत्वश्रवणात् केशान्तिक इति प्रति-गृह्येप्सितं दण्डमिति च विकल्पितमेकधारणं प्रतीयते । बैल्वः पालाशो ब्राह्मणस्य दण्ड इति गृह्यते । गौतमीये चैकदण्डग्रहणमेवोक्तम् । इह केवला दण्डनीतिः श्रूयते । दण्डानर्हन्ति । दण्डा एते ब्रह्मचारिणा योग्याः कस्यां क्रियायामित्येतदत्र चोक्तमुत्तरत्र भविष्यति प्रतिगृह्येप्सितमिति । तस्मिंश्च ग्रहणे दण्डस्योपायत्वाद्विवक्षितमेकत्वम् ।...बिल्वपलाशवटखदिर-पीलूदुम्बरा वृक्षजातिविशेषनामधेयानि । बिल्वस्य विकारो ऽवयवो वा बैल्वः । एवं सर्वत्र । प्रदर्शनार्थाश्चैते यज्ञिया वा सर्वेषामिति वचनात् । एतान्दण्डान्वक्ष्यमाणे कार्ये अर्हन्ति । धर्मतः शास्त्रतः ॥ मे० ॥

बैल्वः पालाशो वा ब्राह्मणस्य दण्ड इत्यादि वसिष्ठस्मरणात् । प्रतिगृह्येप्सितं दण्डमिति चेहैव दर्शनाद्विकल्पेन द्वौ द्वौ दण्डौ बिल्वपलाशवटखदिरपीलूदुम्बराख्यवृक्षाणां ब्राह्मणादयो गृह्णन्ति ॥ गो० ॥

धर्मतः कुलशीलानुरोधेन । द्वयोर्द्वयोरन्यतरो बिल्वादिर्यस्य कुले यः परिगृहीत इत्यर्थः । अत एवात्र विकल्पाश्रवणे ऽपि द्विजदण्डसमुच्चयः शंक्यः । प्रतिगृह्येप्सितं दण्डमिति वक्ष्यमाणत्वात् । औदुम्बरः काष्ठसाहचर्यान्न ताम्रमयः ॥ ना० ॥

बैल्वपालाशावित्यादिषु द्विकेषु साहित्यबोधने विकल्पः । वक्ष्यति प्रतिगृह्येप्सितं दण्डमिति । एकवचनं बैल्वः पालाशो वा ब्राह्मणदण्ड इति वासिष्ठे विकल्पदर्शनात् ॥ रा० ॥

अत्र द्वन्द्वनिर्देशे ऽपि दण्डानां विकल्प एव विवक्षितः । प्रतिगृह्येप्सितं दण्डमित्येकवचननिर्देशेन वक्ष्यमाणत्वात् ॥ न० ॥ ४५ ॥

---

...केशान्तं गच्छति प्राप्नोतीति केशान्तको मूर्धप्रमाणः । पादाग्रादारभ्य मूर्धावधेः केशान्तगः । केशा वा अन्तो ऽस्येति केशान्तकः । समासान्तः ककारः । प्रमाणतः प्रमाणेनानेन युक्तो दण्डः कार्यः कारयितव्यो ब्राह्मणस्याचार्येण । ललाटसंमितो ललाटान्तमितः ललाटान्तप्रमाणः । ललाटमात्रे चतुरङ्गुलेन मीयमानस्य दण्डशब्दवाच्यत्वाभावादेवं व्याख्यायते । पादाग्रादारभ्य ललाटान्तप्राप्तः । एवं विश वैश्यस्य नासान्तग इति ॥ मे० ॥

केशललाटनासिकासमीपप्रमाणा यथाक्रमं ब्राह्मणादीनां दण्डाः कार्याः ॥ गो० ॥

केशान्तक इति । केश एवान्तो ऽवच्छेदो यस्येति । ललाटोपरिष्ठकेशपर्यन्त इत्यर्थः । ललाटसंमितो ललाटादधोमितः ॥ ना० ॥

केशान्तग इति मेधातिथिः । केशान्तश्च मूर्धावधिः ।...केशान्तिक इति च पाठे ऽपि स एवार्थः ॥ रा० ॥

ललाटसंमितः ललाटान्तः ॥ न० ॥ ४६ ॥

---

ऋजवः अवक्राः। सर्वे इत्यनुवादः प्रकृतत्वाविशेषात्। अव्रणा अच्छिद्राः। सौम्यं प्रियकरं दर्शनमेषां ते सौम्यदर्शनाः। वर्णपरिशुद्धा अकुटिलाश्च। अनुद्वेगकरास्ते न कश्चिदुद्वेजयितव्यः। श्वा वा मनुष्यो वा। नृणामिति प्रदर्शनार्थम्। सत्वच सतष्ठाः। अनग्निदूषिताः वैद्युतेन दावाग्निना वा-स्पृष्टाः॥ मे०॥

ते दण्डा...भीषणीयाकाररहिताः सत्वचो ऽग्निदोषशून्याः स्युः। न च तैः किंचिद्भूतजातमुद्वेजनीयम्॥ गो०॥

अव्रणा मध्ये काष्ठभागभेदशून्याः। सौम्यदर्शना भयाहेतवः। अनुद्वेग-करा निम्नोन्नतादिदोषेणाधृत्यहेतवः। नाग्निदूषिता अग्निसंबन्धेन भष्ट-पूर्वरूपाः॥ ना०॥

अव्रणाश्छिद्ररहिताः। अनुद्वेगकरा नातिस्थूलाः॥ रा०॥ ४७॥

---

प्राकृतेषु चर्मसु मेखलाबन्धनं कर्तव्यम्। आबध्य मेखलामुपनयनं कर्तव्यम्। कृते चोपवीते दण्डग्रहणम्। दण्डं गृहीत्वा भास्करमादित्यमुपस्थाय अभिमुखं स्थित्वा आदित्यदैवतमन्त्रैरुपस्थानमादित्यस्य कर्तव्यं गृह्यान्मन्त्रा-वगमः।...प्रदक्षिणं परीत्य सर्वतो गत्वाग्निं चरेत्कुर्याद्भैक्षं भिक्षाणां समूहो भैक्षं तच्चरेद्याचेत। यथाविधीति वक्ष्यमाणविध्यनुवादः। भिक्षाशब्देन स्वल्पपरिमाणं भक्ताद्युच्यते॥ मे०॥

आप्तमिष्टं संस्कृतं दण्डं गृहीत्वादित्यं चाभिध्यायाग्निं प्रदक्षिणीकृत्य भैक्षं यथाशास्त्रं चरेत्। कथमित्यत आह॥ गो०॥

ईप्सितमुपनयनकाल एव नियतत्वेन परिगृहीतजातीयं मध्ये विजातीय-ग्रहणनिषेधार्थमेतत्। उपस्थाय सौरैर्मन्त्रैः। परीत्य वेष्टयित्वाग्निमग्रे तद्भिक्षाक्रम्। यथाविधि वक्ष्यमाणविधिना॥ ना०॥

परीत्याग्निं परिक्रम्य प्रदक्षिणं यथा स्यात्तथा न सव्यापसव्येन भिक्षेत भैक्षं समूहम्॥ रा०॥

वैकल्पिकयोरन्यतरमीप्सितम् । भिक्षैव भैक्षम् । भिक्षां चाचरेत्कुर्यात् । ब्रह्मचारीति शेषः ॥ न० ॥ ४८ ॥

---

भिक्षाप्रार्थनावाक्यमत्र भैक्षशब्देनोच्यते । तस्य हि भवच्छब्दपूर्वता संभवति । न भक्तादेरर्थस्य । स्त्रीणां च प्रथमं भिक्षमाणतयोपदेशात्प्रार्थनायां च प्रार्थ्यमानस्य संबोध्यत्वात्संबद्धिविभक्त्यन्तः स्त्रीलिङ्गो भवच्छब्दः प्रयोक्तव्यः । क्रम एव चात्रादृष्टार्थो नियम्यते । यथार्थं तु शब्दप्रयोगो भवति । भिक्षां देहीति । कुतः पुनः संस्कृतशब्दार्थलाभः । यावता स्त्रियः संबोध्यन्ते तास्च संस्कारं नावबुध्यते ।...तथैव शिष्टा असाधूनपशब्दैकदेशसादृश्येन साधूनां स्मृत्यार्थं प्रतियन्ति । असाधुरनुमानेन वाचक इति दर्शने च गाशब्दाभिसादृश्याद्गोशब्दमनुस्मारयति । ततो ऽर्थप्रतिपत्तेरेवं स्त्रियः सादृश्यात्साधुभ्यो साधूनुत्पन्नसंबन्धात्स्मृत्वा तेभ्यो ऽर्थं प्रत्येष्यन्ति । स्वल्पाक्षरं चैतत्पदत्रयं सर्वत्र प्रसिद्धं स्त्रीभिरपि सुज्ञातम् । एवं भवन्मध्यं क्षत्रियः । भिक्षां भवति देहीति ।...॥ मे० ॥

भवति देहीत्येवं भवच्छब्दपूर्वं भिक्षाप्रार्थनावाक्यं ब्राह्मण उच्चारयेत् । एवं भिक्षां भवति देहीति भवन्मध्यं क्षत्रियो भिक्षा देहि भवतीति भवदुत्तरं वैश्यः ॥ गो० ॥

चरेदिति याच्ञां लक्षयति ।..तेन भिक्षां देहीति वाक्यरचनार्थसिद्धा । ...भवति भिक्षां देहीति प्रार्थनावाक्यम् ॥ ना० ॥

भवति भिक्षां देहि भिक्षा भवति देहि देहि भवतीत्येवं प्रयोगः ॥ रा० ॥

भवत्पूर्वं भवतीति शब्दात्पूर्वमुपनयनाङ्गत्वेनोक्तोऽप्ययं भिक्षाचरणविधिः सार्वत्रिकः प्रत्येतव्यः । पूर्वं स्त्रियमेव मन्त्रं भिक्षेत न पुमांसमित्याह ॥ न० ॥ ४९ ॥

---

मात्रादयः शब्दाः प्रसिद्धार्थाः । निजा सोदर्या । या चैनं न विमानयेत् । ...या स्त्री एतं ब्रह्मचारिणं न विमानयेत् । विमानना अवज्ञानम् । न

दीयत इति प्रत्याख्यानम्। तथा च गृह्यम्। अप्रत्याख्यायिनमग्रे भिक्षेता-प्रत्याख्यायिनीं वेति। तदेव हि सुखं प्राथम्यं यदुपनीयमानस्याहरहस्तु न विमानना भयमाश्रयणीयम्॥ मे०॥

मातुर्भगिनी मातृष्वसा। प्रथममुपनयनाङ्गभूतां भिक्षामेतां याचेन्नान्यां या च प्रत्याख्यानेन ब्रह्मचारिणं नावमानयेत्। निजा सोदरा॥ गो०॥

एष गुरोः कुले न भिक्षेतेत्यादेर्वक्ष्यमाणनिषेधस्यापवादः। अतस्तत्रापि गुरुपदमाचार्यपरमेव। तेन पितुराचार्यत्वे ऽपि तद्गृहे भिक्षणं न निषिद्धम्। निजा सोदरां भिक्षेत याचेत्। प्रथमतो भिक्षारम्भे नित्यं याचनमित्यव-शिष्टे ऽपि स्त्रीणां लिङ्गनिर्देशात् स्त्रीष्वेव भैक्षचरणम्॥ ना०॥

अप्रत्याख्यायिनीं चाग्रे भिक्षेतेति गृह्योक्तेः। अतो मातरं प्रथमं भिक्षेत निजां सोदरा या चान्यापि न विमानयेत्। न तिरस्कुर्यात्। विमानितो बालो ब्रह्मचर्यव्रते क्षुब्धः स्यादित्यर्थः॥ रा०॥

विमानं नाम प्रत्याख्यानम्।...॥ न०॥ ५०॥

---

समाहृत्येति शब्दो बहुभ्य आहरणं दर्शयति। नैकस्याः सकाशाद्बहवो गृहीतव्याः।...यावदर्थं यावता भैक्षेण तृप्त्याख्यप्रयोजननिर्वृत्तिर्न बहु-भिक्षितव्यम्। अमायया निवेद्य गुरवे न कदन्नेन संस्कृतमन्नं प्रच्छाद्य कदन्नं गुरोः प्रच्छादयेत् कदन्नं गुरोः प्रकाशयेत्कदन्नं किलैष न ग्रहीष्यती-त्यनया बुद्ध्या। निवेदनमिदं प्राप्तमिति प्रकटीकरणम्। अगृहीते गुरुणा-नुज्ञातो ऽश्नीयात्। ..आचम्य प्राङ्मुखः आचमने प्राङ्मुखतेयमानन्तर्यादिति केचित्। तदयुक्तम्। प्रागुदङ्मुख इत्याचमने दिङ्नियमो भविष्यति। तस्माद्भोजनेनैव संबन्धः। शुचिश्चण्डालादिदर्शनमशुचिदेशाक्रमनिष्ठी-वनादि कृताचमनस्य भोजनकाले तेन निषिध्यते॥ मे०॥

तद्भैक्षं यावदर्थं तृप्तिपरिमाणममायया कदन्नपरिहारेण बहु आहृत्य गुरवे निवेद्य तेनानुगृहीतं सदाचम्य शुचिः सन्प्राङ्मुखो ऽश्नीयादिति

दिङ्नियमो नित्यमाचम्य उपस्पृश्य द्विजो नित्यमिति । वक्ष्यमाणविध्यनुवादस्तच्च खानीत्यादिनास्य सविशेषस्य चोदिष्यमाणत्वात् ॥ गो० ॥

यावदर्थं यथावत्त्वोपयुक्तम् । अमायया प्रतरणाद्यकृत्वा । निवेद्य उपदर्श्य प्राङ्मुख आचम्येति । भोजनाङ्ग आचमन उदङ्मुखतानिवृत्तिः । न तु प्राङ्मुखो ऽश्नीयादित्यर्थः । उपस्पृश्य द्विजो नित्यमित्याचमनस्य विधास्यमानत्वेन अत्राचम्येति विधौ पौनरुक्त्यादिति केचित् । केचित्तु तत्रोपस्पृश्येति स्नात्वेत्यर्थः । तथा चात्राचमनं नित्यतया प्राङ्मुखत्वं च विधीयत इत्याहुः । शुचिः कृतशौचो नाप्रयतः ।... ॥ ना० ॥

अमायया निवेद्य न तु दम्भेन तदन्नं प्रच्छाद्यान्यत्र स्थापयित्वा वा किंचित्तं निवेदयेदिति । अष्टौ ग्रासा मुनेः प्रोक्ताः षोडशारण्यवासिनः । द्वात्रिंशतं गृहस्थस्य यथेष्टं ब्रह्मचारिण इति ग्रासनियमाभावपरम् । न तु बहुवारपरम् । अत उक्तं यावदर्थं यावदुदरपरिपूर्तिः ।... ॥ रा० ॥

भैक्षं भिक्षासमूहम् । यावदर्थं यावत्तृप्त्याशनम् । अमायया रागद्वेषपरित्यागेन गुरवे निवेद्य गुरुमनुज्ञाप्येत्यर्थः ।... ॥ न० ॥ ५१ ॥

---

निष्कामस्य प्राङ्मुखस्य भोजनं विहितं नित्यतया । इदानीं काम्या विधय उच्यन्ते । आयुषे हितमायुष्यं प्राङ्मुखो भुङ्क्त इति । यदि तद्भोजनादायुः प्राप्यते तत आयुष्यं तद्भवति ।...एवं यशःकामी दक्षिणामुखः इमे काम्या एव विधयः ।...श्रियं भोजनात्प्राप्नोति ।...ऋतं सत्यं यज्ञश्च तत्फलं वा स्वर्गः । स्वर्गकाम उदङ्मुखो भुञ्जीत ।... ॥ मे० ॥

आयुषे हितमन्नं प्राङ्मुखो भुङ्क्ते ।.. यशसे हितं दक्षिणामुखः । श्रियमिच्छन्प्रत्यङ्मुखः । ऋतं सत्यं तत्फलहेतुत्वादन्नमृतमुदङ्मुखो भुङ्क्ते ॥ गो० ॥

यत्र भुङ्क्ते तदायुष्यमायुषे हितमिति योज्यम् । यदुदङ्मुखो भुङ्क्ते तच्छ्रियम् । भुङ्क्त इत्यावर्तनीयम् । एवमृतमित्यत्रापि । ऋतं यज्ञः सत्यं च ॥ ना० ॥

चमसेनापः प्रणयेद्गोदोहेन पशुकामस्य इत्यत्र श्रुतौ चमसमुपलक्षणीकृत्य दक्षिणामुखादिप्रवेशो यथोक्तफलाय ।... ॥ रा० ॥

प्राङ्मुखो यदन्नं भुङ्क्ते तदायुष्यं भुङ्क्ते। तदायुष्यकाममित्यर्थः। दक्षिणामुखो भुङ्क्ते तद्यशस्यं भुङ्क्ते तद्यशस्करमित्यर्थः। पश्चान्मुखो यद्भुङ्क्ते तच्छ्रियं श्रीनिमित्तं श्रीकरमित्यर्थः। उदङ्मुखो यद्भुङ्क्ते तदृतमृतनिमित्तं भुङ्क्ते सत्यवादित्वनिमित्तमित्यर्थः॥ न०॥ ५२॥

---

...समाहितः भुज्यमानं द्रव्यं स्वात्मशक्तिं चावेक्षमाणः। अन्यचेतस्कस्य हि गुरुविरुद्धवादादिवर्जनं सात्म्यभोजनं च न स्यात्। भुक्त्वा चोपस्पृशेत्। स्नेहादिलेपापनयनं द्रव्यशुद्धावुक्तम्। कृते तस्मिन्भुक्तवत इदमाचमनं विधीयते॥...॥ मे०॥

सर्वदा ब्रह्मचर्यादूर्ध्वमपि द्विज आचम्यान्नं समाहितोऽनन्यमना भुञ्जीत। भुक्त्वा च यथाशास्त्रमुपस्पृशेत्। अद्भिश्च खानीन्द्रियच्छिद्राणि चोपस्पृशेत्।...॥ गो०॥

समाहितः वैश्वानरोपासनादिचित्तसमाधिमान्। भुक्त्वा चोपस्पृशेदाचामेत्। तथा प्राणादिक्रियाशक्त्यधिष्ठातृदेवतानामाप्यायनं प्राणाहुतिभिः कृतत्वात्। बुद्धिशक्त्यात्मकबुद्धीन्द्रियाधिष्ठातृदेवतानामाप्यायनार्थं खानि बुद्धीन्द्रियाधिष्ठानच्छिद्राण्यद्भिः सहितेन हस्तेनोपस्पृशेदित्याचमनाङ्गखस्पर्शनादन्यद्भोजनाङ्गमेतद्विहितम्। आचमनाङ्गं तु वक्ष्यति। एतच्चोपस्पृश्येत्यादि। गृहस्थानामपीति कथयितुं नित्यमित्युक्तम्। सर्वदा यावज्जीवमित्यर्थः॥ ना०॥

उपस्पृशेदाचामेद्वामहस्तस्थाभिरद्भिः सम्यग्यथाशास्त्रं खानि शीर्षण्यानि इन्द्रियाणि॥ रा०॥

उपस्पृश्य आचम्य नित्यमाश्रमान्तरेऽपि समाहितः अनन्यपरः। खानि नेत्रादीनि अद्भिः सह॥ न०॥ ५३॥

---

पूजयेद्देवतारूपेण पश्येत्। एषा वै परमा देवता यदन्नं तस्य सर्वेषां भूतानां स्रष्टृत्वेन स्थितिहेतुतया च यद्दर्शनं सास्य पूजा। अथवा प्राणार्थत्वेन भावनं ध्यायन्।...॥ मे०॥

सर्वदान्नं पूजयेदेव तात्त्विन प्राणार्थत्वेन चाध्यायेदनिन्दयंश्चैतदन्नमद्यात्। दृष्ट्वा च तुष्येत्प्रसीदेच्च हेत्वन्तरजमपि खेदं जह्यात् प्रतिनन्देत् अद्ध्यात् नित्यमेतन्मे स्यादित्येवं सर्वशः सर्वप्रकारम्॥ गो०॥

पितुं नो स्तोषमित्यादि मन्त्रैरन्नस्तुतिः पूजा। अकुत्सयन्नीदृग्विधमेतदन्नमित्याद्यवदन्। हृष्येत्संतोषं कुर्यात्। प्रसीदेत्कालुष्यं मनसः प्रसादान्निवर्तयेत्। प्रतिनन्देत्प्रीतिद्योतकवचनाद्युच्चारयेत्॥ ना०॥

अश्नीत इत्यशनमन्नं पूजयेद्धृष्टदृष्ट्या पश्येत्। अकुत्सयन्ननिन्दयन्। हृष्येत् अहो प्राणदृष्टिर्भविष्यतीति प्रसीदेत् तत्काले प्रकारान्तरोपस्थितं खेदं त्यजेत्। अभिनन्देत् नित्यं मे स्यादिति॥ रा०॥

नित्यमाश्रमान्तरेऽपि पूजयेद्देवतामिव सत्कुर्यात्।...॥ न०॥ ५४॥

---

पूर्वविधिशेषोऽयमर्थवादो न तु फलविधिः। फलविधौ हि काम्योऽयं विधिः स्यात्। ऊर्जकामस्य बलकामस्य च। ततश्च नित्यशब्दो नोपपद्यते। पूजितं ह्यशनं नित्यमिति। अतोऽयं यावज्जीविकः प्राङ्मुखतावन्नियमः। अपूजितं भुक्तं ह्युभयं नाशयेदिति। बलमूर्जं च। बलं सामर्थ्यमनायासेन भारोद्यमनादिशक्तता कस्यापि। ऊर्जं महाप्राणता अङ्गोपचयः महाकायो महाबलत्वं च भवति॥ मे०॥

यस्मात्पूजितमन्नं सामर्थ्यं वीर्यं च ददाति। अपूजितं तु तद्भुक्तमुभयं नाशयति। तस्मात्पूजितमद्यादिति। प्रशस्तस्तुतिः फलार्थत्वनित्यतापत्तेः॥ गो०॥

बलं सामर्थ्यम्। ऊर्जमुत्साहम्॥ ना०॥

बलं दैहिकम्। ऊर्जमप्रयत्नोपस्थितान्नम्। व्यतिरेके दोषमाह अपूजितमिति। भुक्तं भुज्यत इति अन्नमुभयं बलमूर्जं च॥ रा०॥

पूजितमित्यस्यापि भुक्तमित्यवकृष्य संबध्यते। नित्यबलं शाश्वतबलम्। ऊर्जमुत्साहम्। उभयमिदं बलमूर्जं च॥ न०॥ ५५॥

---

पात्रस्थमन्नमास्यस्पर्शदूषितमुच्छिष्टमुच्यते। तन्न कस्यचिद्दद्यात्।... अन्तराशब्दो मध्यवचनः। द्वौ भोजनकालौ सायं प्रातश्च। ततोऽन्यस्मिन काले न भुञ्जीत। अथवा व्यवधाने अन्तराशब्दः। त्यक्तभोजनव्यापारः क्रियान्तरेण व्यवधानाय पुनस्तदेव प्राक् पात्रगृहीतं न भुञ्जीत। केचित्तु विच्छेदमन्तरमाचक्षते।...तत्र यः सत्येन पात्रस्यानुग्रहस्तदनन्तरम्। न चैवात्यशनमतिमात्रमशनं न कुर्यात्। एतच्चानारोग्यकारणम्।...न चोच्छिष्टः क्वचिद्व्रजेत्। अतश्च उच्छिष्टमपनीय शुचित्वमापादिते तस्मिन्नेव देशे आचान्तव्यम्॥ मे०॥

उच्छिष्टं कस्यचिदपि न दद्यात्तथान्तरा सायंप्रातःकालयोर्मध्ये नाद्यात्सायंप्रातर्भोजनस्यौचित्यप्राप्तत्वादन्तराशब्दस्य मध्यवाचित्वादेवं लभ्यते। अतिमात्रभोजनं न कर्यादुच्छिष्टश्च न क्वचिद्गच्छेत्॥ गो०॥

उच्छिष्टं पात्रोच्छेषणम्। एतदन्नं सायंप्रातराशयोर्मध्ये नाद्यात्। अत्यशनं शक्यजरणादन्नादधिकस्यान्नस्याशनम्। क्वचिदुच्छिष्टः संनिकर्षादन्यत्र॥ ना०॥

...अन्तरा मध्याह्नसायाह्नकालीनयोर्भोजनयोर्मध्ये नाद्याद्ब्रह्मचार्यपि। सायंप्रातर्द्विजातीनामशनं देवनिर्मितमिति भोजनद्वयप्राप्तेः। अत्यशनमतीव निन्दितमिति दृष्टादृष्टार्थमाह॥ रा०॥

एतदुच्छिष्टमन्तरा भोजनमध्ये भुक्तोच्छिष्टमाचार्यपित्रादिभिर्दत्तं नाद्यात्॥ न०॥ ५६॥

---

...अनारोग्यं व्याध्युत्पत्तिदारोदरादिपीडा विसूचिकादिना जीवितनाशः। अनायुष्यं सर्वत एवात्मानं गोपायेदिति शरीरपरिरक्षादिव्यतिक्रमादस्वर्ग्यम्। नरकप्राप्तिः स्वर्गाभावेन प्रतिपाद्यते। अपुण्यं दौर्भाग्य करम्। लोकविद्विष्टं बहुभोजितया निन्द्यते। तस्मात्कारणात्त्यशन वर्जयेन्न कुर्यात्॥ मे०॥

यस्माद्रोगहेतुत्वादनारोग्यकृदिति च प्राणहरं विष्टाधिकाद्युत्पातात-

ष्यनायुष्यं च । अस्वर्ग्यं च दृष्टार्थजनकत्वे ऽपि शास्त्रचोदनासामर्थ्यादति-क्रमेण कर्मान्तरार्जितस्वर्गोपभोगप्रतिबन्धत्वादपुण्यं च तद्धेतुत्वाल्लोकविद्विष्टं च बहुभोजनमवलोक्य गर्हयां तस्मात्तत्परिवर्जयेदिति सद्भूतदोषकथनेन प्रकृतिनिन्दार्थवादो विद्वेषणार्थः॥ गो० ॥

रोगजनकत्वादनायुष्यम् । तत एव स्वविहितकर्माशक्तिहेतुत्वादस्वर्ग्यम-पुण्यं च । अपुण्यं पापं तद्धेतुरप्यपुण्यम् । लोकविद्विष्टं बहुयमश्नातीति प्रसिद्धे लोकद्वेषकरत्वात् । भर्त्योपरोधसंभवाच ॥ ना० ॥

अनारोग्यं बहुतराग्निनो विशूचिकादिदर्शनात् । अनायुष्यमजीर्णेन धातुक्षयात् ॥ रा० ॥

अनारोग्यमनारोग्यकरम् । तस्मादनायुष्यम् । नियमातिक्रमहेतुत्वाद-पुण्यम् । तस्मादपुण्यम् ॥ न० ॥ ५७ ॥

---

तीर्थशब्देन पवित्रमुदकाधिकरणमुच्यते । तारायणाय पापप्रमोचनाय च तिष्ठतीति तीर्थम् । क्वचित्तु तरन्त्यनेनेति तीर्थम् । उदकावतरणमार्गः । इह तूदकाधारमार्गः ।.. तेनोपस्पृशेदाचामेत् । ब्राह्मेणेत्येतदपि स्तुत्यर्थमेव । ब्रह्मा देवतास्य ।...कः प्रजापतिः स देवतास्येति कायम् । एवं त्रिदशा देवतास्येति त्रैदशिकम् ।... ॥ मे० ॥

ब्राह्मेण तीर्थेन प्राजापत्यदैवाभ्यां वा विप्रो यावज्जीवमुपस्पृशेत्...विप्र-ग्रहणं क्षत्रियादिप्रदर्शनार्थमुपस्पृश्य द्विजो नित्यमित्येतयोरपि प्रकृतत्वात् । अप्रसिद्धत्वाल्लक्षणमाह ॥ गो० ॥

नित्यकालं गार्हस्थ्यादिकालेऽपि । कथंचित्तत्र व्रणादिनाचमनासंभवे कायत्रैदशिकाभ्यां तयोरन्यतरेणेत्यर्थः । कायं प्राजापत्यम् । तयोर्व्रणादि-दूषणत्वे तीर्थेनैवाचामेन्न तु तीर्थसाम्यात्पित्र्येणैतदथ पित्र्येणेत्युक्तम् ।... ॥ ना० ॥

आचमनाङ्गतीर्थान्याह । ब्राह्मेणेति कः प्रजापतिः तस्येदं तथा त्रैदशिकं त्रिदशा देवास्तेषामिदम् । ब्राह्मेणेत्याद्युक्तम् । तल्लक्षणान्याह ॥ रा० ॥

ब्राह्मेण हिरण्यगर्भदैवत्येन। तदभावे कायेन क इति प्रजापतिरुक्तः॥ न० ॥ ५८ ॥

---

अङ्गुष्ठस्य मूलमधोभागस्तस्य तलप्रदेशो ब्राह्मं तीर्थम्। हस्ताभ्यन्तरं तलमाह।... हस्तमध्ये अङ्गुलीनां मूले दण्डरेखाया ऊर्ध्वं कायम्। अग्रे अङ्गुलीनां दैवम्। उपसर्जनीभूतो ऽपि मूले अङ्गुलिशब्दः सापेक्षत्वादग्रशब्दस्य संबध्यते। पित्र्यं तयोरधः। अत्रापि गुणीभूतस्याङ्गुलिशब्दस्य अङ्गुष्ठस्य च संबन्धः। प्रदेशिनी चात्राङ्गुलिर्विवक्षिता। तयोरधः अन्तरं पित्र्यं स्मृत्यन्तरशिष्टप्रसिद्धसामर्थ्यादेवं व्याख्यायते।...॥ मे० ॥

ब्राह्मणस्य दक्षिणहस्ते पञ्च तीर्थानि भवन्तीति प्रचेतसः स्मरणात्। दक्षिणस्याङ्गुष्ठमूलस्याधोभागे ब्राह्मं तीर्थं प्रचक्षते। कायमङ्गुलीनां मूले ऽग्रे दैवम्। अङ्गुलीनामेवाग्रशब्दस्य साकांक्षत्वात्पित्र्यं तयोरधः। तयोरित्यस्यापि साकांक्षत्वात्प्रकृतेनाङ्गुष्ठाङ्गुलिना संबन्धः॥ गो० ॥

एतस्य ब्राह्मणस्य दक्षिणहस्ते पञ्च तीर्थानीति प्रचेतःस्मृतेर्दक्षिण एव। अङ्गुष्ठमूलस्य तल इति करस्याधोभागं मध्यमभिप्रैति। ब्राह्मं ब्रह्मदैवतम्। एवं कायादौ। काये अङ्गुलिपदं कनिष्ठोपलक्षणम्। कनिष्ठा देशिनीति याज्ञवल्क्यवचनात्। अग्र इत्यत्राङ्गुलिपदमन्वीयते। तच्च सर्वाङ्गुलिपरम्।...॥ ना० ॥

अङ्गुलिमूले कनिष्ठिकाङ्गुलिमूले। अग्रे साङ्गुष्ठानामङ्गुलीनां तयोरङ्गुष्ठदेशिन्योः।...॥ रा० ॥

अङ्गुष्ठमूलस्य तले हस्ततलमूलमध्ये या रेखा तस्या मूले ब्राह्मतीर्थं। अङ्गुलीमूलं नाम तलमध्यप्रदेशः। तत्र हि मूलमङ्गुलीनां चतसृणाम्। तच्च कायम्। अग्रे तलस्याग्रे अङ्गुलीनां चतसृणां प्रथमपर्वणीत्यर्थः। तच्च देवतीर्थं तयोरङ्गुष्ठाङ्गुलयोरधः प्रदेशिन्यङ्गुष्ठयोर्मध्यमित्यर्थः। तच्च पितृतीर्थम्। एवं व्याख्यानं स्मृत्यन्तरैः संगच्छते॥ न० ॥ ५९ ॥

---

अन्यतमेन तीर्थेन त्रिरप उदकमाचामेदास्येन जठरं प्रवेशयेत् । तत उदकभक्षणानन्तरं द्विःस्त्रामेन मुखमोष्ठद्वयं परिमृज्यात् ।... खानि छिद्राणि च उपस्पृशेदद्भिरहस्तगृहीताभिः । स्पर्शनमेवोपस्पर्शनं मुखस्य च प्रकृतत्वात् मुख्यानामेष स्पर्शविधिः । गौतमस्त्वाह । खानि चोपस्पृशेच्छीर्षण्यानि । आत्मानमिति हृदयं नाभिं वा निर्दिशति ।.. ॥ मे० ॥

प्रथमं त्रीन्वारानपत्तीर्थेनाचामेत्ततः आस्यं द्वौ वारौ अपि शोधयेत्तदनु च खानि इन्द्रियच्छिद्राणि अद्भिः स्पृशेत्ततः आत्मस्थानं हृदयमथो शिर इति ॥ गो० ॥

आचामेत्पिबेदुक्ततीर्थेन । मुखं मुखरन्ध्रम् ।... अद्भिरिति वचनादार्द्रत्वेऽपि पुनः पुनर्जलमुपस्पर्शः कार्य इत्युक्तम् । आत्मानमिति तत्स्थानं हृदयम् ॥ ना० ॥

...खानि शीर्षण्यानि इन्द्रियाणि चक्षुःश्रोत्रनासिकाः । हृदयम् । उक्तानुवादप्रायोऽयम् ॥ रा० ॥

मुखमास्यमोष्ठमिति यावत् । अद्भिः सह । आत्मानं हृदयम् ॥ न० ॥६०॥

---

उष्णशब्दः क्वाथोपलक्षणार्थः । तथा हि पठ्यते । अश्रिताभिरद्भिरिति । एवं च ग्रीष्मोष्णतप्ताः स्वभावोष्णाश्च न प्रतिषिध्यन्ते । फेनग्रहणं बुद्बुदानामपि प्रदर्शनार्थम् । पठितं च । हीनाभिः फेनबुद्बुदैरिति । तीर्थेन धर्मविदिति वृत्तपूरणमेव । शौचमाप्तुमिच्छुः शौचेप्सुः शुद्धिकाम इत्यर्थः । नान्यथा शुद्धो भवति ।...एकान्ते शुचौ देशे । एकान्तो हि जनैरनाकीर्णः प्रायेण शुचिर्भवति । प्रागुदङ्मुखः । मुखशब्दः प्रत्येकमभिसंबध्यते । प्राङ्मुख उदङ्मुखो वा ।. ॥ मे० ॥

अशृताभिरद्भिरिति शङ्कस्मरणादग्निसंपर्करहिताभिः फेनशून्याभिरद्भिरुक्तेन तीर्थेन विद्वान् शुद्धिकाम एकान्ते शुचौ देशे उदङ्मुखो वाचामेत् । किंप्रमाणा अप आचामेदित्यत आह ॥ गो० ॥

शङ्कस्मृतावग्निकृतमौष्ण्यं निषिद्धम्। एकान्ते केचिदस्पृशन्। प्रागुदङ्मुखः प्राङ्मुख उदङ्मुखो वा ॥ ना० ॥

तीर्थेन ब्राह्मेणेत्युक्तेन । शौचेप्सुः शुचितामिच्छुः ।... ॥ रा० ॥

अनुष्णाभिरनग्नितप्ताभिः ।... ॥ न० ॥ ६१ ॥

---

उक्तमाचमनं तीर्थेनाद्यां भक्षणम्। परिमाणं तु नोक्तम्। अतस्तदवधारणार्थमिदमाह । हृदयं गच्छन्ति प्राप्नुवन्तीति हृद्गाः।...पूयते पवित्रतां प्राप्नोति। अशुचित्वं व्यावर्तते।...कण्ठगाभिः कण्ठमात्रव्यापिनीभिः। भूमिपः क्षत्रियः। भूमेराधिपत्यं क्षत्रियस्य विहितं तेन प्रसिद्धेन कर्मणा क्षत्रियजातिर्लक्ष्यते।...वैश्यः प्राशिताभिः अन्तरास्यप्रवेशिताः कण्ठमप्राप्ता अपि शुद्धिहेतवो वैश्यस्य। शूद्रः स्पृष्टाभिरन्ततः।...अन्तशब्दोऽयं समीपवचनोऽप्यस्ति। उदकान्तं गतः। उदकसमीपमिति गम्यते।... ॥ मे० ॥

हृदयप्राप्ताभिरद्भिर्विप्रः शुध्यति । कण्ठप्राप्ताभिः क्षत्रियो वैश्यः प्राशिताभिस्तालुगाभिर्हृत्कण्ठतालुगाभिरिति याज्ञवल्क्यस्मरणात्। शूद्रोऽन्ततः आचमनस्य प्रकृतत्वाज्जिह्वोष्ठास्यान्ते स्पृष्टाभिः। .. ॥ गो० ॥

हृद्गाः हृदयं प्राप्ताः। यावत्य आपो हृदयप्राप्तियोग्याः ताभिः पीत्वा यावद्धृदयप्राप्तिस्तावत्प्रतीच्य तत्पर्यन्तपानमित्यर्थसिद्धम् । प्राशिताभिर्वक्त्रविवरप्रवेशमात्रेण। अन्ततो मुखरन्ध्रान्तभागेन स्पृष्टाभिः संबद्धाभिरित्यर्थः ॥ ना० ॥

प्राशिताभिर्जिह्वागताभिः । अन्ततः अन्तेनोष्ठेनेत्यर्थः ॥ न० ॥ ६२ ॥

---

...कण्ठसज्जने कण्ठसज्जनं सङ्गः स्थापनम्। यदा वस्त्रस्य सूत्रस्य वान्यतरोऽपि बाहुरुद्ध्रियते तदा निवीती भवति ॥ मे० ॥

कार्पाससमुपवीतं स्यादुक्तलक्षणमुपवीते कण्ठसज्जने कण्ठप्रक्षिप्ते सति निवीती भवत्येवं स्थिते सति उद्धृते दक्षिणे बाहावुपवीती भवति। उद्धृते प्राचीनावीत्येवं लक्षणद्वयप्रसिद्ध्यर्थमेतन्निवीतलक्षणं मनुष्यकार्यार्थं च निवीतं

मनुष्याणामिति श्रुतेः प्राचीनावीतीति संज्ञावृत्तानुरोधात्तु प्राचीनमावीती-त्युक्तमेतच्च पित्र्ये कर्मणि॥ गो०॥

उद्धृते ब्रह्मसूत्रोपरि स्थिते ऽर्थात्सव्ये ऽधःस्थे सव्ये उद्धृते अर्थादन्यस्मिन्न-धःस्थे। प्राचीनमावीती प्राचीनावीती। पाणावित्युभयत्र बाहुपरम्। कण्ठसज्जने कण्ठमावेष्ट्य बाहुद्वयोपरि उपवीतसङ्गे। अर्थात्पुरतो लम्ब-माने॥ ना०॥

उपवीतं देवानां निवीतं मनुष्याणां प्राचीनावीतं पितृणामिति श्रुते-र्दक्षिणं बाहुमुद्धृत्य सव्ये ऽंसे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बं भवति। एवं यज्ञोपवीतीत्यादि श्रुतेः। अत एवाभिधानमुपवीतं यज्ञसूत्रम्। प्रोद्धृते दक्षिणे करे प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितमिति यज्ञोपवीतमा-श्रित्य त्रितयविधिरिति॥ रा०॥ ६३॥

---

विनष्टानामप्सु प्रासनमन्येषां च ग्रहणमत्र विधीयते। प्रासनग्रहणयोः पौर्वापर्यं यथाश्रुतमेव।...॥ मे०॥

विनष्टानि मेखलादीनि अप्सु प्रक्षिप्यान्यानि समन्त्रकाणि गृह्णीयात्तानि यथा च बौधायनेन सर्वेषां मन्त्र आम्नातः।...॥ गो०॥

प्रासनमादौ। ततो ऽन्यग्रहणं पूर्वपरिग्रहकालप्रयुक्तमन्त्रैः। कमण्डलावपि बौधायनेन मन्त्रः पठितः॥ ना०॥

...मन्त्रवदिति क्रियाविशेषेण स्वस्वगृह्योक्तेन मन्त्रेण गृह्णीयादित्यर्थः॥ रा०॥

विनष्टानि जीर्णानि ध्वस्तानि वा। कमण्डलुधारणस्य पूर्वमविहितत्वा-न्मेखलादिवदवश्यं भावो नाभिप्रेतव्य इत्यवगन्तव्यम्॥ न०॥ ६४॥

---

केशान्तो नाम संस्कारः गर्भषोडशे वर्षे ब्राह्मणस्य कर्तव्यः। तस्य च स्वरू-पपरिज्ञानं गृह्यमेव शरणम्। द्वे वर्षे अधिके यस्य द्वाविंशस्य तस्मिन्द्व्यधिके द्वाविंशे। अथवा कालमात्रमन्यपदार्थः। ततो द्वाविंशाद्वर्षाद् द्व्यधिके काले वैश्यस्य दिशब्दस्य वर्षाण्येव संख्येयानि प्रकृतानि निश्चितानि॥ मे०॥

केशान्ताख्यसंस्कारो ब्राह्मणादीनां यथाक्रमं षोडशद्वाविंशचतुर्विंशेषु वर्षेषु विधीयते। प्राङ्नाभिवर्धनात्पुंस इति पुंसग्रहणस्य स्त्र्यर्थत्वे प्रमाणा-भावात्स्त्रीणामप्राप्त इत्यत आह ॥ गो० ॥

सर्वान्केशान्वापयन्त इति। क्वचिद्गृह्ये विकल्पेन गोदानकर्मणि सर्वकेश-वपनविधेस्तेनोपलक्षणेन गोदानकर्म केशान्त उच्यते। केशानामन्तोऽत्रेति व्युत्पत्त्या ॥ ना० ॥

षोडश इत्या गर्भात्। तथा च बौधायनः। केशान्ताख्यः स्वगृह्योक्त-संस्कारो गर्भादिसंख्या वर्षाणाम् ॥ रा० ॥

षोडशे जन्मत आरभ्य।... ॥ न० ॥ ६५ ॥

---

इयमावृदशेषतः स्त्रीणाममन्त्रिका कार्या जातकर्मण आरभ्येयं संस्कारा-णामावृत् परिपाटी सेति कर्तव्यता। कः संस्कारकलाप इति यावत्संस्का-रार्थं शुद्ध्यर्थं शरीरस्य पुंसामेव स्त्रीणामपि। प्रयोजनमाह। यथाकालं यस्मिन्काले यः संस्कार उक्तः। तं कालमनतिक्रम्य।... ॥ मे० ॥

एषा सकलसंस्कारपद्धतिः कालक्रमानतिक्रमणेन स्त्रीणां संस्कारार्थं मन्त्रवर्जिता कार्या। एवमुपनयनेऽप्यमन्त्रके प्राप्त आह ॥ गो० ॥

प्राङ्नाभिवर्धनात्पुंस इत्यनुवर्तते ऽतः स्त्रीणामप्राप्तौ विधिः। इयमावृज्जा-तकर्मादिक्रियापरिपाटी। गर्भाधानादेस्तत्पूर्वकर्मणः स्त्रीत्वानिश्चयेनामन्त्र-कत्वायोगात्। अशेषतः सकलाङ्गवती।... ॥ ना० ॥

आवृज्जातकर्मादिक्रियाकलापः परिपाटी। अमन्त्रिका अत्रोपयुक्ता होमास्तु समन्त्रका एव ॥ रा० ॥

आवृत्प्रयोगक्रियेति यावत्। उपनयनं तासां समन्त्रकम्। तच्च विवाह एवेत्याह ॥ न० ॥ ६६ ॥

---

पूर्वया वृद्धवचनेन जातकर्मादिवदुपनयनेऽप्यमन्त्रके प्राप्ते तदापत्तिवचन विवाहस्य तन्निवृत्त्यर्थमारभ्यते। वेदग्रहणार्थो वैदिकः। संस्कार उप-

नयनाख्यो यः स स्त्रीणां वैवाहिको विधिः। विवाहेभवो विवाहविषयो विवाहसाध्यः। अतो विवाहस्योपनयनस्थाने विहितत्वात्तस्य निवृत्तिर्यदि विवाहमन्त्रकार्यं कृत्स्नप्राप्तं वेदाध्ययनं प्राप्ता च व्रतचर्या उपनयनं नाम मा भूत्। एतदुभयमपि निवर्तयति। पतिसेवा गुरौ वासः पतिं यत्सेवते उपचरत्याराधयति स एवास्या गुरौ वसतिः।...॥ मे०॥

यद्विवाहविधानं तदेवासां वैदिकसंस्कारोपनयनस्थाने। पतिसेवा च गुरुशुश्रूषास्थाने गृहकृत्य चाग्निपरिचरणस्थाने॥ गो०॥

उपनयनं तु न कार्यं तासां विवाहसंस्कारस्य तत्स्थानीयत्वादित्यर्थः। वैदिको वेदाधिगमार्थ उपनयनरूपः। धर्मातिदेशार्थं तदङ्गसंपादनोक्ता पतिसेवेति। यथा गुरुशुश्रूषा व्रतिनस्तेनैव प्रकारेण स्त्रिया पतिः शुश्रूष्यः। यथा चाप्रमादेनाग्न्युपचरणं तच्च तथा गृहार्थेषु गृहप्रयोजनेषु पाकादिष्व-प्रमत्तया भाव्यमित्यर्थः। परिक्रिया परिचर्या शूद्रस्य तु द्विजसेवैव गुरौ वास इयि ग्राह्यम्॥ ना०॥

वैवाहिको वक्ष्यमाणविवाहसंबन्धी संस्कारः उपनयनसंस्कारस्थापनीयः। तेन तन्निवृत्तिः। वैदिकः वेदमन्त्रकृतः। विवाहस्तु समन्त्रक इत्युक्तेः। तासां पतिसेवैव गुरुकुलवासतया विधीयते। अकरणे प्रत्यवायस्मरणात्। करणे च स्तुतिस्मरणात्।...॥ रा०॥

संस्कार उपनयनम्। वैदिकः समन्त्रकः।..॥ न०॥ ६७॥

---

प्रकरणोपसंहारः। एतावदुपनयनप्रकरणम्।...उत्पत्तिव्यञ्जकः जातो ऽप्यजातसमो ऽनुपनीतो ऽधिकाराभावात्। अतो ऽयं विधिरुत्पत्तिव्यञ्जकः पुण्य इत्युक्तार्थम्। उपनीतस्याध्ययनकर्मणा योगः संबन्धो ऽधिकारो यत्ते-नोपनीतेन कर्तव्यम्। तदिदानीं वक्ष्यमाणं निबोधत॥ मे०॥

एष द्विजातीनामुपनयनभवो विधिरुक्त उत्पत्तेर्व्यञ्जकः प्रकाशको जात-स्याप्यनुपनीतस्याजातसमत्वात् पुण्यहेतुत्वात्पुण्य इदानीमुपनीतस्योपनयन कर्मणि संबन्धस्तच्छृणुत॥ गो०॥

उपनयनसंबन्धी उत्पत्तेर्द्वितीयस्या द्विजत्वरूपाया व्यञ्जको जनकः। कर्म-योगमुपनीतस्य कर्मणा संबन्धम् ॥ ना० ॥

औपनायनिक उपनयनसंबन्धी उपनयनपर्यन्तो वा। उपनीतस्य येन कर्मणा योगस्तम्। उत्पत्तिव्यञ्जक उत्पत्तेर्द्वितीयजन्मनो व्यञ्जकः पुण्यस्त-त्प्रदः ॥ रा० ॥

कर्मयोगं कर्माभ्यासम्।... कर्मयोग्यामिति च पठन्ति ॥ न० ॥ ६८ ॥

---

शिक्षयेत् व्युत्पादयेत्। शौचमादितः। आदित इति वचनेनाचारादिभ्यः प्रागुपदेशः शौचस्येष्यते। किं तर्हि। अनियतक्रमकाः परस्परमेते केवल-मुपनयनानन्तरं व्रतादेशनं वक्ष्यति। आदिष्टवेदव्रतस्य च वेदाध्ययनम्। अतोऽग्नीन्धनसंध्योपासनयोः समन्त्रकत्वादकृते व्रतादेशे मन्त्रोच्चारणाप्राप्तं विधीयते। शौचं चानियतकालं तदवश्यं तदहरेवोपदेष्टव्यम्। एवमाचारो ऽपि। अत इदमादित वचनमादरार्थम्। न प्रथमोपदेश्यतां शौचस्य विधत्ते। शौचमेका लिङ्ग इत्याद्याचमनान्तम्। आचार्यादीनां प्रत्युत्थाना-सनदानाभिवादनादि। अग्निकार्यमग्न्याधानं कार्यम्। समित्समिन्धनम्। संध्यायामादित्यस्योपासनम्। तत्स्वरूपभावनं संध्याया एवं वा उपासनं पूर्वां संध्यामित्यादि। एष व्रतधर्मः। अध्ययनधर्मानिदानीमाह ॥ मे० ॥

गुरुः शिष्यस्योपनयनं कृत्वादौ प्रथमत एव शौचं शिक्षयेदशुद्धस्य सर्वत्रानधिकारात्तत आचारं प्रत्युत्थानाद्यग्निकार्यं च। सायंप्रातरग्निप्रक्षे-पादिसाध्यकर्मानुष्ठानं च शिक्षयेत् ॥ गो० ॥

शौचं मृज्जलपरिमाणनियमादिविशिष्टम्। आदितः पूर्वम्। आचार-मभिवादनादि। अग्निकार्यं समिदाधानम्। संध्योपासनं संध्यात्रयस्याचर-णम् ॥ ना० ॥

लिङ्गसंख्ये विवक्षिते अष्टवर्षं ब्राह्मणमुपनयीतेत्यादि श्रुतेः। जातिं च पशुमालभेतेतितत्।... ॥ रा० ॥

शौचं हस्तपादादिप्रक्षालनम्। आचारमाचमनादिकम्। आध्ययननियमानाह ॥ न० ॥ ६९ ॥

---

अध्ययने प्रवर्तमानः अध्ययनमारभमाणः अध्येतुमिच्छन्निति यावत्। उदङ्मुखो ऽध्याप्यः। गौतमीये तु प्राङ्मुखो वा शिष्यः प्रत्यङ्मुखश्चाचार्य इति। आचान्तो यथाशास्त्रमिति। प्रागुक्तमाचमनविधिं स्मारयति। ब्रह्माञ्जलिः कृतो येनेति।... ब्रह्माञ्जलिकृदिति वा पाठः। लघुवासा धौतवासाः प्रक्षालनेन लघुनी वाससी भवतः। अतो लघुत्वेन वाससः शुद्धिर्लक्ष्यते।... जितानि नियमितानीन्द्रियाणि उभयान्यपि येन स जितेन्द्रियः। न इतस्ततो वीक्षेत न यत्किंचन ब्रूयादध्ययने ऽवहितो भवेदित्युक्तं भवति ॥ मे० ॥

प्रत्यासन्नाध्ययनः शिष्यः कृतशास्त्रचोदितेति कर्तव्यतायुक्ताचमनः कृतवक्ष्यमाणब्रह्माञ्जलिरस्थूलवसनः सञ्जितेन्द्रिय उदङ्मुख अध्याप्यः ॥ गो० ॥

...लघुवासाः स्वल्पवासाः। जितेन्द्रियो ऽनन्यमनाः ॥ मा० ॥

लघुवासा गुरुतो लघुवासाः पवित्रवासा वा। एवंविध एवाध्याप्यः ॥ रा० ॥

लघुवासा अनुल्बणवस्त्रः।... ॥ न० ॥ ७० ॥

---

ब्रह्मशब्दो ऽयमनेकार्थो ऽपि अध्ययनाधिकारादत्र वेदवचनः प्रतीयते। तस्यारम्भे निमित्तसप्तम्येषा। वेदाध्ययनमारिप्सानो गुरोः पादोपग्रहणं कुर्यात्। कृत्वा ततः स्वाध्यायाक्षराण्युच्चारयेत्।... संहत्य संलग्नौ संश्लिष्टौ परस्परं कृत्वाध्येयम्। कच्छपकर्ण इति यः संनिवेशो हस्तयोः प्रसिद्धः तथा कर्तव्यो ब्रह्माञ्जलिः। पदार्थकथनमेतत् ॥ मे० ॥

आन्वहिकवेदपाठारम्भान्तयोः सदाहरहर्गुरोः पादोपसंग्रहणं कर्तव्यम्। संहतौ च कच्छपके इति प्रसिद्धसंनिवेशेन हस्तौ कृत्वाध्येतव्यम्। यस्मात्स ब्रह्माञ्जलिशब्देनोच्यत इत्यृषिभिः स्मृतः ॥ इत्यलौकिकत्वाद्ब्रह्माञ्जलिस्वरूपनिरूपणम्। कथं पुनः पादोपसंग्रहणं कर्तव्यमित्यत आह ॥ गो० ॥

सदा प्रत्यहं संहृत्य हस्तौ हस्ततले संमील्य। उपसंग्रहणप्रकारमाह॥ ना०॥

ब्रह्मारम्भे वेदस्याध्ययनसमाप्त्योः॥ रा०॥

सदा अहरहर्ग्राह्यौ ब्रह्मचारिणा। कथं ग्राह्यौ पादावित्यपेक्षायामाह॥ न०॥ ७१॥

---

यदुपसंग्रहणं पूर्वश्लोके गुरोरुक्तं तद्व्यत्यस्तपाणिना कर्तव्यम्। कीदृशः पुनः पाण्योर्व्यत्यासः कर्तव्य इत्यत आह। तेन सव्येन हस्तेन सव्यः पादः स्प्रष्टव्यः स्पर्शः कर्तव्यो न तु चिरं निपीड्यासितव्यम्। एष च व्यत्यासो युगपदसमाचारेण हस्तयोर्भवति। अग्रतः स्थितेन संमुखेन गुरोरुपसंग्रहणं कर्तव्यम्। तत्र वामो दक्षिणमार्गं नीयते दक्षिणो वाममित्येवं सव्येन सव्यः स्पृष्टो भवति दक्षिणेन च दक्षिणः। इत्येष पाणिव्यत्यासः। अन्ये तु विन्यस्तपाणिनेति पठन्ति।...॥ मे०॥

इतरेतरदिगर्पितहस्तेन गुरोः पादोपसंग्रहणं कर्तव्यम्। वामेन च हस्तेन वामपादः स्पर्शनीयः। दक्षिणेन तु दक्षिणः॥ गो०॥

व्यत्यस्तौ दक्षिणोत्तरौ स्वस्तिकाकारेण संहतौ पाणी यस्य। एवं चार्थादाभिमुख्येनाभिवादने सव्येन हस्तेन सव्यस्य पादस्य स्पर्शः प्राप्तः तथापि पर्यङ्कबन्धादिवशाद् व्यत्यस्तपाद एवास्ते गुरुः तत्र पाणिव्यत्यासो न कार्यः।...॥ ना०॥

व्यत्यस्तेति। उपसंग्रहणं पादयोरिति शेषः।...॥ रा०॥

उपसंग्रहणं गुरुपादस्पर्शः। अस्य व्याख्यानमुत्तरार्धम्। सव्येन पाणिना सव्यः पादः॥ न०॥ ७२॥

---

अध्येष्यमाणमिति प्राग्व्याख्यातानि पदानि। गुरोरयं नियोगः। गुरोर्यदा माणवको ऽध्यापयितुमभिलषितस्तदाधीष्व भो इत्यामन्त्रयितव्यः। अनामन्त्रितेन न गुरुः खेदयितव्यः। उपदिश्यानुवाकमिति। उक्तं च आह-

तस्याप्यधीयीतेति । विरामो ऽस्त्वित्येतं शब्दमुच्चार्यारमेत् निवर्तेत ।...॥ मे० ॥

प्रत्यासन्नोध्ययनं शिष्यमनलसो गुरुः सर्वकालमधीष्व भो इति ब्रूयात् । विरामोऽस्त्विति चोक्तानन्तरमध्यापनान्निवर्तेत ॥ गो० ॥

अध्येष्यमाणस्त्विति । अध्ययनार्थं शिष्यो गुरुमधीष्वेति ब्रूयात्स्वाध्याये विरामो ऽस्त्विति ब्रूयात् । अत्र पाठे अधीष्वेत्यन्तर्भावितव्यम् । शिष्येण गुरुं प्रति वाच्यम् । अध्येष्यमाणं तु गुरुरिति क्वचित्पाठः । तत्र गुरुणा तद्वाच्यम् ॥ ना० ॥

गुरुशिष्ययोर्नियममाह । अध्येष्यमाणं त्विति त्रिभिः । अध्येष्यमाणं शिष्यमधीष्व भो इति ब्रूयात् । तथा विरामो ऽस्त्वित्युक्तारमेत् । निवर्तेत स शिष्य इति शेषः ॥ रा० ॥

...ब्रूयाद्ब्रह्मचारी ॥ न० ॥ ७३ ॥

---

अत्रापि पूर्वोक्तेन न्यायेन ब्राह्मण आदावन्ते च प्रणवं कुर्यात् । ब्रह्म-विषयाया अध्ययनक्रियाया इति द्रष्टव्यम् । प्रणवशब्द ओंकारवचनः । तथा च वक्ष्यति । स्रवत्यनोंकृतमिति ।.. स्रवतीति विशीर्यत इत्युभाभ्या-मपि नैष्फल्यमध्ययनस्य प्रतिपाद्यते । अधीतं ब्रह्म यस्मिन्कर्मणि विनि-युज्यते तन्निष्फलं भवतीति । निन्दार्थवादश्च पाकार्थं निषिक्तस्याप्राप्तपाक-क्षीरादेरवच्छिद्रिते भाजने य इतस्ततो विक्षेपः प्रच्यवणं तत्स्रवतीत्युच्यते । लब्धपाकस्य पिण्डीभूतस्य भोग्यता प्राप्तस्य यो विनाशः स विशरणम् ॥ मे० ॥

वेदपाठस्यारम्भान्तयोरोंकारं सर्वदा ग्रहणार्थे ऽध्यापनकालात्कालान्तरे ऽपि कुर्यात् । यस्मात् यस्य ब्रह्मणः पूर्वमो न कृतं तत्स्रवति । गृहीतमपि विस्मृत्य गच्छति । परस्ताच्च विशीर्यते । यस्य न कृतं ततस्तद्विशीर्यते । नैव गृह्यते ॥ गो० ॥

आदावन्ते च प्रणवं कुर्यादुपादध्यात् । सर्वदा ब्रह्मयज्ञादावपि । पूर्वं प्राक् गृहीतं स्रवति नश्यति । परस्ताद् ग्रहीष्यमाणं विशीर्यते ग्रहणकाल एव सम्यङ् न गृह्यते ॥ ना० ॥

ब्राह्मणो वेदस्य पूर्वमनोङ्कृतं ब्रह्म स्रवति च स्वरवर्णतः विशीर्यते यदध्य-धीतं तदपि विस्मृतं स्यादिति प्रणवोच्चारणार्थवादः ॥ रा० ॥

ब्राह्मणो वेदस्याधीतस्य प्रदेशस्यादावन्ते च सर्वदा आम्नमान्तरे ऽपि।... ॥ न० ॥ ७४ ॥

---

कूलशब्दो दर्भाग्रवचनः। तान्पर्युपासीनः तेषु प्रागग्रेषु दर्भेषु उपविष्ट इत्यर्थः।... पवित्रैर्दर्भैरेवमादितः शुचित्वमापादितः। अघमर्षणादिस्तु मन्त्रो नेह पवित्रशब्देनोच्यते। ब्रह्मचारिणस्तदानीमनधीतत्वात्तेषाम्।... ॥ मे० ॥

प्राणोपस्पर्शनं दर्भैः प्राक्कूलेष्वासनं चेति गौतमस्मरणात्। प्रागग्रेषु दर्भेष्वासीनो ऽत एव च पवित्रैर्दर्भैरेव प्राणस्थानाद्धृदयस्पृष्टैः पवित्रीकृत-प्राणायामैश्च श्वासनिरोधरूपैस्त्रिभिः प्राणायामः त्रिपञ्चदश मात्रा इति गौतमोक्तप्राणायामैः पवित्रीकृतः। तत ओंकारं पूर्वोक्तं कर्तुं योग्यो भवति ॥ गो० ॥

कूलमग्रं प्रागग्रेषु दर्भेषु परितो वेष्टयित्वा स्थितेष्वासीनः पवित्रैर्दर्भैः पावितः। यथा गौतमः। प्राणोपस्पर्शनं दर्भैरिति। प्राणा इन्द्रियाणि प्राणदेशो हृदयं वा ॥ ना० ॥

प्राक्कूलान्प्रागग्रान्। कुशानिति शेषः। पवित्रैः हस्तद्वयस्थितकुशैः ॥ रा० ॥

...पवित्रैर्मन्त्रप्रोक्षणादिभिः ॥ न० ॥ ७५ ॥

---

पूर्वस्य विधेरर्थवादः। अक्षरत्रयसंहाररूप ओंकारस्तत्रैकैकस्य उत्पत्ति-माह। वेदत्रयात्त्रिभ्यो वेदेभ्यो निरदूहत्। उद्धृतवान्। यथा दध्नो घृत-मुद्ध्रियते। न केवलमक्षरत्रयं यावदिदमपरं भूर्भुवः स्वरिति ॥ मे० ॥

अकारोकारमकारात्मकः किलोंकार एतच्चाक्षरत्रयं वेदत्रयात्सारभूतं प्रजापतिरुद्धृतवान्। तथा भूर्भुवः स्वरित्येतच्च महाव्याहृतित्रयमुद्धृतवान्। ...॥ गो० ॥

प्रणवस्य प्रकृतस्तुतौ कार्यायां व्याहृतिगायत्र्योः स्तुतिस्तयोरप्यादौ

जपार्था। ओंकारमात्रजपस्तु प्रागुक्तस्तदसंभवे। निरदुहदुद्धृतवान्। इतीति चेतीतिद्वयेन प्रकारद्वयाभिधानेन भूर्भुवः स्वरित्येवंप्रकारा व्याहृतयः संगृहीताः ॥ ना० ॥

वेदत्रयादृग्यजुःसामभ्यः। निरदुहदुद्धृतवान्। दध्न इव नवनवम् ॥ रा० ॥

वेदत्रयान्निविद्येत्यन्वयः। ततोऽयमर्थः। यथा अकारादिवर्णानि निरवहत्। एवं भूर्भुवःस्वरिति च निरवहदिति ॥ न० ॥ ७६ ॥

---

अयं तत्सवितुर्वरेण्यमित्येतस्या गायत्र्या उत्पत्त्यर्थवादो विधानार्थः।... परमेष्ठीति हिरण्यगर्भः।... ॥ मे० ॥

तत्सवितुर्वरेण्यमित्यस्याः सवितृदेवताकाया ऋचः पादं पादं यथाक्रमं त्रिभ्य एव वेदेभ्यः परमेष्ठी हिरण्यगर्भः प्रजापतिः उद्धृतवान् इत्ययमध्ययनकालविध्यर्थः सावित्र्यर्थवादः ॥ गो० ॥

अदूदुहत्सारप्राप्त्यर्थमाकृष्टवान्।... ॥ ना० ॥

तदित्यृचः। तत्सवितुरित्याद्याया ऋचः। परमेष्ठी हिरण्यगर्भः। आपो ज्योतिरित्यादि शिरो विज्ञेयम्। सव्याहृतिसप्रणवा गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यत इति स्मृतेः।... ॥ रा० ॥

...अदूदुहदधुक्षत् ॥ न० ॥ ७७ ॥

---

एतदक्षरमित्योंकारस्य प्रतिनिर्देशः।... तत्सवितुर्वरेण्यमिति सावित्रीं व्याहृतयः पूर्विका यस्याः तां व्याहृतिपूर्विकां तिस्रः प्रकृता एव व्याहृतयो गृह्यन्ते।... ॥ मे० ॥

एतदोंकाराख्यमक्षरमेतां च सावित्रीं भूर्भुवःस्वरित्येतद्व्याहृतिपूर्विकां वेदार्थज्ञो विप्रः संध्ययोर्जपन्समस्तवेदपुण्येन संबध्यते। इति विद्वान् ब्राह्मणः संध्याजपसंभूतं फलमाहात्म्यकथनेन प्रकृतिविधित्रयस्तुतिः ॥ गो० ॥

वेदविदिति। वेदाध्ययनवान्। ननु गायत्रीमात्रसारोऽपीति स्तुतिदर्शनादनधीतवेदोऽपि वेदपुण्येन कृत्स्नवेदाध्ययनफलेन ॥ ना० ॥

एतदक्षरमोंकाराक्षरम्।...वेदपुण्येन वेदत्रयाध्ययनजतुल्यपुण्येन ॥ रा०॥
वेदत्रयार्थविदो वेदत्रयजाधिनो यत्फलं तल्लभत इत्यर्थः ॥ नं० ॥ ७८॥

---

बहिरित्यनावृतो देश उच्यते। तेनैतदुक्तं भवति। ग्रामनगराभ्यां बहिररण्यनदपुलिनादौ सहस्रं वारानभ्यस्य आवर्त्य।...अभ्यस्येत्यनेन सामान्यतोऽभ्यास उक्तस्तत्र विशेषापेक्षायां सहस्रकृत्व इति।...॥ मे० ॥

एतत्त्रयं सहस्रं वारान्मासं यावद्बहिर्ग्रामाद्द्विजोऽभ्यस्य महतो ब्रह्महत्यादेरपि पापमपनुदति। जीर्णचर्मेव सर्प इति। रहस्यप्रायश्चित्तगतमाहात्म्यकथनेन प्रकृतविधित्रयस्तुतिः ॥ गो० ॥

बहिर्ग्रामात्। त्रिकं प्रणवव्याहृतिगायत्रीरूपम्। महतो ब्रह्महत्यादेरपि अबुद्धिपूर्वकृतब्रात्यब्राह्मणवधादिरूपात्। मासात्कालमात्रात्। त्वचेत्यादि दृष्टान्तो दार्ष्टान्तिकदार्ढ्यार्थम् ॥ ना० ॥

त्रिकं प्रणवादि त्रयम्। बहिर्ग्रामान्नद्यरण्यादौ।...॥ रा० ॥

बहिः संध्यायामन्यस्मिन्कालेऽपि ग्रामाद्बहिरिति वा ॥ नं० ॥ ७९ ॥

---

एतया सावित्र्या विसंयुक्तो विनियुक्तो हीनसंध्योपासनस्त्यक्तस्वाध्यायश्च। गर्हणां निन्दां साधुषु विशिष्टेषु याति प्राप्नोति। कीदृशीं गर्हणां प्राप्नोति। अत आह काले च क्रियया स्वया। काले आ षोडशादित्यस्मिन्नियुक्तो गते निन्द्यते। एवमुपनीतोऽपि स्वाध्यायारम्भयोग्यः सावित्रीवर्जितो व्रात्य एव भवति।...॥ मे० ॥

एतया ऋचा सावित्र्या वियुक्तो वेदाध्ययनाभावादुपनयनकाले चात्मीयोपनयनाख्यया क्रियया वियुक्तो ब्राह्मणक्षत्रियवैश्यजातीयो निन्द्यतां शिष्टविषये प्राप्नोतीत्यनुष्ठाननिन्दाद्वारेण विधित्रयोपनयनयोः स्तुतिः ॥ गो० ॥

विसंयुक्तो वियुक्तः। स्वया क्रियया अग्निहोत्रादिकया। गर्हणां निन्दाम्। ग्रहणमिति पाठे ग्रहणं परिग्रहं तत्राविसंयुक्त इत्यकारप्रश्लेषेण पाठः ॥ ना० ॥

एतया ऋचा तत्सवितुरित्यादिकया विसंयुक्तः परित्यक्तः कालेन प्रातरादिना क्रियया संध्याग्निहोत्रिकया च ॥ रा० ॥

एतयर्चा प्रणवव्याहृतिपूर्वया सावित्र्या विसंयुक्तः काले च क्रियया स्वयेत्युपन्यासो दृष्टान्तार्थः । यथा संध्योपासनादिना स्वकर्मणा विमुक्तस्तथेति । गर्हणां याति साधुषु । भूयिष्ठत्वात्साधुभिस्त्याज्य इत्यर्थः ।...॥ न० ॥ ८० ॥

---

ओंकारः पूर्वो यासां ता ओंकारपूर्विका महाव्याहृतयः प्रकृता एव । भूर्भुवः स्वरित्येते शब्दा अभिधीयन्ते । अव्यया अविनाशिन्यः फलस्य दीर्घकालत्वादेवमुच्यन्ते । अन्यथा सर्व एव शब्दा नित्या इति विशेषणमनर्थकं स्यात् । त्रिपदा तत्सवितुरित्येषा सावित्री ब्रह्मणो मुखम् । आद्यत्वान्मुख्यव्यपदेशः । अतस्त्वारम्भे अध्येयमेतदित्यस्यैवार्थवादः । अथवा मुखं द्वारमुपायो ब्रह्मप्राप्तिरनेन भवतीति । तदेवाह ॥ मे० ॥

ओंकारपूर्विकास्तिस्र एता भूराद्या महाव्याहृतयो ऽव्यया अविनाशिन्यः तत्फलस्य दीर्घकालत्वात् । पदत्रयमुक्ता चैषा तत्सवितुर्वरेण्यमिति । सावित्री ब्रह्मणो मुखं वेदप्राप्तिद्वारं विज्ञेयमतः स्वाध्यायादावेतदध्येयम् । इति प्रकृतार्थस्तुतिः ॥ गो० ॥

ब्रह्मणो वेदस्य मुखम् । ततस्तदारभ्य एतत्त्रयजपः कार्य इत्यर्थः ॥ ना० ॥

मुमुक्षूणामप्येतदेव शरणमित्याह । ओमिति । ब्रह्मणः परब्रह्मणः मुखं प्राप्त्युपायं वेदत्रयस्य प्रधानभूतं वा ॥ रा० ॥

मुखं वेदाधिगमनद्वारम् ॥ न४ ॥ ८१ ॥

---

प्रकाश इव सर्वव्यापी विभुः संपद्यते । खमूर्तिः खभावः । तद्वायुर्भवति । न तु मूर्तिः शरीरमाकाशस्य शरीराभावात् । अतः किमिदं ब्रह्मरूपापत्तिरुच्यते । परमात्मा आनन्दरूपः ।..मोक्षार्थिना ऽयं विधिः॥ मे० ॥

य एतां सावित्रीं प्रत्यहं त्रीणि वर्षाण्यनलसो ऽधीते । स वायुरिव सर्वत्राप्रतिहतगतिः खमूर्तिमानाकाशरूपः सन्सर्वव्यापित्वात् । परं ब्रह्म परमात्म-

ब्रह्मणमाभिमुख्येन प्राप्नोतीति। जपमाहात्म्यकथने प्रकृतविधिस्तुतिः॥ गो०॥

वायुभूतो ऽप्रतिहतगतिः। खमूर्तिमान् शुद्धः॥ ना०॥

..खमूर्तिमानाकाशवद्देहाद्यनवच्छिन्नः। ब्रह्म भवेदिति क्रममुक्तिरित्यर्थः॥ रा०॥

एतां प्रणवव्याहृतिपूर्विकां सावित्रीमतन्द्रितः शक्तौ सत्यां न कदाचिदप्यन्यपरः। वायुभूतः सर्वव्यापी।..॥ न०॥ ८२॥

---

ओंकार एकाक्षरम्। तत्परं ब्रह्म प्राप्तिहेतुत्वाज्जपतदर्थभावनया ब्रह्मप्राप्तिरेवमुच्यते। ओमिति ब्रह्माभिधानम्। एवं ह्याहुस्तस्य वाचकः प्रणव इति।...मौनात्सत्यं विशिष्यते। मौनं वाङ्नियम उच्यते। तस्य यत्फलं ततो ऽधिकं सत्यवचनात्प्राप्यते। सत्यवचने विध्यर्थो ऽपि तत्रानुष्ठितो भवति। मौने तु केवलमनृतप्रतिषेधानुष्ठानमेव। अर्थवादो ऽयं श्लोकः॥ मे०॥

ओंकाराख्यमेतदेकाक्षरं परं ब्रह्म।..मौनात्सत्यं विशिष्यते। मौनकृतदोषपरिहारातिरेकेण सत्यवचनेनाभ्युदयोत्पादादिति स्तुतिप्रसङ्गेन सत्याभिधानस्तुतिः॥ गो०॥

परं ब्रह्म परमो वेदः। प्राणायामसत्ययोः प्रसङ्गात्स्तुतिः। परं जप्यं नास्ति सत्यं विशिष्यते। उभयत्रानृतानभिधानसाम्ये ऽपि सत्याभिधाने नियमाधिक्यात्॥ ना०॥

एकाक्षरं प्रणवः परं ब्रह्म तदभिधायकत्वात्। तस्य वाचकः प्रणव इति पातञ्जलोक्तेः। परं तपः शरीरशोषणपापनाशकत्वसाम्यात्प्राणायामेन पातकमित्युक्तेः। अत आह मौनात्सत्यमिति हि मौनात्तूष्णीभावात्सत्यं प्रणवादिजपः॥ रा०॥

एकाक्षरं प्रणवः परं ब्रह्म ब्रह्मस्वरूपत्वात्। तथा हि ब्रह्म नन्दिवाक्यम्।..प्राणायामशब्देन व्याहृतयो लभ्यन्ते।..॥ न०॥ ८३॥

---

यावन्तः केचन वैदिका होमा अग्निहोत्रादयो ये च यागा ज्योतिष्टो-

मादयः ते सर्वे क्षरन्ति न परिपूर्णफला भवन्ति । फलं वा तदीयं क्षरति आशु विनश्यति । अक्षरं त्वेतदोंकाराख्यमक्षरं ज्ञेयम् अक्षयफलम् । ब्रह्म भूतस्य न पुनः संसारापत्तिः । अतो ऽक्षयफलत्वादक्षरमुच्यते । एको ऽक्षरशब्द उद्देश्यः संज्ञाशब्दो द्वितीयो यौगिकः क्रियाशब्दः । ब्रह्म च तदेव प्रजापतिश्च ओंकार एव ।...॥ मे० ॥

सर्वाणि वेदचोदितानि होमयागानुष्ठानानि नश्वराणि तत्फलक्षयत्वात् । अक्षरं पुनरेतदोंकाराख्यमक्षयं ज्ञेयम् । एतदर्थभावनाद्वारेण ब्रह्मावाप्त्याख्यस्य फलस्याक्षयत्वात् । ब्रह्म च प्रजापत्याख्यम् ।.. ॥ गो० ॥

क्षरन्ति विनाशिफलाः ।...जुहोतिरुपविष्टहोमः । यजतिस्तिष्ठद्धोमः । अक्षरमोंकारो ऽक्षरमनाशिफलम् । ब्रह्मा परमात्मा निराकारोपासने । साकारोपासने तु तदीयरूपशक्तिः ।...॥ ना० ॥

...अक्षरमित्यादि अक्षरमविनाशित्वादेव प्रजापतिर्हिरण्यगर्भश्च ।...॥ रा० ॥

क्षरन्ति स्वरूपतः फलतश्च नश्यन्ति । अक्षरं प्रणवादि त्रिकम् । न क्षरं विनश्वरफलं न भवति । ब्रह्मा परमात्मा ।...॥ न० ॥

प्रजापतिः सर्वसिद्धिकर्ता ॥ का० ॥ ८४ ॥

---

विधिविषयो यज्ञो विधियज्ञो ज्योतिष्टोमादि यत्कर्म यजेतेति चोदितम् ।...जपस्तु न यज्ञः प्रशंसया यज्ञ उपचारेणोच्यते ।...दशभिर्गुणैर्महाफलत्वमेतेन जपस्योच्यते ।...उपांशुः शतगुणो यदन्यो न शृणोति समीपस्थो ऽपि । सहस्रगुणः साहस्रो मनोव्यापारेण यच्चिन्त्यते ।...॥ मे० ॥

अग्निष्टोमादेर्जपयज्ञो विशिष्टो दशभिर्गुणैः । दशफलगुणत्वात् । स एवं चोपांशुर्यं परो न शृणोति स शतगुणो मनोव्यापारसंपाद्यश्च सहस्रगुण इत्यभ्यासातिशयापेक्षया द्रव्यत्यागादपि चान्तःसंयमस्य दुःसहत्वाद्वैदिकफलाधिक्येन जपमाहात्म्यकथनं प्रकृतविधिस्तुत्यर्थम् ॥ गो० ॥

विधियज्ञो वेदे भूयसा मन्त्रेन विहितो यज्ञो ऽग्निष्टोमादिर्दर्शपूर्णमासा-

दिश्च। जपयज्ञ उच्चैरपि क्रियमाणो दशगुणफलः। अक्षराणां व्यक्तावस्था न्योन्यसंश्लिष्टज्ञानरूपस्यैव जपत्वात्। उपांशुः पराश्रवणीयशब्दोच्चारणम्। मानसः स्वस्यापि मनोमात्रग्राह्याक्षरः। साहस्रः सहस्रगुणो विधियज्ञा-देव।...॥ ना० ॥

विधियज्ञादग्निहोत्रादेः। जपयज्ञो वाचिकः स एवोपांशुत्वेनानुष्ठितः शतगुणफलदः। उपांशुरिति यत्समीपस्थो जनो न शृणोति। स एष मानस ईषदपि जिह्वोच्चारणरहितः॥ रा० ॥

विधियज्ञादग्निहोत्रादेर्जपयज्ञो दशभिर्गुणैर्विशिष्टः। साधनवैगुण्यदो-षराहित्यात्।...॥ न० ॥ ८५ ॥

---

महायज्ञाः पाकयज्ञा उच्यन्ते। ब्रह्मयज्ञं वर्जयित्वा चत्वारो भवन्ति। विधियज्ञा उक्ताः। तैः समन्विताः सहिताः कलामंशं षोडशीं नार्हन्ति षोडशेन भागेन समा न भवन्ति।...॥ मे० ॥

ये पाकयज्ञादयश्चत्वारो ज्योतिष्टोमादिविधियज्ञसहितास्ते सर्वे जपय-ज्ञस्य षोडशभागं मूल्यार्थं न लभन्त इति। श्रौतस्मार्तकर्मनिन्दया इदम् ॥ गो० ॥

चत्वारो ये देवभूतमनुष्यपितृयज्ञरूपाः। ब्रह्मयज्ञस्य जपयज्ञप्रवेशनपा-कयज्ञत्वाच्च विधियज्ञोऽग्निष्टोमादिः।...॥ ना० ॥

पाकयज्ञा वक्ष्यमाणा विधियज्ञा दर्शपौर्णमासादयः।...॥ रा० ॥

पाकयज्ञशब्दो ऽल्पवचनः। चत्वारो देवपितृमनुष्यभूतभेदात्। ब्राह्मणस्य विशेषेण जपो परमो धर्म इत्या ॥ न० ॥ ८६ ॥

---

जप्येनैव सिद्धिं काम्यफलावाप्तिं ब्रह्मप्राप्तिं वा प्राप्नुयान्नात्र हृदि शङ्का कर्तव्या।...कुर्यादन्यन्नित्यं ज्योतिष्टोमादि। अथवा तदपि न कुर्यात्। अतो मैत्रो ब्राह्मण उच्यते। मित्रमेव मैत्रं सर्वभूतमैत्रीरतेन ब्राह्मणेन भवित-

थम्। अग्निष्टोमीयपशुहिंसायां च कुतो मैत्री। अयमर्थवाद एव। न पुनः पश्वङ्गकर्मप्रतिषेधः। ॥ मे० ॥

जप्येनैव ब्राह्मणो मोक्षं प्राप्नुयादत्र संशय एव नास्ति। कथमल्पप्रयासेन महत्फलं प्राप्यत इति। द्रव्यत्यागादप्यन्तःसंयमस्य दुष्करत्वात्। एवं च कुर्यादन्यज्ज्योतिष्टोमादिकमसौ कर्म यदि वा न कुर्यात्। यतः सर्वभूतोपकारको ब्राह्मणः स्यादिति शास्त्रेणोच्यते। अग्निष्टोमीयादिवधेन कुतो मैत्रीति एवं श्रौतस्मार्तकर्मानुष्ठानशक्तौ जपपरः पुरुषः संसिध्येदनुवादो ऽयं प्रकृतविधिस्तुत्यर्थः ॥ गो० ॥

संसिध्येन्मोक्षं लभेत। तद्विरोधेनान्यत्कुर्यादित्युपक्रम्य स्वसिद्धान्तमाह। न वा कुर्यादिति। मैत्रो हिंस्रो विधियज्ञानां बीजपश्वादिहिंसयैव प्रवृत्तिरित्यर्थः। जप्ये अवश्योपसंहार्यमङ्गं दर्शयति ॥ ना० ॥

मैत्रः मित्रः सूर्यः तद्दैवत्यः गायत्र्युपासकः। अथवा प्राणिमात्रप्रियः। अण् स्वार्थिकः ब्राह्मणो ब्रह्मिष्ठः।...॥ रा० ॥

संसिध्येन्मुक्तो भवति। अन्यत्कर्म कुर्याद्वा न वा कुर्यात्। अत्र हेतुः। मैत्रो ब्राह्मण इति सर्वानुकूल्यं मैत्री तस्मान्मैत्रत्वेन हिंसानुबन्धिनो विधियज्ञाज्जपयज्ञो ब्राह्मणस्य विशिष्टतर इति ॥ न० ॥ ८७ ॥

---

.. विचरतां विषयेषु स्वातन्त्र्येण वस्तुशक्त्या प्रवर्तमानानाम्। अपहारिषु विषयेष्वपहरन्ति आकर्षयन्ति आत्मसात्कुर्वन्ति पारतन्त्र्यमापादयन्ति पुरुषम्। ते अपहारिणो विषया उच्यन्ते।... ॥ मे० ॥

इन्द्रियाणां चक्षुरादीनां विषयेषु रूपादिषु अपहारिषु च उपभोगार्थमाकर्षणशीलेषु यथेच्छं प्रवर्तमानानां नियमेन प्रयत्नं कुर्यात्। यथा शिक्षितः सारथी रथ्यागत्या वाजिनामश्वानां यत्नं करोति ॥ गो० ॥

अपहारिष्विन्द्रियावकर्षकेषु। यन्तेवेत्येकाग्रतार्थं दृष्टान्तः ॥ ना० ॥

.. यन्ता अश्वसंयमनं सारथिरिव संयमनं कुर्यात् ॥ रा० ॥

अपहारिषु इन्द्रियापहारिषु ॥ न० ॥ ८८ ॥

---

संख्यानिर्देशो ऽयं प्रमाणान्तरगम्यो न पदार्थः। सौत्रादिन तु व्युत्पाद्यते। तानि पूर्वे मनीषिण आहुः। यस्तान्नामतः कर्मतश्च वक्ष्यामि। आनुपूर्व्य-मनाकुलता। पूर्वग्रन्थास्यैयं तार्किकैरेव व्यवस्था कल्पिता। किं नु पूर्वमा-मार्यांग्रास्थितैव।...॥ मे॰॥

यानि पूर्वे मन्वादयो विद्वांस इन्द्रियाण्युक्तवन्तः। तानि यथावत्कार्त्स्न्ये-नानुपूर्वशः क्रमेण सम्यक् यथा यूयं बुध्यथ तथा वक्ष्यामि तानि च॥ गो॰॥

यथावत्स्वस्वप्रकारवत्तया॥ ना॰॥

पूर्वे ब्रह्मादयः। अनुपूर्वशः श्रोत्रादिक्रमेण॥ रा॰॥

स्पष्टः॥ न॰॥ ८९॥

---

श्रोत्रादीनि प्रसिद्धानि। अधिष्ठानभेदाच्चक्षुषी इति द्विवचनमन्यच्च तदाधारायाः शक्तेरेकत्वादेकवचनम्।... शरीरावयवनामनिर्देशो ऽयम्॥ मे॰॥

...चक्षुषी इत्यधिष्ठानभेदाद्द्विवचनम्। श्रोत्रादौ च तदाधारशक्त्येकाल-म्बनमेकवचनम्। पायुरपानम्। उपस्थो लिङ्गं वाक् शब्दाभिव्यञ्जकशरीरै-कदेशः॥ गो॰॥

जिह्वा रसना। वागभिधानशक्तिरास्यगता। त्वक् चक्षुश्च त्वक्चक्षुषी आधारभेदे ऽपीन्द्रियशक्तेरेकत्वात्।..॥ ना॰॥

त्वक्चक्षुषीति द्वन्द्वसमासः॥ न॰॥ ९०॥

---

कार्यमिदानीमेषामाह स्वरूपावधारणार्थम्। न हि तानि प्रत्यक्षाणि बुद्धेरिन्द्रियाणि जनकानि कार्यकरणानि। कार्यकरणसंबन्धे षष्ठी। श्रोत्रा-दीन्यनुपूर्वशः। आदिशब्दस्य प्रकारार्थतामविज्ञायीति। अनुपूर्वशः क्रमे-णेत्यर्थः। क्रमश्च संनिवेशापेक्षो भवति। अतः पूर्वश्लोकोक्ता व्यवस्था आश्रीयते। कर्मेन्द्रियाणि परिस्पन्दात्मकमत्र कर्म विवक्षितम्॥ मे॰॥

एषां मध्यात् श्रोत्रादीनि क्रमेण पञ्च बुद्धेः शब्दादिविषयविज्ञानस्य जनकानि पञ्च पाय्वादीनि विसर्गादिकर्मार्थानि मन्वादयः कथयन्तीति कार्यभेदाद्विभागः ॥ गो० ॥

शब्दादिजननरूपाणि बुद्धीन्द्रियाणि । उत्सर्गादिक्रियारूपाणि कर्मेन्द्रियाणि ॥ ना० ॥

बुद्धीन्द्रियाणि ज्ञानेन्द्रियाणि ॥ न० ॥ ९१ ॥

---

एकादशसंख्यापूर्वकं मन इन्द्रियाणां स्वो गुणो मनसः संकल्पः । तेन उभयरूपं शुभमशुभं वा संकल्पयते । अथवा बुद्धीन्द्रियेषु कर्मेन्द्रियेषु स्वविषयप्राप्तौ संकल्पमूलत्वादुभयमुच्यते । तस्मिञ्जिते एतौ बुद्धीन्द्रियवर्गः कर्मेन्द्रियवर्गश्च पञ्चकौ प्राक् प्रदर्शितपरिमाणौ जितौ भवतः । तत्त्वाख्यानमेतत् ॥ मे० ॥

मनः स्वगुणेन संकल्पाख्येन शुभाशुभस्वभावेनोपरूपमेकादशं विज्ञेयम् । यस्मिन्वशीकृते सत्येतौ पञ्चपरिमाणौ वर्गौ वशीकृतौ भवतः । मनोव्यापारे मूलत्वादीन्द्रियप्रवृत्तेः । अधुनेन्द्रियसंयमप्रयोजनमाह ॥ गो० ॥

स्वगुणेन बुद्धिकर्मजनकत्वेन । उभयात्मकं बुद्धीन्द्रियकर्मेन्द्रियरूपम् । यस्मिञ्जित इति प्राधान्यकथनम् । पञ्चकौ पञ्चभिः पञ्चभिः परिमितौ बुद्धीन्द्रियकर्मेन्द्रियवर्गौ ॥ ना० ॥

...तेनोभयात्मकं ज्ञानेन्द्रियात्मकं कर्मेन्द्रियात्मकं च । यस्मिञ्जिते उभयात्मके मनसि जिते पञ्चकौ ज्ञानकर्मेन्द्रियाख्यौ ॥ न० ॥ ९२ ॥

---

प्रसक्तस्तत्परता तेन हेतुभूतेन तद्दोषं दृष्टमदृष्टं वा गच्छति प्राप्नोति । नात्र संशयो निश्चितमेतत् । संनियम्य तानीन्द्रियाणि ततः सिद्धिमभिप्रेतार्थावाप्तिं श्रौतस्मार्तकर्मणामनुष्ठानफलं निःश्रेयं गच्छति प्राप्नोति ॥ मे० ॥

इन्द्रियाणां विषयासक्त्या दृष्टादृष्टदोषं निश्चितं पुरुषः प्राप्नोति । तान्येव संयम्य पुनर्दृष्टादृष्टपुरुषार्थसिद्धिं निश्चयेन प्राप्नोति ।...॥ गो० ॥

प्रसङ्गेन विषयेषु सङ्गेन दोषं पापमृच्छति प्राप्नोति । तेषां नियमात्सिद्धिं मोक्षं नियच्छति लभते ॥ ना० ॥

प्रसङ्गेनेन्द्रियार्थेष्वभिसक्तया दोषं संसाराख्यं सिद्धिं मनःशुद्धिद्वारा मोक्षाख्याम् ।...॥ रा० ॥

प्रसङ्गेन विषयेषु निरङ्कुशया वृत्त्या तस्मात्पुनर्भोजनेन क्षुध इव विषयोपभोगेन कामस्य तन्निवृत्तिं नेच्छत इत्याह ॥ न० ॥ ९३ ॥

---

तिष्ठतु तावद्विषयालाभः शास्त्रोपदेशान्न क्रियते । किंतु दृष्टमेव सुखं तावन्निवृत्तेर्भवति । तथा हि सेव्यमाना विषया अधिकं गर्धमुत्पादयन्ति । उदरपूरं भुक्तवतस्तृप्तस्यातिसौहित्यमपि गतवतो भवति हृदयसमीहा किमिति न शक्नोमि अन्यद्भोक्तुमशक्यं तु न प्रवर्तते । ततो नैषा भोगेन शक्या निवृत्तिर्न कदाचित्कामो ऽभिलाषः कामानां काम्यमानानां स्पृहणीयमानार्थानामुपभोगेन सेवया शाम्यति निवर्तते । भूयो ऽधिकतरं वर्धते । हविषा घृतेन कृष्णवर्त्मामिरिव दुःखरूपस्याभिलाषः ।... ॥ मे० ॥

न कदाचिदभिलाषः काम्यमानानामर्थानामुपसेवनेन विवर्तते । प्रत्युताज्येनामिरिवाधिकतरं वृद्धिमेति ॥ गो० ॥

काम इच्छा कामानां भोगानाम् । कृष्णवर्त्मेवेत्युचितपदन्यासः ॥ ना० ॥

कामो ऽभिलाषः कामानां काम्यन्ते अमी तेषामुपभोगः साक्षात्करणं तेन कामा विषयाः शान्तिर्दूरे अपि वर्धत एवेत्याह । हविषेति । कृष्णवर्त्मामिः ।... ॥ रा० ॥

कामानां विषयाणां हविषाज्येन । यत एवं ततो विषयाणां भोगात्प्रागेव श्रेयानित्याह ॥ न० ॥ ९४ ॥

---

पूर्वोक्तं हेतुत्वेनोपजीव्यायं निगमनः श्लोकः पठितः । यदा सेवया वर्धते कामः । अतो य एतान्कामान्कामी सर्वान्प्राप्नुयात् सेवेतानेकमण्डलेश्वर

इव तरुणो यस्त्वेतांस्त्यजति केवलानीषदपि न स्पृशति नैष्ठिको बालः। तयोर्यः प्रापको भोक्ता तस्मात्स विशिष्यते। अतिशयेन श्रेष्ठो भवति। यः परित्यजेदिति। एतच्चात्मप्रत्यक्षम् ॥ मे० ॥

यः कामान्सकलान्सेवेत यो वा केवलानुपभुज्यैव त्यजेत्तयोः सर्वकामोपभोगादपि परित्यागो विशिष्यते। यस्मादुपभुक्तपूर्वेष्वपि क्षमति चित्तसंयमे पुनरुपभोगेच्छा जायते तदसंपत्तौ चावश्यं भावि दुःखम्। तस्मान्मूलत एव तृष्णात्यागो वरः। एवं तर्हि विषयशून्यदेहावस्थानमात्रोपाय इत्यत आह ॥ गो० ॥

केवलान्कृत्स्नान्। विशिष्यते विशिष्टफलत्वात्। न चैवमुपभोगमात्रेणेन्द्रियजयमिति ग्राह्यमित्याह ॥ ना० ॥

प्राप्नुयाद्भुञ्जीत केवलानिन्द्रियासंबन्धान्। सर्वकामानां विषयाणाम् ॥ रा० ॥

य इत्यसाधुपाठः। एतान्कामान्प्राप्नुयाद्भुञ्जीत। केवलान् कृत्स्नान्। तयोः प्राप्तित्यागयोः। प्रापणात्प्राप्तेः।...विषयपरित्याग एव संयमोपायो नान्यत इत्याह ॥ न० ॥ ९५ ॥

---

यद्येवमरण्यवास एव तर्हि प्राप्तो न हि तत्र विषयाः संनिधीयन्ते। असंनिहिताश्च न सेविष्यन्ते तदर्थमाह। नासेवया इन्द्रियाणि नियन्तव्यानीति।...प्रदुष्टानि प्रवृत्तानि दोषवत्त्वात्प्रवृत्तान्येव प्रदुष्टानीत्युच्यन्ते।... ॥ मे० ॥

एतानीन्द्रियाणि विषयासक्त्या प्रकृष्टदोषजनकानि। न तथा रूपादिविषयानुपभोगेन सम्यङ् नियन्तुं शक्यन्ते। यथा विषयगतदोषभावना विज्ञानेन नित्यकालं नियन्तुं पार्यते ॥ गो० ॥

एतानीन्द्रियाणि विषयेषु वर्तमानानि पूर्वपूर्वजन्मसंस्कारवशात्। प्रदुष्टानि दोषजनकानि। ज्ञानेनात्मनः शरीरादिव्यतिरिक्तस्य ज्ञानेन विषयदोषभावेन च नित्यम् ॥ ना० ॥

असेवया शुष्कवैराग्येण।...॥ रा० ॥

...न केवलं ब्रह्मचारिणामेवायमिन्द्रियसंयमो दोषावहः । किंतु सर्वाश्रमाणामपीत्यभिप्रायेणाह ॥ न० ॥ ९६ ॥

---

अयमत्र विधिरेव । वेदास्तद्विषयाध्ययनजपादि । त्यागो दानं लक्षणया । अथवा अप्रतिषिद्धस्यापि मधुमांसभक्षणादेर्निवृत्तिर्महाफलेत्यनेन वर्जनम् । विप्रदुष्टो भावश्चित्तं यस्य तस्य न सिद्धिं गच्छन्ति फलसाधकानि न भवन्ति कस्मिंश्चिदपि काले । अगर्हितकर्मसु विषयचिन्तात्यागोऽनेन वाक्येन विहितस्तदभावे कर्म निष्फलं स्यात् । एष हि भावदोषो यत्कर्मानुष्ठाने प्रवृत्तस्य तत्परतात्यागेन व्यसनेषु नावधानम् ॥ मे० ॥

जपदानस्नानयागादिकृच्छ्रादीनि दुष्टचित्तस्य न कदाचित्संपन्नानि भवन्तीति ॥ गो० ॥

वेदा अध्ययनानि त्यागा दानानि । नियमाः स्नातकव्रतादीनि । तपांसि कृच्छ्रादीनि । विप्रदुष्टभावस्य विषयप्रसक्तौ ॥ ना० ॥

त्यागः संन्यासो दानं वा । नियमाः शौचसंतोषादयः । तपांसि कृच्छ्रादीनि । एत अनुष्ठीयमाना अपि विप्रदुष्टभावस्य स्वाद्यासक्तस्य ॥ रा० ॥

वेदा इति ब्रह्मचर्यधर्मा लक्ष्यन्ते । त्यागा इति संन्यासिधर्माः । यज्ञा इति गार्हस्थ्यधर्माः । तपांसीति वानप्रस्थधर्माः । नियमा इति साधारणधर्माः । विप्रदुष्टभावस्य कामक्रोधदूषितचित्तस्य भावदोषाणामिन्द्रियासंयमहेतुकत्वात् ॥ न० ॥ ९७ ॥

---

बृहस्पतिरित्यादि स्तुतिवचनं श्रुत्वा न हृष्यति सत्यपारुषाक्रोशवाचः श्रुत्वा न ग्लायति न मनोदुःखं भजति ।...एवं तेन जितानीन्द्रियाणि भवन्ति । . ॥ मे० ॥

यः श्रोत्रत्वक्चक्षुर्नासिकेष्टाञ्छब्दस्पर्शरसरूपगन्धानुपलभ्य न हर्षमुपैति

कुत्सितांश्चोपलभ्य न ग्लानिमेति स जितेन्द्रियो बोद्धव्यः। सकलेन्द्रियविषयस्य संयमे यत्नः कार्यो यस्मात्॥ गो०॥

ग्लायति दुःखितो भवति॥ ना०॥

भोगो न प्रतिबन्धकः किंत्वासक्तिः। तदुक्तं पश्यञ्शृण्वन्स्पृशन्नित्यादि। ...॥ रा०॥

श्रुत्वा इष्टमनिष्टं च। एवमुत्तरत्र। हृष्यति मनसा ग्लायति विनिषीदति। इष्टानिष्टविषयसंसर्गे मनोविकारराहित्यमिन्द्रियसंयम इत्यभिप्रायः॥ न०॥ ९८॥

---

निर्धारणे षष्ठी। एकमेव यदीन्द्रियं क्षरति स्वतन्त्रेण स्वविषये वर्तमानं न विनिवार्यते। ततोऽस्य क्षरति प्रज्ञा धैर्यमिन्द्रियान्तरविषयमपि। दृतिश्छागादिचर्म उदकाद्याहरणभाजनम्। तस्य संवृतेष्वपीतरेषु पादेषु यद्येकस्मादुदकं पादात्स्रवति सर्वं रिच्यते।...॥ मे०॥

इन्द्रियाणां मध्याद्यदि पुनरेकमपीन्द्रियं यथेच्छं स्वविषये प्रवर्तते। तदा स्वेन्द्रियान्तरसंयमविज्ञानमपि नश्यति। यथोदकपरिपूर्णाच्चर्मणा एकपादानावारणात्सर्वमम्भो निःसरति। यत एवमसंजितेन्द्रियमनस्तस्य न वेदादिसिद्धिस्तस्मात्॥ गो०॥

क्षरति विषये सज्यते। क्षरति प्रज्ञा सर्वा बहिः संबध्यते। दृतेर्जलसेकार्थं कृतस्य चर्मभाण्डस्य जलनिर्गमार्थं कृते अनेकच्छिद्रधाराल्पपादवतः। एकेनापि पादेन यथा सर्वजलसेको भवतीत्यर्थः॥ ना०॥

सर्वेषामप्रवृत्तावप्येकस्य प्रवृत्तौ को दोषस्तत्राह। इन्द्रियाणां त्विति। सर्वेषामिन्द्रियाणां मध्ये यत्किंचित्क्षरति इन्द्रियं विषयप्रवणं स्यात्। प्रज्ञा धैर्यं तेनैव क्षरति दृतेश्चर्ममयोदकपात्रस्य पादात् छिद्रात् सर्वमुदकं क्रमशो नश्यति।...॥ रा०॥

प्रज्ञा क्षरति विषयपराभव इति। इन्द्रियसंयमफलमाह॥ न०॥ ९९॥

---

उपसंहरति । सत्यपीन्द्रियत्वे मनसः प्राधान्यात्पृथगुपादानम् । ग्रामः संघातः । विधेयीकृत्येन्द्रियाणि तथा मनः सर्वानर्थान् श्रौतस्मार्तकर्मसाध्यान् संसाधयेन्निष्पादयेत्तनुं शरीरमक्षिण्वन्नपीडयन् । योगतः युक्त्या सहसा कस्यचित्कठिनासनकृष्णाजिनादिप्रावरणात्पीडा भवति । तत्र च योगतो वशे कृत्वेति संबन्धः । यथास्थानमेव वा योगत इति योजनीयम् । युक्त्या अनौचित्यतः शरीरं नापनयेत् ।...॥ मे० ॥

शक्त्या शरीरमपीडयन्निन्द्रियसमूहं विजित्य मनश्च नियम्य सर्वान्वेदाधिगमादीनर्थान्संपादयेत् ॥···॥ गो० ॥

इन्द्रियग्रामं बाह्यं सर्वानर्थान् स्वर्गादीनपि । योगतो ऽपेक्षितदेवतादिध्यानतो न त्विन्द्रियसंयममात्रात् । तनुं देहमक्षिण्वन्नपीडयन्नपि ॥ ना० ॥

अर्थान्धर्मादीन् । अक्षिण्वन्नपीडयन्योगतः योगोपायेन अवर्जनीयविषयसेवयेति यावत् ॥ रा० ॥

योगतः योगेन समाधिलक्षणेन । अर्थान्पुरार्थान् । संसाधयेत्साधयितु शक्नुयात् । तनुमक्षिण्वन्तपोभिः शरीरमपीडयन् । अथ धर्मान्तरमाह ॥ न० ॥ १०० ॥

---

संमुखे पूर्वां संध्यामादित्यास्तमये पश्चिमा तां तिष्ठेज्जपन्सावित्रीमासनादुत्थाय निवृत्तगतिरेकदेशे स्यात् । सावित्री उक्तैव ।...आ अर्कदर्शनादिति यावद्भगवानादित्यो दृष्टो जपस्थानयोरयमेव विनिर्देशः ।...सदाशब्दो नित्यतामाह उभयसंध्याशेषः । आसीत आसनमनूर्ध्वतावस्थानमुपविष्टो भवेत् । ऋक्षं नक्षत्रमा वहिभावनात् । आ अर्कदर्शनादिति य आकारः स इहानुषङ्क्तव्यः । सम्यक्शब्दो दर्शनविभावनयोर्विशेषणम् ॥ मे० ॥

...पूर्वां संध्यां स्थितः सन्सावित्रीमेतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम् । संध्ययोरिति दर्शनात्प्रणवव्याहृतिपूर्विकां जपेदादित्यदर्शनं यावदिति वाक्यार्थः । पश्चिमां पुनरासीनः सावित्रीं जपेदुक्तगौतमीयात् ।... सम्यक् नक्षत्रदर्शनात् ॥ गो० ॥

तिष्ठेदूर्ध्वस्तिष्ठेज्जपन्संध्यां पूर्वामत्यन्तसंयोगेन समासीतोपविशेत्। आ सम्यक् ऋक्षाणां विभावनाद्दर्शनात्।...अत एव जपस्य कर्मापि सावित्री लभ्यते। एतदक्षरमेतां चेत्युक्तत्वाच्च। जपंस्तिष्ठन्तिष्ठञ्जपन्। मलं पापं मलिनीकरणत्वयम्। एतच्च सायमर्कादर्शनकालं प्रातश्च नक्षत्रदर्शनकालमारभ्य कार्यम्। स ज्योतिषो दर्शनादिति गौतमोक्तेः॥ ना० ॥

पूर्वामिति संध्यां व्याप्य जपन्नूर्ध्वं तिष्ठेत्। आसीनो भवेदिति विधिस्तत्रैवावधेरपेक्षणात्।...॥ रा० ॥

सम्यगृक्षविभावनादा ऋक्षविभावनादिति पदच्छेदः। ऋक्षविभावना-न्नक्षत्रदर्शनात्॥ न० ॥ १०१ ॥

---

अयमत्राधिकार उच्यते। एनः प्रतिषिद्धसेवनाज्जातो दोषस्तं व्यपोहति। अपनुदति। निशिभवं नैशं रात्रिकृतम्। एवं मलमेनःशब्देन समानार्थम्। न च सर्वस्य दिवा कृतस्य नैशिकस्य चैतत्प्रायश्चित्तम्। तथा सति कृच्छ्राद्युपदेशः प्रायश्चित्तविशेषः...अनर्थकः स्यात्।...लघीय एनस्तद्व्यपैति। यदा सुप्तस्य हस्तसंचारशय्यापरिवर्तनादि सूक्ष्मप्राणिवधो गुह्याङ्गकण्डूतिकर्षणं नाकस्मात्स्पृशेदिति प्रतिषिद्धम्।...॥ मे० ॥

पूर्वां संध्यां तिष्ठन्सावित्रीं जपन्संचितं प्रतनु रात्र्युत्पन्नं पापमपनुदति। सर्वापनोदने प्रायश्चित्तकाण्डानर्थक्यात्। एवं पश्चिमसंध्यायामुपविष्टो जपन्दिवा कृतं पापमपहन्ति। एवं कथंचिदलसेनसो ऽननुष्ठानप्राप्तौ नित्यतामाह॥ गो० ॥

For Nârâyana's Commentary, see the preceding para.

नैशमिति निशाकृतम्। मलं पापम्।..॥ रा० ॥

स्पष्टः। स्थानासनयोरकरणे प्रत्यवायमाह॥ न० ॥ १०२ ॥

---

अनेनानुष्ठानप्रत्यवायं वदन्नित्यतामेव समर्थयति। यः प्रातःसंध्यायां

नोर्ध्वं आस्ते न च पश्चिमायामुपविष्टो भवति । स शूद्रतुल्यो वेदितव्यः सर्वस्माद्द्विजातिकर्मणः आदित्यादिसत्कारसंप्रदानादितो बहिष्कार्यो ऽपनोद्यः । अतः शूद्रसमानतानिरासार्थं नित्यमनुष्ठेया संध्या इदमधिकारवाक्यम् ।...॥ मे० ॥

यः पुनः पूर्वां संध्यां नानुतिष्ठति यो वा पश्चिमां नोपास्ते । सो ऽध्यापनदानादेर्द्विजकर्मणः सर्वस्माच्छूद्रवत्परिहरणीयः । इत्येवं निन्देयमवश्यानुष्ठानार्था ।...॥ गो० ॥

शूद्रवदिति । तदकरणे अनधिकारितैव तत्पूर्वकत्वात्कर्मणाम् ॥ रा० ॥

**प्रथमं ब्रह्मयज्ञमाह ॥ न० ॥ १०३ ॥**

---

अयमपरः स्वाध्यायविधिः प्रकरणान्तरे श्रुतत्वात्पूर्वस्मात्प्रकरणाद्भिद्यते । बहिर्ग्रामान्निर्जने देश अरण्यं तद्गत्वा प्राप्य अपा समीपे नदीवाप्यादिस्थाने तदभावे कमण्डल्वादिभाजनस्थाने ऽपि नियतः शुचिर्यत्नवान्वा समाहितः परित्यक्तचित्तव्याक्षेपः सावित्रीमप्यधीयीत ।...॥ मे० ॥

ग्रामाद्बहिर्विविक्तं प्रदेशं गत्वा नियतः शुचिः समाहितः संयतमना नित्यो ऽयं ब्रह्मयज्ञविधिरित्येवमास्थितः ।.. ॥ गो० ॥

अरण्यं ग्रामाद्बहिः । सावित्रीमपीत्यन्योऽध्ययनाशक्तावुपाकरणाद्वा पूर्वमगृहीतवेदस्य ब्रह्मचारिणो ऽनुकल्पः । आदिक्रमेण स्वशाखायां नित्यं पाठो मुख्यो ब्रह्मयज्ञः । समाहितो ऽनन्यचेताः ॥ ना० ॥

नैत्यकं ब्रह्मयज्ञरूपम् । समाहितो ऽनन्यमनाः । अनधीतसूक्तान्तरस्य ब्रह्मयज्ञार्थं विशिष्टो ऽयमपरो विधिरिति मेधातिथिः ॥ रा० ॥

नियतसमाहितशब्दाभ्या कर्मज्ञानेन्द्रियसंयमावुक्तौ नित्यमेव नैमित्तिकं विधिमास्थितः । अनेनाहरहः कर्तव्यत्वमुक्तम् । विधिं ब्रह्मयज्ञेन वक्ष्यमाण इत्यनुवाकेनोक्तम् । अधीयीत स्वाध्यायं न केवलं स्वाध्यायमेवाधीयीत । किंतु सावित्रीमपि श्लोकस्यास्य ब्रह्मयज्ञविषयत्वम् ॥ न० ॥ १०४ ॥

---

उपकरणमुपकारकं वेदाङ्गं कल्पसूत्रनिरुक्ताद्युच्यते। तस्मिन्पठ्यमाने ऽनध्यायेष्वनुरोध आदरो नास्ति। अनध्याया नादरणीयाः। अनध्यायेष्वध्येतव्यम्। न विरोध इति वा पाठः। निरुक्तैरनध्यायेष्वध्ययनस्य नास्ति। ...नैत्यके स्वाध्याये पूर्वेण वाक्येन सर्वाश्रमिणा विहिते नित्ये स्वाध्यायविधौ ॥ मे० ॥

वेदोपकारकनिरुक्तादौ। नित्यभवे च स्वाध्याये ब्रह्मयज्ञाख्ये होमार्थं मन्त्रोच्चारणे चानध्यायानुरोधो नास्ति।...॥ गो० ॥

वेदोपकरणे व्याकरणाद्यङ्गे। नैत्यके स्वाध्याये ब्रह्मयज्ञे। होममन्त्रेषु काम्यकर्माङ्गेष्वपि।...स्वाध्यायरूपे तु ब्रह्मयज्ञे कथमेवमध्ययनविरोधित्वादनध्यायस्येत्यत आह। नैत्यक इति ॥ ना० ॥

वेदोपकरणे शिक्षादिवेदाङ्गे। नैत्यके ब्रह्मयज्ञादिरूपे। अनुरोध अपेक्षा नास्ति। तथा च सूत्रं कामं वेदाङ्गानीति।...॥ रा० ॥

वेदोपकरणे वेदाङ्गे। तत्र प्रतिषेधाभावाद्धोममन्त्रेषु विधिबलाच्च यथानध्यायानुरोधो नास्ति एवं नैत्यके ऽपीत्यर्थः। उक्तमेवार्थं हेतुसंन्यासेन स्थिरीकरोति ॥ न० ॥ १०५ ॥

---

सर्वविधिशेषो ऽयमर्थवादः। एतेन हेतुना नैत्यके नास्त्यनध्यायो यतो ब्रह्मसत्त्रं हि तत्स्मृतम्। सततप्रवृत्तं सत्त्रम्। यथा सहस्रसंवत्सरादि सत्त्रं न कदाचिद्विच्छिद्यते इत्यतः सत्त्रमिवेदमपि ब्रह्माध्ययनं न कदाचिद्विच्छेत्तव्यम्। विच्छेदे हि सत्त्रत्वं न स्यात्। अनध्याये यदध्ययनं तेन वषट्कृतं यथा याज्यान्ते अविच्छेदो वषट्कारेण क्रियते एवं चतुर्दश्याद्यनध्यायाध्ययनं वषट्कारस्थानीयं वषट्शब्दो लक्ष्यते। तेन कृतं युक्तं संस्कृतं साधनकृतेति समासः ॥ मे० ॥

नैत्यिके एतस्मिन्ब्रह्मयज्ञे ऽनध्यायो नास्ति। यस्माद्ब्रह्मसत्त्रं तन्मन्वादिभिः स्मृतम्।...किमस्य सत्त्रसादृश्यमित्यत आह। ब्रह्माभिकृतमित्यादि। सत्त्रं सोमाहुत्या हुतं भवतीदमपि वेदोच्चारणाहुत्या हुतं ब्रह्माहुतिरिवा-

त्यर्थत्वात्पुण्यहेतुत्वाच्च सत्रतुल्यं सत्रं च प्रदानार्थेन वषट्कारेण युक्तं भवति। इदमपि अनध्यायाध्ययनादनध्यावषट्कृतम्॥ गो०॥

अन्यया वेदेन। सत्रं संतन्यमाना क्रिया यतो ऽतः क्रियासंतत्यविच्छेदार्थं नानध्यायानुरोधः। किंत्वेकां चर्चमेकं वा यजुरेकं वा सामाभिव्याहरेदित्यापस्तम्बवचनादनुसंधानमत्रान्यदन्वीयो ऽनुष्ठेयम्।...॥ ना०॥

अर्थवादेनोक्तमर्थं दृढयति। नैत्यक इति। ब्रह्मसत्रं सततभवत्वात्। अग्निवाहुतिस्तस्याहुतं होमरूपाध्ययनं सोमाहुतिस्थानीयम्।...॥ रा०॥

नैत्यिके नास्त्यनध्यायः। कुतः। अग्निवाहुतिर्ब्रह्माहुतिः। वेदद्रव्याहुतिरिति यावत्। सा यस्मिन्सत्रे हुता तद्ब्रह्माहुतिः।...॥ ना०॥ १०६॥

---

प्रकृतविधिशेषो ऽयम्। स च नित्यः समधिगतः।...स्वाध्यायं वेदमधीते ऽब्दं संवत्सरं प्राक्कूलाध्यासनेन नियतः संयतेन्द्रियः शुचिः स्नानादिना तस्य पुरुषस्य नित्यं यावज्जीवं क्षरति स्रवति ददाति एष स्वाध्यायः पयो दधीति। अन्ये तु धर्मार्थकाममोक्षा पयआदिभिः शब्दैरभिहिता मन्यन्ते। पयः शुद्धिसामान्याद्धर्मः। दधि पुष्टिहेतुत्वादर्थः। स्नेहसामान्याद्घृतं कामः। सर्वरसैक्यान्मधु मोक्षः।...॥ मे०॥

एवं ब्रह्मयज्ञाख्यं स्वाध्यायमरण्ये गमनाद्युक्तविधानेन संयतमनाः शुचिः स्नातः संवत्सरमधीते। तस्यैव पयोदधिघृतमधूनि नित्यं ददातीति। एवं च नित्यत्वे ऽपि फलकामनया फलमप्यतो भवति। दर्शपौर्णमासवत्॥ गो०॥

नियतः इन्द्रियप्रत्याहारवान्। पयः श्वेतवर्णसारूप्याद्धर्मः। दुग्धोद्धृतत्वादर्थो दधि। तदुभयप्रभवत्वात् घृतं कामः। मध्विति परमात्मनाम। तद्विषयतया ब्रह्मविद्यायां मधुशब्दप्रयोगः।...॥ ना०॥

अध्ययनस्य गुणफलमाह। य इति। विधिना प्राक्कूलानित्युक्तेन क्षरति पित्रादीनां तृप्तिं प्रति तदुक्तम्।...॥ रा०॥

स्वाध्यायो ब्रह्मयज्ञविषयः। अब्दमब्दत्रयमपि। एष स्वाध्यायः। पयो

धर्मं शुद्धिसामान्यात्। मेदोऽर्थं पुष्टिहेतुत्वसामान्यात्। घृतं कामं स्नेह-साम्यात्। मधु मोक्षं सारैक्यात्।...॥ न० ॥ १०७ ॥

---

सायंप्रातः समिद्भिरग्नेरादीपनमग्नीन्धनम्। आपर्यङ्कारोहणमधःशय्यां न तु स्थण्डिलशायित्वमेव। गुरवे हितमुदकुम्भाद्याहरणेन शुश्रूषालक्षणम्। यत्तु तदुपकारकरणं तद्यावज्जीविकम्। एतदा ब्रह्मचर्यसमाप्तेर्गुरुकुलनि-वृत्तिलक्षणात्स्नानात्कर्तव्यम्। स्वाध्यायाध्ययनविध्यर्थत्वात्॥ मे०॥

अग्निसमिदाधानं भैक्षचरणवदधःशयनगुरुगृहोपलेपनाद्यात्मकगुरुहि-तानि समावर्ताख्यव्रतकालं यावदुपनयनकालोत्तरकालं द्विजः कुर्यात्। प्रधा-नानुपयायित्वेनाङ्गाना यावद्ब्रह्मचर्यमेषामनुवृत्तिसिद्धैव पुनर्वचनं नियमाय भवतीत्येतावन्त्येव समावर्तने निवर्तन्ते। अन्यानि पुनः संध्योपासनादीनि आश्रमान्तराविरुद्धानि यावज्जीवं भवन्ति।...॥ गो० ॥

समिदाधानमिन्धनम्। अधःशय्या खट्वाद्युपरिशयनत्यागः। गुरोर्हितं तत्परिचर्या। एतच्चैतेषां ब्रह्मयज्ञसंध्योपासनादिवत् समावर्तनादूर्ध्वमप्यनु-ष्ठानप्रसङ्गं वारयितुमुक्तम्। अत एव गौतमः। उत्तरेषां चैतदविरो-धीति ॥ ना० ॥

ब्रह्मचारिणो ऽवश्यं कर्तव्यमाह। अग्नीन्धनमिति। अग्नीन्धनं सायंप्रातः समिद्धोमः। अधःशय्यां खट्वाद्यनारूढतां कुर्यात्समावर्तनपर्यन्तमित्यन्वयः॥ रा० ॥

अग्नीन्धनादिभ्यो ऽन्येषां यावज्जीवप्रयोग इति। गुरोर्हितमुदकुम्भाहर-णादि। अन्यस्य यावज्जीवकालत्वात्॥ न० ॥ १०८ ॥

---

ब्रह्मचारिधर्मप्रसङ्गेन स्वाध्यायविधिरयमुच्यते। आचार्यस्य पुत्रः। शुश्रूषा परिचर्या गृहोपयोगि शक्तितः कर्मकरणं शरीरसंवाहनं च। ज्ञानदो यः कश्चिद् ग्रन्थ आचार्यस्य न विहितः शिष्येण कथंचिच्छिक्षितः...। धार्मिकः

अग्निहोत्रादिकर्मानुष्ठानप्रधानः। शुचिर्मृद्वारिशुद्धः अर्थशुद्धश्च। गोबलिवर्दवत्पदत्रयस्य पुनरुक्तं धार्मिकः शुचिः साधुरिति। आप्तः सुहृद्बान्धवादिः प्रत्यासन्नः। शक्तो ग्रहणधारणसमर्थः। स्वः पुत्र उपनीतश्च पूर्वं अन्योपनीता अपि अध्याप्याः। ननु च धर्मत इत्युच्यते। एतैरध्यापितैर्धर्मो भवति। अर्थदश्चादृष्टेनोपकरोति।...अध्याप्या दश धर्मत नर्हि। उपाध्यायस्त्वाह। धर्मशास्त्रव्यवस्थोच्यते। एतैरध्यापितैर्धर्मातिक्रमो न भवति। न पुनरर्थदे अध्यापिते विद्यादानलक्षणो धर्मो भवति॥ मे०॥

आचार्यपुत्रः परिचर्यापरः विद्याप्रदो धर्मानुष्ठानशीलः मृद्वार्यादिशौचयुक्तः बन्धुर्ग्रहणधारणसमर्थः अपणपूर्वप्रार्थनादाता आर्जवोपेतः आत्मनोपनीतः। एते दश धर्मार्थमध्याप्याः। अर्थद शुश्रषुर्ज्ञानदो ऽध्यापनादपि धर्मो नियमाददृष्टरूपेणेति वचनात्॥ गो०॥

शुश्रूषुः कृतपरिचर्यः। धार्मिको धर्मानुष्ठानशीलः। शुचिः शुद्धभावः। आप्तो बन्धुः। शक्तो ग्रहणधारणादिशक्तिमान्। अर्थदः परिभाषां विना पूर्वं धनेन कृतोपकारः। साधुरार्जवोपेतः। स्वो ज्ञातिः। धर्मतो धर्ममुद्दिश्य। न तु भविष्यदर्थशुश्रूषादि॥ ना०॥

धार्मिकः लाभाद्यनुपजीव्य धर्मार्थं यः पठति।...॥ रा०॥

धर्मतः न्यायतः कः पुनरत्र न्याय इत्यपेक्षायामाह॥ न०॥ १०९॥

---

अधीयानेनानुपसन्नेन यदि नाशितमपाक्षरं विस्तरं वाधीतम्। तदा अपृष्टेन न वक्तव्यम्। नाशितं त्वया एवमेतत्पठितव्यमिति शिष्यस्य त्वपृच्छतो ऽपि वक्तव्यम्। पृच्छमानो ऽपि यद्यन्यायेन पृच्छति तथापि न वक्तव्यम्। प्रश्रयपूर्वकमस्मिन्वस्तुनि मे संदेहस्तदपदेष्टुमर्हसीति शिष्यधर्मेण प्रश्नो न्यायेन। अन्यथा तु जानन्नपि जडवत् मूकवल्लोके वर्तेत आचरेत् व्यवहरेदज्ञ इव तूष्णीमासीत। शास्त्रविषयो ऽयमपृष्टसंदेहापनयननिषेधः। व्यवहारे तु वक्ष्यति। अनियुक्तो नियुक्तो वा धर्मज्ञो वक्तुमर्हतीति।...॥ मे०॥

पूर्वोक्तव्यतिरेकेणान्यस्य कस्यचिदधीयानस्य॰॰ ऽपृष्टो न कथयेत् । नापि विलक्षणया पृच्छतः । किं तर्हि तत्र जानन्नपि प्राज्ञो बधिर इव लोके व्यवहरेत् । अत्रार्थवादो विद्वेषणार्थः ॥ गो० ॥

नापृष्ट इति । शिष्यव्यतिरेकेणान्यस्यापृष्टो न ब्रूयात् । न चान्यायेन परिहासादिना पृच्छतः ॥ ना० ॥

सार्थवादान्यथाप्रश्नस्याह । नापृष्ट इति षड्भिः । अन्यायेन यथाविधि नमस्कारादिरहितेन पृच्छतस्तं प्रति न ब्रूयादिति । जानन्नपि तत्र समर्थोऽपि लोके अप्रावे जडवन्मूकवत्स्यात् ॥ रा० ॥

॰॰॰न्यायवर्जिते प्रश्ने प्रवचने च दोषमाह ॥ न० ॥ ११० ॥

---

प्रतिषेधस्यातिक्रमे दोषमाह । अधर्मेण पृष्ट अन्यायपृष्टश्च यः प्रब्रवीतीति । एवमेव तद्युक्तमध्येतुमिति । यश्च पृच्छति । तावुभावपि म्रियेते । अप्राप्तकालौ । अथैको व्यतिक्रमकारी स एव म्रियते । यद्यन्यायेन पृष्टो न वक्ति । तदा अपृष्टैव अथ प्रतिवक्ति तदोभावपि अनेन अन्यायप्रश्नदोषप्रदर्शनेन प्रत्युन्नेयः प्रश्नविधिः । विद्वेषं वा द्वेष्यतां लोके प्राप्नोति ॥ मे० ॥

उक्तमर्यादातिक्रमेण यः प्राह यो वा पृच्छति । तयोरन्यतरो योऽतिक्रमकृत्स म्रियते द्वेषं वा लोके भजते । पूर्वोक्तनिमित्तानां मध्याद्धर्मादिनिमित्तत्रयस्य उपायित्वं दर्शयितुमाह ॥ गो० ॥

अधर्मेण यथोक्ताध्यायविधिं विना प्रैति म्रियते । विद्वेषमन्यतरस्यान्यतरोऽधिगच्छति ॥ ना० ॥

अधर्मेण पृष्ट इति शेषः । प्राह धर्मेण च पृच्छति । यस्तयोर्मध्ये ऽन्यतरो व्यतिक्रमकारी प्रैति म्रियते फलाच्चयवते वा ॥ रा० ॥

प्राह प्रवचनं करोति । प्रैति म्रियते ॥ न० ॥ १११ ॥

---

॰॰॰अर्थशब्द उपकारमात्रलक्षणपरो द्रष्टव्यः । विद्या विनियमेऽनापि पूर्वमध्ययनस्योक्तत्वात् । तद्विधा अध्यापनानुरूपा । महति महती स्वल्पे स्वल्पेति ।

विद्या विद्यते ज्ञायते ऽनया यथा सर्वो ऽर्थ इति सा विद्या पाठो ऽर्थावबोधश्च। अनुपकारी नाध्याप्यो न चास्यार्थविवरणं कर्तव्यम्। ऊषरो भूमिभाग उच्यते यस्मिन्नखिले ऽपि मृत्तिकादौषाद्बीजं न प्ररोहति शुभं श्रेष्ठं व्रीह्यादिकं लाङ्गलादिनोप्यते। एवं विद्यापि क्षेत्रे वुप्ता महाफला भवति।...॥ मे० ॥

यदध्यापने धर्मः पशपूर्वो वार्थो न भवेत्पशपूर्वस्य भृतकाध्यापकत्वेन निषिद्धत्वात्परिचर्याध्यापनानुरूपापरिपुष्टं बीजमिवाङ्कुरजननासमर्थे भूप्रदेशे एव च ॥ गो० ॥

धर्म उक्तेषु दशसु। अर्थः परिभाषां विना भविष्यदर्थसंभावना। शुश्रूषा परिचर्या। सापि तद्विधा अध्ययनस्य यादृशमस्य हितत्वं तदनुरूपा। ऊषरे लवणभूमौ ॥ ना० ॥

तद्विधा विद्यादानानुरूपा। ऊषरे क्षारभूमौ। तत्रोप्तं यथा नाङ्कुरयति तथा तादृशे धर्माधर्मादयो न स्युरिति ॥ रा० ॥ ११२ ॥

---

समंशब्दः सहार्थे। अप्रतिपादितया स्वदेह एव जर्जरिततया युक्तं ब्रह्मवादिनो वेदाध्यायिनो मरणं न पुनरिरिणे प्रतिपादनम्। अनेन च ज्ञायते। अध्यापनमप्यधीतवेदेनावश्यं कर्तव्यम्।...अत्यन्तदुर्गतेनापि नेरिणे वप्तव्येति।...॥ मे० ॥

वरमदत्तविद्येनैव विद्याध्यापनशीलेन मर्तव्यम्। न पुनः कष्टायामपायद्येना विद्यामिरिणे ऊषर इव धर्मादिफलोत्पादनशून्ये वपेत्। अनेन चैतद्दर्शयति यदवश्यं दातव्या विद्येति। अन्यथा कामं विद्ययैव सह मर्तव्यम्। इत्येतदभावसंस्तवनमाचार्यसंबन्धिनोपपद्यते।...॥ गो० ॥

ब्रह्मवादिना वेदवादिना। घोरायामापदि दुर्भिक्षादौ।...॥ ना० ॥

ब्रह्मवादिना वेदानध्यापयितुमिच्छता। घोरायां वृत्त्यभावेन मृत्युपर्यवसितायां फललोभात्कस्यचिदूषरे ऽपि शुभबीजारोपणं प्राप्तम्। तन्निरासायाह न त्वेनामिति।...॥ रा० ॥

ईरिणे ऊषरे धर्मार्थहीने पुरुष इति यावत्। वपेत् ब्रूयात् ॥ न० ॥
॥ ११३ ॥

---

अयमर्थवाद एव। विद्या मूर्तिमती कंचिदुपाध्यायमागत्याह प्रोक्तवती शेवधिर्निधिस्तवास्मि रक्ष मां। का पुनस्ते रक्षा। असूयकाय कुत्सापराय निन्दकाय मां मा दा निन्दकं माध्यापय। तथा चैवमहं वीर्यवत्तमा अतिशयेन तव कार्यकरी भवामि। वीर्यं कार्यनिर्वृत्तौ सामर्थ्यातिशयः। शेवधिष्टेऽस्मीति कृतघत्वं पठितं तच्छान्दसप्रयोगानुकरणम् ॥ मे० ॥

विद्या किल विग्रहवती कंचिद्ब्राह्मणमागत्य निधिरिव तमाह यतो रक्ष मामित्याह। रक्षा चासूयकमपात्रं मां माध्यापय तथा सत्यहमतिशयेन तव दृष्टादृष्टकार्यकरणसमर्था भवामि ॥ गो० ॥

शेवधिर्निधिः ॥ ना० ॥

...वीर्यवत्तमा वीर्यातिशयवती ॥ रा० ॥

...असूयकायापात्रभूताय ॥ न० ॥ ११४ ॥

---

यं शिष्यं शुचिं जानीयात्। नियतं संयतेन्द्रियं यत्नपरं ब्रह्मचारिणं तस्मै मां ब्रूहि। यस्माद्धि निधिं पाति रक्षति यतो ऽसावप्रमादी न प्रमाद्यति न स्खलति। तत्परत्वात्। शुतया प्रार्थदादीनां सर्वशिष्याणामेतद्गुणसंयोगो यस्मादर्थवादाद्गम्यते ॥ मे० ॥

यं पुनर्म्दार्यादिशौचयुक्तं नियतं संयतेन्द्रियं ब्रह्मचारिणमस्त्रीसंप्रयोगं जानीयात्प्राधान्यादस्य पृथगुपदेशस्तं विप्रं विद्यानिधिपालनसमर्थमविस्मरणशीलमप्रमादिनमनभ्यासशून्यमध्यापयेदिति ॥ गो० ॥

नियतं निश्चयवन्तम्। ब्रह्मचारिणमच्युतब्रह्मचर्यम् ॥ ना० ॥

दानपात्रमाह यमिति। नियतमुक्तनियमवन्तम्। विद्याज्जानीयात्। निधिपाय निधिं विद्यां पातुं शीलाय। अप्रमादिनेऽकुत्सिताय ब्रूहि ॥ रा० ॥

विद्या जानीयाः। निधिपाय विद्यानिधिपालाय। पात्रे प्रदानं रक्षणमात्राभिप्रेतम्। विप्रशब्दः क्षत्रियवैश्ययोरप्युपलक्षणार्थः ॥ न० ॥ ११५ ॥

---

यो ऽभ्यासार्थमधीयानस्य अन्यं चोद्दिशैवं व्याचक्षाणस्य तत्संनिकर्षमन्य आगत्य तद् ब्रह्मापूर्वं गृह्णीयात्संदेहं वापनुदेत्तस्यैष दोष उच्यते। यावदनुज्ञामसौ न दाप्यते। यथैते त्वत्सकाशादधीयते। एवमहमप्यधीयीयेत्यनुज्ञातुमर्हसीति लब्धानुज्ञानः शिक्ष्येत। अन्यथा ब्रह्माध्ययनं तत्स्तेयमिव साध्येतानेन ब्रह्मचौर्येण संयुक्तो नरकं महायातनस्थानं प्राप्नोति।...॥ मे० ॥

अन्यानध्यापयतो अविस्मरणार्थं चाभ्यस्यतो अननुज्ञातं ब्रह्म शिक्षेत्। स च ब्रह्मचौर्ययुक्तो नरकं व्रजति ॥ गो० ॥

अवाप्नुयादभ्यस्येत् ॥ ना० ॥

ब्रह्म वेदमधीयानादन्यस्मात्तदर्थोच्चारितं नियतस्तन्त्रतत्रस्थ अवाप्नुयात्स्वीकुर्यात् ॥ रा० ॥

स्पष्टः। नियमान्तरमाह ॥ न० ॥ ११६ ॥

---

अतिक्रान्तं प्रासङ्गिकम्। अभिवादनविधिरिदानीं प्रक्रम्यते। लोकेभवं लौकिकम्। लोकाचारशिक्षणम्। अथवा गीतवादित्रकलानां ज्ञानं वात्स्यायनस्य विशालादिकलाविषयग्रन्थज्ञानम्। वैदिकं विधिचोदितं वेदवेदाङ्गस्मृतिविषयम्। अध्यात्मिकविद्या अत्मोपनिषद्विद्या।...॥ मे० ॥

लौकिकं दृष्टहितार्थमायुर्वेदादिकम्। वैदिकं वेदवेदाङ्गविषयम्। आध्यात्मिकं साङ्ख्याद्यध्यात्मविद्याविषयं ज्ञानम्। यतः शिक्ष्येत। तं पूर्वं तदभिभाषणं निरपेक्ष्य वक्ष्यमाणप्रकारेणाभिवादयेत्। अत्रार्थवादः ॥ गो० ॥

लौकिकमिति लौकिकमौषधनीत्यादिविषयम्। वैदिकं यज्ञादिकर्मकाण्डविषयम्। आध्यात्मिकमात्मविषयम्। तं पूर्वमभिवादयेदाचार्यादिष्वसत्सु। अत्रापि ज्ञानाप्रकर्षाधिक्यापेक्षया प्राथम्यमूह्यम्। यथा आद्यापेक्षया द्वितीयस्य। तदपेक्षया तृतीयस्य।...॥ ना० ॥

लौकिकं कृषिचित्रादिविषयम् । स्मार्तं वा । वैदिकमग्निहोत्रादिप्रतिपादकम् । अध्यात्मिकमात्मनात्मकविवेकविषयकं ज्ञानं तद्धेतुः शास्त्रादि ॥ रा० ॥

लौकिकमर्थशास्त्रादिविषयम् । अध्यात्मिकमात्मविषयम् । अध्यात्मिकस्य ज्ञानस्य वैदिकत्वे ऽपि पृथगुपादानं तस्य अद्वैयतरत्वप्रतिपत्त्यर्थम् ॥ न० ॥ ॥ ११७ ॥

---

अभिवादाद्याचारविधिस्तुतिरियम् । सावित्रीमात्रं सारं प्रधानं यस्य स एवमुच्यते । सावित्रीमात्राध्ययनो वरः श्रेष्ठो विप्रो यदि सुयन्त्रितो भवति । शास्त्रनिगृहीतात्मा । अयन्त्रितस्त्रिवेदो ऽपि बहुशास्त्रविदपि सर्वमश्नाति । लोकाचारगर्हितं साक्षात्प्रतिषिद्धमपि । एवं सर्वविक्रयी । प्रदर्शनार्थावश्नविक्रयौ । अन्यस्यापि प्रतिषिद्धस्यैतदुक्तं भवति । यथान्यनियमत्यागान्निन्द्यते । एवं प्रत्युत्थानादित्यागादपि ।...॥ मे० ॥

यदि विप्रः सुयन्त्रितो ऽभिवादाचारानुष्ठानयन्त्रितात्मा भवति तदा सावित्रीमात्रप्रधानो ऽपि तावन्मात्राध्येतापि वरं प्रशस्यो न त्वनाचारस्त्रिवेदो ऽपि प्रशस्यो यतो ऽसावयन्त्रितत्वात्सर्वाशी सर्वविक्रयी च भवति ॥ गो० ॥

वेदस्यैकां शाखामधीत्य सावित्रीमात्रं सारत्वेनोपादाय तज्जपादिमात्रपरो ऽपि । सुयन्त्रितो वृत्तस्थः श्रेयान् ।...॥ ना० ॥

सुयन्त्रित असत्प्रतिग्रहनिषिद्धरसादिविक्रयपराङ्मुखः ।...॥ रा० ॥

सुयन्त्रित अनुल्लङ्घितशास्त्रमार्गः । विप्रो द्विजः ॥ न० ॥ ११८ ॥

---

शय्या चासनं चेति जातिरप्राणिनामिति द्वन्द्वैकवद्भावस्तस्मिञ्छ्रेयसा विद्याद्यधिकेन गुर्वादिना च न संविशेत् । न सहासीत । अध्याचरिते कल्पिते शय्यात्वेनासनत्वेन च । यत्तु शिलाफलकादि तत्र न दोषो वक्ष्यति च । आसीत गुरुणा सार्धमिति । तस्यैवायमनुवादः । अन्ये व्याचक्षते ।

अध्याचरिते ऽधिष्ठित इति न समाविशेत् ।...गुरोः श्रेयसः प्रत्युत्थानमासनस्थस्यैव संभवति। अस्यार्थवादः ॥ मे० ॥

शय्यासनं यद्गुर्वादिना सेवितं सेव्यमानं वा तत्र नोपविशेत्। शय्यासनस्थश्चैनमायान्तं दृष्ट्वा तत उत्थायाभिवादयेत् ॥ गो० ॥

शय्यासनं यद्गुर्वादिनाध्याचरितमुपभुक्तम्। तत्र न समाविशेत् नोपवेशनादि कुर्यादित्यर्थः । एवं श्रेयांसं प्रत्युत्थाय तत्संमुखम् ॥ ना० ॥

श्रेयसा गुरुणा अध्याचरिते स्वीकृते वक्ष्यमाणकटादिचतुष्टयातिरिक्ते न समाविशेत् नाधितिष्ठेत । एनं गुरुं प्रत्युत्थाय शय्यादेरित्यर्थः ॥ रा० ॥

श्रेयसा गुर्वादिना ।...अभिवादनविधेरर्थवादं श्लोकद्वयेनाह ॥ रा० ॥ ११९ ॥

---

स्थविरे वृद्धवयसि आयति आगच्छति यूनस्तरुणस्य ऊर्ध्वं प्राणा जीवितहेतवः...ऊर्ध्वमास्याद्बहिर्निष्क्रमान्ति । अपानवृत्तिं परित्यज्य जीवविच्छेद चिकीर्षन्ति ॥ मे० ॥

यस्माज्ज्येष्ठ आगच्छति सति कनीयसः प्राणा ऊर्ध्वं निर्गन्तुमिच्छन्ति । अनाचारेणायुःक्षयात्। प्रत्युत्थानाभिवादाभ्यां हेतुभूताभ्या पुनस्तान्स्वीकरोति । तस्मात्तौ कर्तव्यौ । अयं च परोऽचोपकारदर्शनेन ॥ गो० ॥

अप्रत्युत्थानमनायुष्यमित्यर्थः । आयत्यागच्छत्यप्रत्युत्थिते । पुनःशब्दस्तुशब्दार्थे न प्रत्याहृत्यर्थे । प्रतिपद्यते प्राप्नोति । स प्राण एव भवत्यनुक्रमणात् ॥ ना० ॥

ऊर्ध्वमुत्क्रामन्ति देहाद्बहिर्गता इव भवन्ति ।...॥ रा० ॥

यूनः बालस्य स्थविरे स्वस्माद्वयसा गुणेन चाधिके । आयति आगच्छति । न० ॥ १२० ॥

---

सर्वानेव प्रति पूर्वाभिभाषिता यथार्हमभिवादनशीलता न पुनरभिवादशब्दोच्चारणमेव शीलशब्देन प्रयोजनापेक्षाभाव उच्यते । नित्यं वृद्धानुपसेवते प्रियवचनादिना यथाशक्त्या ह्युपकारेण चाराधयते । तस्य चत्वारि

संप्रवर्धन्ते। आयुर्धमः अमुत्र स्वर्गादिफलयादयः । यष्टीबले च प्रागुक्तो। अर्थवादो ऽप्ययं फलावगमहेतुः ॥ मे० ॥

अभिवादनकरणस्वभावस्य सर्वदा वृद्धेषु परिचर्यारतस्य आयुःप्रज्ञाख्यातिबलानि चत्वारि वृद्धिमुपायान्ति। कथं पुनरभिवादनं कार्यमित्यत आह ॥ गो० ॥

वृद्धोपसेविनो वृद्धानां समीपे स्थित्वा माननादिना सेवां तत्कुर्वतः ॥ ना० ॥

प्रज्ञा बुद्धिः। विद्येति क्वचित्पाठः। अभिवादने नियममाह ॥ रा० ॥

वृद्धानभिवादनेन सेवमानस्येत्यर्थः। अभिवादनप्रकारमाह ॥ न० ॥ १२१॥

---

येन शब्देन परः संबोध्यते आशिषं प्रति प्रयोज्यते कुशलप्रश्नं वा कार्यते सो ऽभिवादः। अस्मादभिवादनप्रतिपादकाच्छब्दात्परमिमं शब्दमुच्चारयेत्। असौ नामाहमस्मीति। असाविति सर्वनामसर्वविशेषप्रतिपादकम्।... तत्रासौ देवदत्तनामाहमित्युक्तेनाभिवादनं प्रतिपद्येत। ..॥ मे० ॥

ज्येष्ठस्याभिवादनं कुर्वन्नभिवादय इत्येतच्छब्दात्परं भद्रनामाहमस्मीत्येवं स्वनामोच्चारयेत्। विप्रग्रहणमिह प्रत्यभिवादवाक्ये च द्विजोपदर्शनार्थं चयाणां प्रकृतत्वात्। एवं सर्वत्र स्वनामोच्चारणप्राप्तावाह ॥ गो० ॥

...अभिवादय इति शब्दात्परमनन्तरं स्वं नाम कीर्तयेदमुकशर्मा नामाहमस्मीति। असाविति सविभक्तिकनामनिर्देशादमुकशर्मेत्यपि सविभक्तिकं कार्यम्। ज्यायांसमिति वदन् ज्यायानेवाभिवाद्य इति कथयति।...॥ ना० ॥

...अभिवादय इत्यस्मात्परमसौ देवदत्तनामाहमस्मीति।...॥ रा० ॥

ज्यायासमभिवादयन्विप्रो द्विजः।...॥ न० ॥ १२२ ॥

---

ये केचिदविद्वांसो नामधेयस्य संस्कृतस्योच्चारितस्याभिवादमभिवादार्थमभिवादिता एतेन वयमित्यवैयाकरणा न जानते संस्कृतं नावबुध्यन्ते

तान्...। तत्र विध्येकदेशं स्वनामग्रहणं हित्वा अभिवादयेऽहमित्येतावदेव ब्रूयात्। तदपि चेन्नावबुध्यन्ते लौकिकेनापभ्रंशेनाप्यभिवाद्या इत्येवमर्थं प्राज्ञग्रहणम्।...॥ मे० ॥

नाम्न उच्चारितस्य सतो यदभिवादनमभिवाद्या न बुध्यन्ते असंस्कृतत्वादनभिज्ञा ये तान्प्राज्ञो अभिवादयेऽहमित्येवं ब्रूयात्। स्त्रियस्वाभिज्ञा अप्येवमेव ब्रूयात् ॥ गो० ॥

नामधेयस्याभिवादनवाक्यार्थसंस्कृतानभिज्ञत्वादेव धर्मशास्त्राज्ञानेन च ये न जानते।...॥ ना० ॥

...यदि नामधेयस्योक्ताभिवादनमभिवादमभिवादाय न जानते तानहं नमस्ये अहमित्येव ब्रूयात् ॥ रा० ॥

नामधेयस्याभिवादनवाक्यस्य।...॥ न० ॥ १२३ ॥

---

स्वनाम्नोऽन्ते भोःशब्दं कीर्तयेत्। स्वग्रहणमभिवाद्यमानप्रतिषेधार्थम्। परिशिष्टोऽर्थवादः। न च नामाक्षराणामेवान्ते अपि तु ततः परेषामहमस्मीति।...॥ मे० ॥

अभिवादने यत्स्वं नाम तदन्ते भोःशब्दं कीर्तयेत्।...यस्मान्नाम्नां यत्स्वरूपसत्ता सैव भोभावो भो इत्यस्य सत्तेति मन्वादिभिः स्मृतः। अतस्वाभिवाद्यनामस्थानापन्नं तत्संबोधनार्थं भोःशब्दं कीर्तयेत्। तेनाभिवादयेऽहंदत्तनामाहमस्मि भो इत्यभिवादनरूपमिदानीं प्रत्यभिवादनविधिमाह ॥ गो० ॥

स्वस्य नाम्नः स्वनामवद्वाक्यस्याभिवादये असौ नामाहमस्मीत्यस्यान्तो भोःशब्दो नाम्नां स्वीयानां स्वरूपभावः स्वरूपस्य संबोध्यं प्रतिप्राप्तिहेतुः। भोःशब्दो न हि बोधितोऽसावस्य नाम बुध्यत इत्यर्थः। भोभाव इति पाठे भोःशब्दस्य भावः सत्तेत्यर्थः ॥ ना० ॥

अभिवादने कर्तव्ये यन्नाम प्रयुक्तं तस्यान्ते भोःशब्दं कीर्तयेदित्यन्वयः। भोःशब्दप्रयोगे हेतुर्नाम्नामिति। अभिवाद्यस्य नाम्नां स्वरूपभावे भोभावो भो इत्यनुशिष्टस्तेन भो इत्यवश्यं प्रयुज्यते अभिमुखीकरणाय।...॥ रा० ॥

देवदत्तो नामाहमस्मीति प्रयुक्तस्य स्वस्य नाम्नोऽन्ते भोःशब्दं कीर्तयेत् ।
अभिवादस्य नाम्ना संबोधयितुमयुक्तत्वात् । भोःशब्देन संबोधयेत् ।...
केचिदिमं श्लोकं नामधेयस्य ये केचिदित्यस्य श्लोकस्यानन्तरं पठन्ति ॥ न० ॥
॥ १२४ ॥

---

अभिवादने कृते प्रत्यभिवादयित्रा एवं वाच्यः । आयुष्मान्भव सौम्येति । इतिशब्दः प्रकारे । आयुष्मानपि दीर्घायुर्भूयाश्चिरं जीवेत्येवमादि शब्दपरिग्रहः शिष्टाचारप्रसिद्धो भवति । अकारश्चास्य प्रत्यभिवाद्यस्य यन्नाम तदन्ते अकारः प्लुतः कर्तव्यः । प्लुत इति मात्रस्य संज्ञा । अकारग्रहणमिकारादीनामपि प्रदर्शनार्थम् । अनपेक्षमेव चान्तत्वं द्रष्टव्यम् । व्यञ्जनान्तस्यापि योऽन्त्यः स्वरस्तस्य भवति ।...एतदुक्तं भवति । पूर्व एव नागन्तुरकारः प्लुतः कर्तव्यः । किं तर्हि य एव नाम्नि विद्यते । स एव प्लावयितव्यः । सर्वं चैतदेव व्याख्यातं भगवतः पाणिनेः ।...॥ मे० ॥

अभिवादने कृते आयुष्मान्भव सौम्येत्येवमभिवादयित्रा वाच्यः । अभिवादयितुश्च नाम्नोऽन्ते यो अकारादिवर्णो नाम्नामकारान्तत्वनियमाभावात्स प्लुतः कार्यः । पूर्वाण्यक्षराणि यस्मात्स पूर्वाक्षरो नागन्तुकस्ततोऽपकृष्य वा तेनायुष्मान्भव सौम्येति भद्रमिति प्रत्यभिवादरूपम् । अत्रार्थवादः ॥ गो० ॥

अभिवादने कृते अभिवादयिता वाच्य इत्यर्थः । अकार इति आयुष्मान्भव सौम्येति वाक्यान्तेऽस्याभिवादकस्य नाम वाच्यम् । अमुकशर्मन्निति । तस्य चान्ते अकारो वाच्यस्तस्य च पूर्वाक्षरः पूर्वमक्षरं लिङ्गव्यत्ययश्छान्दसः सप्लुतो वाच्यः । नकारस्य व्यवहितपूर्वत्वेऽपि व्यञ्जनस्य प्लुतत्वायोगात् । शर्मन्नित्यत्र न्त्यो कार एव पूर्वपदेनोक्त इति तस्यैव प्लुतता । एवं क्षत्रियादेः । शर्मस्थाने वर्मादिपदम् । पूर्वाक्षरप्लुत इति क्वचित्पाठः । तत्र पूर्वमक्षरं प्लुतमस्येति सुस्थमेव ॥ ना० ॥

...आयुष्मानिति चिरं जीवादेरुपलक्षणम् । अकारश्चेति । अकारा-

दिस्वरः अस्याभिवादकस्य नाम्नोऽन्ते अमुकशर्मन्नित्यादेरन्ते वर्तमानः प्लुतः प्रत्यभिवादकेन वाच्यः।...॥ रा० ॥

अभिवादने कृते सति विप्रः द्विजः ज्यायसा कनीयान् अस्य कनीयसो नाम्नोऽन्ते पूर्वाक्षरप्लुतः अक्षरशब्देन स्वरो विवक्षितः । व्यञ्जनस्य प्लुतासंभवात्। यस्मादकारात्पूर्वमक्षरं प्लुतं भवति । स पूर्वाक्षरः प्लुतः । अकारश्च वाच्यः । आयुष्मान्भव सौम्य देवदत्ता३अ इति वाच्य इति यावत्॥ न० ॥
॥ १२५ ॥

---

यो न वेत्ति प्रत्यभिवादनमित्येवं वाच्यमभिवादस्येत्यतिरिच्यते न संगच्छते नैवमभिवादस्यानुरूप्यं प्रत्यभिवादनमित्येव योजना क्रियते । येन स्वनामोच्चार्याभिवादनं कृतं तस्य नामान्ते प्लुतिः कर्तव्या । यस्त्वहं भो इत्येवमभ्यवदन्न तस्य नामोच्चारणेनापि प्लुतिरिति नाभिवाद्य इत्यभिवादनशब्दोच्चारणप्रतिषेधो यथाविहितमभिवादनं कर्तव्यम्। न पुनरहं भो इत्यादि तस्य प्रागदर्शितत्वात् । यथा शूद्र इति च दृष्टान्तेनैतदेव ज्ञायते । शूद्रस्यापि हि वृद्धवयसोऽभिवाद्यत्वमिष्यते । विदुषेति पादपूरणार्थम् ॥ मे० ॥

यथाशास्त्रमभिवादनस्य कृतस्य यः प्रत्यभिवादनं कर्तुं न जानाति विप्रः किमुतान्यः । स विदुषा शूद्रवन्नाभिवाद्यः । तस्मात्प्रत्यभिवादो यथाशास्त्रं विज्ञाय सम्यक्कर्तव्य इति स्थितिः।...॥ गो० ॥

अभिवादनस्य कृतस्य ये तत्प्रत्यभिवादनमभिवादनप्रतियोगिवाक्यम्। अथ यो नाभिवाद्यस्त्रिवर्षपूर्वत्वादिगुणरहिते तत्र दृष्टे यत्कार्यं तदाह ॥ ना० ॥

नाभिवाद्य इति यथाशास्त्रं नमस्यः। तत्र हेतुः । यथा शूद्र इति । गायत्रीमात्रसार इत्यनेन तादृशं तदजानतामनमस्यतोक्तेः ॥ रा० ॥

विप्रः द्विजः । अभिवादनवाक्यस्य प्रत्यभिवादनं वाक्यम्। यथा शूद्र इति निन्दापरमेतत्तत्त्वकथनम् ।...॥न०॥ १२६ ॥

---

कृताभिवादनप्रत्यभिवादनयोः सौहार्दे प्राप्ते जिज्ञासाप्रश्ने जातिभेदाश्रयः शब्दनियमोऽयमिष्यते ।...आरोग्यानामयशब्दौ समानार्थौ च। क्षेम-कुशलशब्दावपि नात्यन्तभिन्नौ ।...॥ मे० ॥

प्रत्यभिवादयिता समागत्य अभिवादयितारं ब्राह्मणं कुशलमस्तीत्येवं पृच्छेत्। क्षत्रजातीयमनामयमिति। वैश्यं क्षेममिति। शूद्रं पुनरारोग्यमिति ॥ गो० ॥

ब्राह्मणादीनां स्वस्वजातीये दृष्टे स्वस्वजात्युक्तम्। तथा स्वस्वावरजातीये तत्तज्जात्युक्तम्। न त्वेतदवरजातेरुत्तमं प्रति कुशलं पृच्छेत्। कुशलं किं भवतोऽमुकस्येति पृच्छेदित्यर्थः। एवं सर्वत्र। केचित्प्रत्यभिवादनाभिधानानन्तरमभिवादनेनैतत्प्रष्टव्यमित्याहुः ॥ ना० ॥

...ब्राह्मणादिदर्शनादौ किंचिद्वक्तव्यमिति प्राप्तं तत्र नियमाददृष्टार्थं-शब्दविशेषोच्चारणमर्थपौनरुक्त्येऽपि ॥ रा० ॥

समागम इति ब्राह्मणादिभिः प्रत्येकं संबध्यते। कुशलं स्वाध्यायादौ क्षेमम्। क्षत्रबन्धुं क्षत्रियमित्येतावत्। अनामयं शरीरे राष्ट्रे वा सुखम्। क्षेमं कृष्यादिष्वनाशम्। आरोग्यं शुश्रूषाया शरीरपाटव्यम् ॥ न० ॥ १२७ ॥

---

प्रत्यभिवादनकालेऽन्यत्र च दीक्षितो ज्योतिष्टोमादिदीक्षातः प्रभृति आ अवभृथात्स्नानान्नाम्ना न वाच्यस्तस्य यन्नामधेयं तन्नोच्चारयितव्यम् ।...भोः-शब्दं पूर्वं प्रयुज्य एतं दीक्षितमभिभाषेत। दीक्षितयजमानादिशब्दैर्यौगिकैः ।...॥ मे० ॥

यागार्थं कृतदीक्षः प्रत्यभिवादनार्थं कार्यार्थान्तरं वा नाम्ना कनीयानपि न वाच्यः। किं तर्हि भो दीक्षित। भवता यजमानेनेत्येवं भोभवच्छब्दपूर्वं यौगिकैः शब्दैरेवं धर्मज्ञो ऽभिभाषेत ॥ गो० ॥

कुशलप्रश्नादावपि यावद्दीक्षासमाप्तिस्तावन्नाम दीक्षितस्य न ग्राह्यम्। दीक्षितेत्येवं संबोधनम्। तस्य तत्रापि भोशब्दभवच्छब्दान्यतरपूर्वकमभिभाषेत संबोधयेत् ॥ ना० ॥

दीक्षितः सोमयागादिष्वभिवादनादिके निजनाम्ना अवाच्यः । किंतु भोः दीक्षितः किं करोति भवान्कुत्र गच्छतीत्यादि ॥ रा० ॥

दीक्षितः सोमयाजी ।...॥ न० ॥ १२८ ॥

---

अर्थप्रयुक्तं संभाषणं स्त्रिया सह यदा भवति तदैवं कर्तव्यम् । यत्तावत्परस्य पत्नी सा भवति सुभगे अथवा भवति भगिनि । भवच्छब्दोऽयं स्त्रीप्रत्ययान्तः संबुद्धौ कृतह्रस्वः । भवतीत्यचेति ।...॥ मे० ॥

परस्य या पत्नी भवति सा चात्मनो यदि मातृपितृभ्यां योनिसंबद्धा न भवेत्तदा तां कार्यार्थं भवतीत्यनेन शब्देन ब्रूयात् । सुभगे च भगिनीत्येवमाद्यं तेन भवति सुभगे भवति भगिनि मातरित्येवं ब्रूयात् ।...॥ गो० ॥

असंबद्धा योनितः स्वोत्पत्तिस्थानेन मात्रा पित्रा च समं ब्रूयात् । अभिवादाय तु भगिनीत्यादिभिर्नाम्ना ।...॥ ना० ॥

अर्थप्रयुक्तापरस्त्रिया सह संभाषणे योनितो असंबन्धात् उभयलक्षणासंबन्धहीनाः सुभगेत्यादि ब्रूयादित्यन्वयः ।...॥ रा० ॥

योनितोऽसंबन्धा मातृपितृयोनिसंबन्धरहिता व्यवस्थितविषयो ऽयं विकल्पः । तेन श्रेयसीं भवतीति समानां सुभगेति यवीयसीं भगिनीति ब्रूयात् ॥ न० ॥ १२९ ॥

---

गुरूनिति वचननिर्देशान्नैवात्र यो गुरुरुक्तः स एव गृह्यते । किं तर्हि गौतमीय इव सामान्यशब्दो वित्तादिश्रेष्ठवचनः । यवीयसो भागिनेयादेः स्ववयोऽपेक्षया ।...॥ मे० ॥

मातुलादीन्हीनवयसः प्रत्युत्थाय भद्रोऽहमित्येवं ब्रूयात् । ऋत्विग्वक्ष्यते । गुरुश्चात्र मातृस्वसृपत्यादिः । न विद्यागुरुः । शेषव्याख्यानस्य वक्ष्यमाणत्वात् ॥ गो० ॥

.. गुरूनुपाध्यायान् ।...॥ ना० ॥

...गुरुमिति ज्ञानवृद्धतपोवृद्धयोरुपलक्षणम् ।...॥ रा० ॥

...गुरूनाचार्यादीन् ।...॥ न० ॥ १३० ॥

---

एताश्च गुरुपत्नीवत्संपूज्याः। प्रत्युत्थानाभिवादनासनदानादिभिः।...॥ मे०॥

मातृष्वस्राद्या गुरुपत्नीवत् वक्ष्यमाणरूपेण पादोपसंग्रहणादिना संपूज्या यतस्ता गुरुभार्यातुल्याः ॥ गो० ॥

संपुज्याः प्रत्युत्थानासनादिभिः । गुरुपत्नीति गुरुश्च ब्रह्मदस्तस्य पत्नी अत्र हेतुः समास्ता इति ॥ रा० ॥

स्पष्टः ॥ न० ॥ १३१ ॥

---

भ्रातुर्ज्येष्ठस्येति द्रष्टव्यम् । उपसंग्राह्या पादयोरभिवाद्या । सवर्णा समानजातीया । क्षत्रियादिस्त्रीणां तु ज्ञातिसंबन्धिधर्मः । भ्रातुर्भार्याणामपि । विप्रोष्य ज्ञातिसंबन्धियोषितः । विप्रोष्य प्रवासात्प्रत्यागतेन । न हि प्रोषितस्योपसंग्रहणासंभवः । ज्ञातयः पितृपक्षाः पितृव्यादयः । संबन्धिनो मातृपक्षाः । श्वशुरादयश्च । अन्येषां ज्येष्ठानां याः स्त्रियः पूजारूपत्वादुपसंग्रहणस्य न कनीयसः पूजामर्हन्ति ॥ मे० ॥

पूजाप्रकरणाज्ज्येष्ठभ्रातृभार्या उपसंग्राह्या पादयोः। नाभिवाद्येह पादयोरिति दर्शनात् । सवर्णा समानजातीयां प्रत्याह । ज्ञातयो मातृपितृपक्षाः । संबन्धिनो वैवाह्याः । तद्भार्या पुनः प्रवासप्रत्यागतेनोपसंग्राह्या न त्वहरहः ॥ गो० ॥

भ्रातुर्भार्या ज्येष्ठा उपसंग्राह्या अभिवाद्या विप्रोष्य प्रवासं कृत्वा ज्ञातिस्त्रियः सपिण्डस्त्रियः संबन्धिस्त्रियः तदन्यबन्धुस्त्रियः । एतास्वपि ज्येष्ठास्वेवैतत् ॥ ना० ॥

सवर्णाः स्वस्वजातयः। विप्रोष्य प्रवासं कृत्वोपसंग्राह्या पादयोरिति शेषः । ज्ञातिसंबन्धीति ज्ञातिः स्वगोत्रजानां मातुलानां च ज्येष्ठानां योषितः ॥ रा० ॥

भ्रातृभार्या सोदरज्येष्ठभ्रातृभार्या उपसंग्राह्या पादौ स्पृष्ट्वा नमस्कार्या । विप्रोष्य प्रोषितप्रत्यागमने सतीत्यर्थः ॥ १३२ ॥

---

पितुश्च या भगिनी मातुश्च या भगिनी तस्यां स्वसरि च आत्मीयायां ज्येष्ठाया भगिन्यां मातृवद्वृत्तिरित्यतिदिश्यते । ..॥ मे० ॥

पितृष्वसृमातृष्वसृज्येष्ठभगिनीनां मातृवद्वर्तेत । मातृष्वसृपितृष्वस्रोः संपूज्या गुरुपत्नीवदित्यनेनैव पादोपसंग्रहणादिपूजा सिद्धा। इदं वचनं प्रियकरणादिमातृवृत्त्यतिदेशार्थम् । यथा वक्ष्यति तयोर्नित्यं प्रियं कुर्यादित्यौपदेशिकातिदेशकवृत्तिविधानेनैव च मातुः प्रकर्षसिद्धौ माता ताभ्यो गरीयसी पितृष्वसृमातृष्वसृज्येष्ठेति वचन मातृनिषिद्धस्य तत्प्रियकरणप्रतिषेधार्थम् ॥ गो० ॥

स्वसरि स्वस्याम् । मातृवद्वृत्तिर्वर्तनं मातरि यथा वृत्तिर्वर्तनमन्नदानादिना पोषणम् । आतिष्ठेत् अनुतिष्ठेत् । अत्र पितृमातृस्वसृसाहचर्यात् स्वज्येष्ठस्वसुरभिवादनमपि सिद्धम् । माता ताभ्य इति तेन तासामुपकारे क्रियमाणे यदि मातुरनिष्टं स्यात् तदा न कार्यमित्युक्तं भवति ॥ ना० ॥

ज्यायस्यां ज्येष्ठायाम् । स्वसरि भगिन्याम् । एतासां समवाये तासां कनीयस्यपि मातेव पूर्वं नमस्येत्याह मातेति ॥ रा० ॥

पितुश्च मातुश्च ज्यायस्यां भगिन्यामात्मनो ज्यायस्यां च स्वसर्यपि मातृवद्वृत्तिं पादोपसंग्रहणादिकमातिष्ठेत कुर्यात् । आज्ञाकरणादौ माता ताभ्यो गरीयसी ।...॥ न० ॥ १३३ ॥

---

उक्तं पूर्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयतीति कियद्भिर्वर्षैः स्थाविर्यं भवति । लोके हि शिरःपालित्ये स्थविरव्यवहारस्तन्निरूपणार्थमिदम् । दशभिर्वर्षैर्जन्मतोऽधिकैरपि पौराणां सख्यमाख्यायते । तेन न दशवर्षाधिको ज्येष्ठो भवति । अपि तु मित्रवद्व्यवहर्तव्यो यथोक्तम् । भोभवन्निति । ... ये तु कलां कांचन बिभ्रति शिल्पगीतवाद्यादिकां तेषाम्...॥ मे० ॥

एकपुरनिवासिनां निर्गुणानामेकस्य दशभिर्वर्षैर्ज्येष्ठे सत्यपि सख्यमाख्यायते । ततश्चासौ भो भवन्निति वयस्य इत्येवं गौतमस्मरणात् वाच्यः ।

एवं कलाभृतां गीतज्ञानां पञ्चभिरब्दैः सख्यमाख्यायते। वेदाध्यायिनां त्र्यब्दपूर्वं त्र्यब्दाधिकं त्रिवर्षज्येष्ठेन सख्यम्। ज्ञातिषु पुनरप्यल्पेनैव कालेन यत्र वर्षव्यवहारो नास्ति तेन सख्यमन्यथा सर्वत्राच्च ज्येष्ठव्यवहारः ॥ गो० ॥

दशाब्दपर्यन्तमाख्यायते कथ्यते पौराणां सख्यं पौराणां पुरवासिनामन्योन्यं दशाब्दादूर्ध्वमेव ज्येष्ठतायामभिवादनमित्यर्थः। पञ्चाब्दपर्यन्तं कलाभृतां कलागीतादिकारिणां चारणानाम् ।...॥ ना० ॥

नमस्कारप्रसङ्गेन मान्यत्वे कारणमाह दशाब्दाख्यमिति चतुर्भिः ।... ॥ रा० ॥

अत्र पौरशब्देन समानदेशवासिनो लक्ष्यन्ते। सख्यशब्देनालिङ्गनादिकम् ।...॥ न० ॥ १३४ ॥

---

दश वर्षाणि जातस्य भवन्ति स दशवर्षः ।...एवं शतवर्षमिति । पितापुत्रौ तौ द्रष्टव्यौ । तयोः संप्रधार्यमाणयोर्ब्राह्मणः पिता । चिरवृद्धेनापि क्षत्रियेण स्वल्पवर्षोऽपि ब्राह्मणः प्रत्युत्थायाभिवाद्यश्चेति प्रकरणार्थः ॥ मे० ॥

ब्राह्मणक्षत्रिययोर्दशवर्षशतवर्षयोरभिवादनादौ पितापुत्रव्यवहारः स्यात्। तयोर्मध्यात्पुनर्ब्राह्मणः पितृस्थानीयः ॥ गो० ॥

अत्र सादृश्यं ब्राह्मणं तादृक् क्षत्रियोऽभिवादयेदित्यर्थः। एवं क्षत्रियाद्यपेक्षया वैश्यादीनामप्यूह्नेयम्। तथा वैश्यस्य शूद्रस्य च शतवर्षातिरिक्तज्येष्ठतायामपि विप्रापेक्षं पुत्रत्वमित्यर्थादुक्तम् ॥ ना० ॥

पितेति पितृवन्मानार्हः ॥ रा० ॥

ब्राह्मणक्षत्रियशब्दौ उत्कृष्टवर्णोपलक्षणार्थौ ॥ न० ॥ १३५ ॥

---

उक्तं जातेरुत्कर्षहेतुत्वम्। हीनजातीयेनोत्तमजातीयः पूज्यः। इदानीं समानजातीयानां येऽभिवादनादिपूजाहेतवस्तेषां बलाबलमुच्यते। तत्र वयसः पुनरभिधानं बलाबलार्थम्। वित्तादिसंबन्धोऽत्र सर्वत्र पूजाहेतुः। वित्तवत्त्वं

बन्धुमत्त्वं मानस्थानमित्ययमर्थः। विशिष्टबन्धुतैव पितृव्यमातुलादिरूपता मानकारणम्। बन्धुमान्यो बहुबन्धुः स पूज्यः। वयः प्रकृष्टमिति ज्ञेयम्।...कर्म श्रौतं स्मार्तं तदनुष्ठानपरता। विद्या साङ्गोपाकरणवेदार्थज्ञानम्।...॥ मे०॥

धनज्ञातिवयःश्रौतस्मार्तकर्माचरणविद्याः समानजातीयत्वे सति मान्यस्थानानि पूज्यत्वकरणानि। तत्रश्चावित्तस्य वित्तवान्मान्यस्तेषां वित्तादीनां मध्याद्यत्पश्चान्निर्दिष्टं तत्तत्पूर्वस्मात्पूर्वस्माद्गुरुतरम्। अतश्च वित्तवतां बन्धुमान्मान्य इत्यवतिष्ठते॥ गो०॥

मान्यस्थानानि यदपेक्षया यत्र वित्ताद्युत्कर्षत्वं तत्र मान्यताकारणमिति। यथा शतवित्तापेक्षया सहस्रवित्तो मान्यः।...॥ ना०॥

वित्तमिति वित्तं धनं न्यायार्जितम्। बन्धुः पितृव्यादिः। कर्म श्रौतं स्मार्तं च। विद्या वेदार्थतत्त्वज्ञानम्।...॥ रा०॥

बन्धुः कुलं कर्म यज्ञदानादि मान्यस्थानानि मानपूजास्थाननिमित्तानि। यद्यदुत्तरं तत्पूर्वस्माद्गरीयो मान्यस्थानम्॥ न०॥१३६॥

---

एकैकगुणसंबन्धे परस्य ज्यायस्त्वमुक्तम्। यत्रेदानीं द्वौ पूर्वावेकस्य भवतो अपरस्यैकः पर इति तत्र कथमित्यत आह।...॥ मे०॥

त्रिषु वर्णेषु ब्राह्मणादिषु यस्य हीनजातीयस्यापि पञ्चानां वित्तादीनां मध्याद्भूयांसि बहूनि त्रीणि चत्वारि पञ्च वा भवन्ति न त्वेकं द्वे वा तानि यदि गुणवन्ति प्रकृष्टानि भवन्ति तदा स उत्कृष्टजातेरपि मान्यः। एवं च ब्राह्मणं दशवर्षं त्वित्येतन्निर्गुणविषये समगुणविषये वावतिष्ठते। तथा शूद्रोऽपि नवतिहायनातीतो द्विजातीनां मान्यः। एवं च वित्तबन्धुकर्माणि द्विजातीन्प्रति शूद्रस्य मानहेतवः। विद्या तु तस्य नैवास्ति॥ गो०॥

...तथा शूद्रोऽपि दशमीमवस्थां गतो नवतिवर्षादूर्ध्वं वित्तादिचतुष्टयबाहुल्ये शूद्रान्तराणां द्विजातीनां च मान्यः। त्वंकारादिवचनाभाव एवास्य द्विजैर्मानता। विद्या तु तस्य न संभवत्येवेति॥ ना०॥

...दशमीं गतो नवत्यूर्ध्वं वयोगतः ॥ रा० ॥

पञ्चानां वित्तादीनां मध्ये त्रिषु वर्णेषु यस्मिन्भूयांसि बन्धुवयांसि स्युः । यस्मिन्वा गुणवन्ति गरीयांसि विद्याकर्मवयांसि स्युः स वित्तबन्धुवयोयुक्तो वित्तबन्धुवयोहीनादत्र लोके मानार्हः । एवं विद्याकर्मवयोयुक्तो विद्याकर्मवयोहीनात् ।...॥ न० ॥ १३७ ॥

---

अयमन्यः पूजाप्रकारः प्रासङ्गिक उच्यते । चक्री रथिको गन्त्र्यादियानारूढः । तस्य पन्था देयः । येन भूमिभागेन ग्रामादिदेशान्तरं गम्यते स पद्धतिः पन्था उच्यते । तत्र यदि पृष्ठतः संमुखतो वा रथिक आगच्छेत्तदा तद्गमनोपरोधिनः पथि प्रदेशात्पदातिरपक्रमेत । दशमीस्थोऽत्यन्तपरिणतवयाः । रोगी व्याधिनात्यन्तपीडितः । भारी गृहीतव्रीह्यादिगुरुद्रव्यः । सोऽपि यथोपसर्तुमशक्तोऽनुग्राह्यः । स्त्रियः अनपेक्ष्य जातिगुणभर्तृसंबन्धान् । स्त्रीत्वमात्रेणैव । राजा विषयेश्वरोऽत्राभिप्रेतो न क्षत्रिय एव ।...वरो विवाहाय प्रवृत्तः । एतेषां पन्था देयः ।...॥ मे० ॥

चक्रयुक्तगन्त्र्यादिनारूढस्यातिवृद्धभारिचक्रिणां च राजशब्दसंनिधानाच्च ब्राह्मणस्यैव कृतसमावर्तनस्नानस्य भूपतिविवाहार्थप्रस्थितयोश्च गमनोपरोधिपथोऽपक्रमेदिति । पूजाप्रकरणादेवमेतत्पूर्वैकदेशविधानम् ॥ गो० ॥

चक्रिणः शाकटिकादेः । दशमीस्थस्य दशमभागायुःशेषस्य । रोगिणोऽत्यन्तार्तस्य । भारिणो भारं वहतः । स्नातकस्य विद्याव्रतस्नातकस्य । राज्ञोऽभिषिक्तस्य । वरस्य विवाहार्थं गच्छतः । पन्था देयोऽपसृत्य स्वयं गन्तव्यमित्यर्थः । केचिद्वरस्य श्रेष्ठस्यावरेण पन्था देय इत्यस्यार्थः ।...॥ ना० ॥

...वरस्य कन्यामुद्वोढुं प्रस्थितस्य ॥ रा० ॥

चक्रमनोरथाद्युपलक्षणम् । तेन यो गच्छति स चक्री । तस्य निर्गुणस्यापि पन्था देयः ।...ब्राह्मणवरस्य श्रेष्ठस्य ॥ न० ॥ १३८ ॥

---

तेषां तु समवेतानामेकत्र संनिपतितानां मान्यौ स्नातकपार्थिवौ। प्रकृतेन पथो दानेन। नृपमानभाक् नृपस्य सकाशान्मानं भजते लभते। षष्ठी निर्धारणे। चक्र्यादीनां त्वन्योन्यं विकल्पः। स च शक्त्यपेक्षः॥ मे०॥

तेषां तु पुनश्चक्र्यादीनामेकवर्त्मनिवर्तिनां चक्र्यादिभिः पथो दानेन राजस्नातकौ मान्यौ राजस्नातकयोरेकवर्त्मनिवर्तिनोः स्नातको मानं भजते। सोपचारत्वादाचार्यादिलक्षणं पूर्वं वैचित्र्यार्थमाह॥ गो०॥

स्नातक एवेत्यन्वयः। तथा च वर्त्मदानसामर्थ्ये यस्य यो मान्यत्वेन न तस्य वर्त्म देयमिति लभ्यते॥ ना०॥

स्नातको नृपमानभागिति राजकर्तृकमानभागिति॥ रा०॥

समवेतानां मार्गे संगतानाम्। मान्यौ मार्गदानेन। नृपमानभाक् नृपदत्तमार्गभाक्।...॥ न०॥ १३९॥

---

आचार्यादिशब्दानां पदार्थनिरूपणार्थमिदमारभ्यते।... उपनीय उपनयनं कृत्वा यो वेदमध्यापयति ग्राहयति स आचार्यः।... कल्पशब्दः सर्वाङ्गप्रदर्शनार्थः। रहस्यमुपनिषदः।...॥ मे०॥

यः शिष्यमुपनयनपूर्वकं कल्पसूत्रोपनिषत्सहितं वेदमध्यापयति तमाचार्यं मन्वादय आहुः। रहस्यवेदशब्देन ग्रहणे सति प्राधान्यात्पृथगुपदेशः॥गो०॥

सकल्पमित्येकदेशेन षडङ्गोपलक्षणम्। सरहस्यमत्यन्तगुह्यतदर्थव्याख्यासहितम्। न तूपनिषद्भागो रहस्यम्। वेदपदादेव तल्लाभात्॥ ना०॥

सकल्पं यज्ञकल्पसहितम्। सरहस्यमुपनिषदुक्तोपासनासहितम्॥ रा०॥

सकल्पं सकर्माद्यम्। सरहस्यं साध्यात्मविद्यम्॥ न०॥ १४०॥

---

वेदस्यैकदेशो मन्त्रा ब्राह्मणं वा। वेदवर्जितानि वा केवलान्यङ्गानि एव योऽध्यापयति पाठयति। तथा सर्वमपि वेदं वृत्त्यर्थं जीविकार्थं नाचार्यकरणविधिवशेन स उपाध्यायो नाचार्यः। अन्येनोपनीतं यः कृत्स्नमपि वेदमध्यापयति नासावाचार्यः।...॥ मे०॥

वेदभागं वेदाङ्गानि वा शिक्षाकल्पनिरुक्तव्याकरणज्योतिषच्छन्दांसि यो जीविकार्थमापद्यपूर्वमध्यापयति स उपाध्याय उच्यते ॥ गो० ॥

एकदेशं वेदस्य वेदाङ्गमात्रं वा धर्मार्थमध्यापयति। अपरिभाषितवृत्त्यभिसंधानानेन वा कृत्स्नमपि वेदमध्यापयति। स उपाध्याय इत्यर्थः।... ॥ ना० ॥

एकदेशं शाखामात्रं मन्त्रं ब्राह्मणं वा।...॥ रा० ॥

एकदेशं मन्त्रमात्रं ब्राह्मणमात्रं वा। वृत्त्यर्थं धर्मार्थम् ॥ न० ॥ १४१ ॥

---

निषेकग्रहणात्पितुरयं गुरुत्वोपदेशः।.. ॥ मे० ॥

गर्भाधानादीनि कर्माणि यथाशास्त्रं यः करोति अन्नेन च संभावयति वर्धयति स विप्रो गुरुरित्युच्यते। एवं च पितायं गुरुर्निषेकग्रहणात् ॥ गो० ॥

गर्भाधानादि कर्म उपनयनान्तं करोत्यन्नेन च पुष्णाति यः स गुरुरिति पितेवोक्तः।...॥ ना० ॥

...पिता गुरुः। तथा च व्यासः। प्रभुः प्रियकृत्प्राणदो गुरुः हितानामुपदेष्टा च प्रत्यक्षं दैवतं पितेति शरीरस्य प्रभव उत्पत्तिर्यस्मात्स इत्यर्थः ॥ रा० ॥

...निषेकग्रहणादन्नग्रहणाच्च पिता।...॥ न० ॥ १४२ ॥

---

पाकयज्ञा दर्शपूर्णमासादयः। अग्निष्टोमादयो मखाः। सोमयागो मखशब्दः क्रतुपर्यायः। एतानि कर्माणि यस्य यः करोति स तस्यर्त्विगित्युच्यते।...॥ मे० ॥

आधानदर्शपूर्णमासाग्निष्टोमादिसोमयागान्यस्य कृतशास्त्रीयवरणः सन्यः करोति स तस्येह शास्त्रे ऋत्विगुच्यते। तस्यापि मान्यत्वादिहोपदेशः।... ॥ गो० ॥

पाकयज्ञान्पक्वहविःसंपाद्यान्। हविर्यज्ञान् दर्शपौर्णमासादीन्।...॥ना०॥

अग्न्याधेयमाहवनीयाद्युत्पादकं कर्म । पाकयज्ञा अष्टकाश्राद्धादीनि । मखा इत्यग्निष्टोमादेर्विशेषणम् ।...॥रा०॥ १४३ ॥

---

य उभौ श्रवणौ ब्रह्मणा वेदाध्ययेन आतृणोति स माता स पिता ज्ञेयः ।...॥ मे० ॥

य आपूरयत्यवितथं विस्वरादिरहितं कृत्वा वेदेनोभौ कर्णौ स माता-पितृवज्ज्ञेयः । तस्मै चाध्ययनोत्तरकाले ऽपि द्रोहं न कुर्यात् ॥ गो० ॥

अवितथमिमिथ्यात्वेन ब्रह्मणा वेदेन । स माता पिता मातेव पितेवेत्यर्थः ॥ ना० ॥

अवितथं वर्णस्वरवैगुण्यरहितम् । ब्रह्मणा वेदेन । श्रवणौ कर्णौ । आतृणोति रहस्यादि वेदमध्यापयतीत्यर्थः ॥ रा० ॥ १४४ ॥

---

...उपाध्यायाच्छ्रेष्ठ आचार्यस्तस्मात्पिता ततो ऽपि मातेति । दशादि-संख्यानिर्देशः स्तुतिमात्रम् । पूर्वस्मात्पूर्वस्मात्परस्यातिशयो विवक्षितः ।... ननु चानन्तरमेव वक्ष्यति गरीयान्ब्रह्मदः पितेति । इह चाचार्यात्पितुरा-धिक्यमुच्यते । तदितरेतरव्याहतम् । नैष दोषः । इहाचार्यो नैरुक्तदर्शनेना-ध्यापकः संस्कारमात्रेण आचारोपदेशमात्रेण चाभिप्रेतः । आचार्य आचारं ग्राहयतीति ।...॥ मे० ॥

दशभ्य उपाध्यायेभ्य आचार्यो गौरवेण हेतुभूतेनाधिकीभवत्युपाध्याय-पूजातो दशगुणाचार्यस्य पूजा कार्येत्यर्थः । एवमाचार्याणां शतं पिता गौर-वेणाधिकीभवति । यः सकलसंस्कारादिकर्ता ।...॥ गो० ॥

दशोपाध्यायानतिरिच्यते तद्दशकापेक्षयोत्कृष्यते । गौरवेण धर्मेण ।... आचार्यशतात्पितोत्कृष्टो यद्युपनेता ब्रह्मणि सहस्रं सहस्रगुणं पितुः सका-शान्मातातिरिच्यते । तदपेक्षया बहुदुःखानुभवात् ॥ ना० ॥

उपाध्यायान्दशापेक्ष्य दशसूपाध्यायेषु यावत्पूजादि तत्सर्वमेकोऽप्याचार्य अर्हतीत्येवमुत्तरत्र ॥ रा० ॥

...गौरवेण गुरुतरोपकारकारणेन । अथ ब्रह्मचारिणां पितुरप्याचार्यो गरीयानित्याह ॥ न० ॥ १४५ ॥

---

उत्पादको जनकः ब्रह्मदाता अध्यापकः । तौ द्वावपि पितरौ तयोः पित्रोर्गरीयान्पिता यो ब्रह्मदः । अतः पित्राचार्यसमवाये आचार्यः प्रथममभिवाद्यः । अत्र हेतुरूपमर्थवादमाह । ब्रह्मजन्म ब्रह्मग्रहणार्थं जन्म ब्रह्मजन्म शाकपार्थिवादित्वात्समासः । अस्मिन्समासे उपनयनं ब्रह्मजन्म । अथवा ब्रह्मग्रहणमेव जन्म । तद्विप्रस्य शाश्वतं नित्यं प्रेत्योपकारकमिह चोपकारकम् ॥ मे० ॥

संस्कारादिकरणरहितोत्पादकाचार्ययोः पित्रोराचार्यः पिता प्रशस्यतरः । यस्माद् ब्रह्मग्रहणार्थं यज्जन्मोपनयनाख्यं विप्रस्य तदिहलोके च शाश्वतं नित्यं पारम्पर्येण मुक्तिनिमित्तत्वात् । अतश्च जनकमात्रपित्राचार्यसंनिधावाचार्य एवमादौ पूजनीयः । विप्रग्रहणं द्विजप्रदर्शनार्थं त्रयाणां प्रकृतत्वाच्च । अत्रार्थवादः ॥ गो० ॥

केवलोत्पत्तिमात्रकारिणः पितुर्ब्रह्मपिता सावित्र्यामुत्पादयिता गरीयान् । ...शाश्वतं चिरकालस्थायिफलम् । क्वचिद् ब्रह्मदात्रोरिति पाठः ॥ ना० ॥

ब्रह्मजन्मेति । उपनीतस्यैव वेदस्वीकृतिद्वारेह कर्माधिकारिता तद्द्वारा च स्वर्गाद्यवाप्तिः शश्वद्ब्रह्मावाप्तिश्चेति भावः ॥ रा० ॥

उत्पादकः पिता जनयिता ब्रह्मपिताचार्यः । तयोर्ब्रह्मदः पितुर्गरीयान् । अत्र हेतुरुत्तरार्धेनोक्तः ।...॥ न० ॥ १४६ ॥

---

श्लोकद्वयमर्थवादः । मातापितरौ यदेनं दारकमुत्पादयतो जनयतो मिथो रहसि परस्परं तत्कामाद्धेतोर्मन्मथपरवशौ संभूतिं तस्य तां विद्यात् । तस्य दारकस्य संभव उत्पत्तिर्यद्योनौ मातृकुक्षावभिजायते ।...॥ मे० ॥

पितरावेनं मिथः परस्परमुत्पादयतो न तदुपकारचिकीर्षया। पुनः संभवमात्रं तस्य जानीयाद्यद्योनावसावुत्पाद्यते ॥ गो० ॥

कामसिद्धेरपि तच्चोद्देशात्कामादित्युक्तम्। संभूतिं जन्ममात्रम्। यां जातिं यज्जन्म।...॥ ना०॥

कामान्मन्मथवशात्। संभूतिं पश्वादिसाधारणीम्।...॥ रा० ॥

मातापितरौ यदेनं द्विजमुत्पादयतः। तन्मिथः कामात् अन्योन्यरागात् प्रवृत्तं नास्योपकर्तुं किंचिद्द्विजो यद्योनावधिजायते। तस्य द्विजस्य तां संभूतिं तदधिजननं विद्यात्।...॥ न० ॥ १४७ ॥

---

आचार्यात्तु यत्तस्य जन्म तदविनाशि गृह्णीते वेदेऽवगते च तदर्थे कर्मानुष्ठानात्स्वर्गप्राप्तिरित्यस्य सर्वस्यार्थमूलत्वात्स श्रेष्ठः। यां जातिमुत्पादयति यं संस्कारमुपनयनाख्यं द्वितीयं जन्मेति। जन्मसंस्कृतिं निवर्तयति। सावित्र्या तदनुवचनेन सा जातिः सत्या साजरामरा।...॥ मे० ॥

आचार्यः पुनः समस्तवेदाध्यापयिता। यथाशास्त्रमुपनयनाङ्गभूतया सावित्र्या यां जातिं यज्जन्मास्य करोति। सा सत्या सत्यात्मकश्रौतादिकर्मनिमित्तत्वात्। साजरा अबाधका। पुनरुद्भवे ऽपि तस्यानपचयात्। अमरा अमरात्मकज्ञानाधिकारोत्पादनद्वारेणामरहेतुत्वात्। अपरं गुरुलक्षणमाह पूजार्थम्॥ गो० ॥

...विधिवदुपनयनविधिना। सावित्र्या मातृभूतया सा सत्या सत्यलोकप्राप्तिहेतुः। अजरा अजरत्वं देवत्वं तत्प्राप्तिहेतुत्वात्। अमरा अमृतत्वस्य मोक्षत्वस्य हेतुः।...॥ ना० ॥

अस्य माणवकस्य सावित्र्या सकलरहस्यसावित्र्युपदेशेन सा सत्येत्यादि। ...॥ रा० ॥

जातिं जन्म सत्या स्थितनियता।...॥ न० ॥ १४८ ॥

---

य उपाध्यायो यस्य माणवकस्योपकरोति श्रुतस्य श्रुतेनेत्यर्थः। अल्पं वा बहु वा क्रियाविशेषणमेतत्। तमपि स्वल्पोपकारिणं गुरुं विद्यात्।... ॥ मे० ॥

यस्य कस्यचिच्छ्रुतस्याल्पं बहु वा यो बोधयति। तमपीह पूजाप्रकरणे तेन श्रुतोपकारेण जानीयात्। न च तथाऽत्येष्ठं विद्यागुरोः पूजार्थमपेक्ष्यं यस्मात् ॥ गो० ॥

यस्य श्रुतस्य शाब्दज्ञानस्यांशे य उपकरोति अतिशयमापन्न इत्यर्थः।... ॥ ना० ॥

...श्रुतिरेवोपक्रिया उपकारस्तया ॥ रा० ॥

अल्पविद्याप्रदमपि गुरुं विद्यात्। किं पुनः बहुविद्याप्रदमित्यभिप्रायः। ...॥ न० ॥ १४९ ॥

---

ब्रह्मग्रहणार्थं जन्म ब्राह्ममुपनयनं तस्य कर्ता स्वधर्मस्य शासिता उपदेष्टा वेदार्थव्याख्यानेन। स तादृशो बालो ऽपि ब्राह्मणो वृद्धस्य ज्येष्ठस्य तर्कक-शास्त्रस्य वा यदल्पं वा बहु वा तेन पिता भवति पितृतुल्या तत्र वृत्तिः कर्तव्या ज्येष्ठेनापि।...॥ मे० ॥

उपनयनस्य कनीयसः कर्तृत्वासंभवात्तदुपलक्षिताध्यापनादिकर्ता स्वधर्मस्य चायं धर्म इत्येवं बोधयिता बालोऽपि वृद्धस्यापि धर्मार्थकर्मनिमित्तत्वेन पितृतुल्यो भवति। अत्रार्थवादः परः प्रकृतिरूपः ॥ गो० ॥

ब्रह्म वेदस्तस्याध्ययनेन यस्तद्विशिष्टस्वरूपलाभः स ब्राह्मं जन्म। तस्य यः कर्ता न त्वेतेनोपनेतृत्वमिष्टं बालोऽपीत्यनेन विशेषकथायामध्यापयामासेत्यभिधानाच्च। यो वा स्वधर्मशासिता बालोऽल्पवया वृद्धस्यापि कनीयसः ॥ ना० ॥

...धर्मस्य शासितोपदेष्टा च। बालो ऽपि पिता स्याद्धर्मतो धर्मशास्त्र-प्रामाण्यात् ॥ रा० ॥

ब्राह्मस्य वैदिकस्य जन्मन उपनयनस्य पिता भवति। पितृकल्पो भवति

गुरुतर इत्यर्थः । मन्त्रदस्य बालस्यापि पितृत्वमवश्यं स्थापयितुमितिहास-श्लोकत्रयेणोदाहरति ॥ न० ॥ १५० ॥

---

अङ्गिरसः पुत्रः कविर्नाम शिशुर्बालः पितृतुल्यान्पितृव्यमातुलतत्पुत्रादीन् अधिकवयसो ऽध्यापयां चकार अध्यापितवान् । ...ज्ञानेन परिगृह्य तान् स्वीकृत्य शिष्यान्कृत्वा ॥ मे० ॥

अङ्गिरसः पुत्रः कविर्नाम बालः सन्पितृपितृव्यादीनध्यापितवान् । तांश्च वेदादिज्ञानेन हेतुभूतेन शिष्यत्वेन स्वीकृत्य कार्यार्थेनाह्वानकालेषु पुत्रका इत्युक्तवान् ॥ गो० ॥

पितॄनभिव्याचादीन् । कविः कविनामा । ज्ञानेनोपदेशेन । परिगृह्य शिष्यता नीत्वा ॥ ना० ॥

...परिगृह्य शिष्यतां नीत्वा ॥ रा० ॥

परिगृह्य अभिभूय ॥ न० ॥ १५१ ॥

---

ते पित्रादिस्थानीयाः पुत्रका इत्याह्वानेनागतमन्यव उत्पन्नक्रोधास्तमर्थं पुत्रशब्दाह्वानं देवान्पृष्टवन्तः अनेन बालेन वयमेवमाह्वयामहे किमेतद्युक्तं ते देवाः पृष्टाः सन्तः सर्वे समवायं कृतवन्तः समेत्य एकमत्यं स्थापयित्वा एतान्कवेः पितॄनूचुः उक्तवन्तो न्याय्यं युक्तं वो युष्माञ्छिशुरुक्तवान् ॥ मे० ॥

ततस्ते पितरः तथाह्वानोत्पन्नक्रोधास्तमर्थं समागत्य पुत्रकशब्दाह्वानाख्यं किमेतत्साध्वित्येवं देवान्पृष्टवन्तः । देवाश्चैतद्विचारार्थं समागत्य युक्तं शिशु-र्युष्मानुक्तवानित्येवमेतांस्तान्पितॄनुक्तवन्तः ॥ गो० ॥

तमर्थं किमेतदस्य युक्तं न वेति ॥ ना० ॥

ते पितरः तमर्थं पुत्रका इति शब्दार्थमागतमन्यवः पुत्रका इत्याह्वानेन जातमन्यवो मन्युं प्राप्ताः एतान्पितॄन् ॥ रा० ॥ १५२ ॥

---

न च वयसा स्वल्पेन बालो भवति किं तर्हि अज्ञो मूर्खो वृद्धोऽपि। यो मन्त्रद उपलक्षणं मन्त्रान्वेद न् यो ददाति अध्यापयति स च पिता भवति वैशब्द आगमान्तरसूचकः। देवानामप्येष आगमः पुराण एव। ...॥ मे० ॥

यत अज्ञो मूर्खः स बालो भवति वृद्धोऽपि सन्यस्त्वाध्यापयिता स बालो ऽपि सन् पितृतुल्यो भवति। यतोऽस्मदन्येऽज्ञं बालमित्याहुः अध्यापयितारं च पितेत्येवं ब्रुवते अतस्त ॥ गो० ॥

प्रसिद्धताभिधानं दीप्तार्थम् ॥ ना० ॥

बालः संस्कार्यत्वात्। पिता संस्कारकत्वात्।...॥ रा० ॥

इयं स्पष्टम् ॥ न० ॥ १५३ ॥

---

इयमपराध्यापकप्रशंसा। हायनशब्दः संवत्सरपर्यायः। न बहुभिर्वर्षैः परिणतवया महान्पूज्यो भवति। न पलितैः केशश्मश्रुरोमभिः शुक्लैर्न वित्तेन बहुना न बन्धुभिः प्रागुक्तानि मान्यस्थानान्यापद्यन्ते। ..योऽनूचानः। अनुवचनमध्यापनकृत्स्नाङ्गस्य वेदस्य स नोऽस्माकं महान् श्रेष्ठः करोति व्यवस्थापने वर्तते नाभूतजनने ॥ मे० ॥

न वयोभूयः शिरः पाण्डुरताधनबन्धुभिः ज्यायित्वम्। अपि तु यो अध्यापनसमर्थः स श्रेष्ठ इत्यस्माकं मतमित्येवमृषयो धर्मं व्यवस्थापितवन्तः। एवं च सति ॥ गो० ॥

हायनैर्वर्षैर्बहुभिर्गतैरिति तदत्सरकर्तव्यसोमयागादिकर्मबाहुल्यमुक्तम्। पलितैरिति वयोबाहुल्यम्। अनूचानः साङ्गवेदाध्येता ॥ ना० ॥

...अनूचानः साङ्गवेदाध्येता। तथैव महत्त्वमित्याहुः ॥ रा० ॥

हायनैः वयोभिः। पलितैर्वार्धकैः। बन्धुभिः कुलेन।... अनूचानः वेदवित्।...॥ ना० ॥ १५४ ॥

---

अयमर्थवाद एव।...ब्राह्मणानां ज्ञानेन श्रैष्ठ्यम्। न वि ाादभिः। क्षत्रियाणां वीर्यतः। वीर्यं द्रव्यस्य कौशलम् दृढप्राणता च। वैश्यानां धान्यधनतः। धान्यस्य पृथगुपादानाद्धनशब्दो हिरण्यादिवचनः।...॥ मे०॥

विप्राणां ज्ञानेन ज्यैष्ठ्यं क्षत्रियाणां पुनः पौरुषेण वैश्यानां धान्यहिरण्यादिना शूद्राणां वयस्तः॥ गो०॥

ज्ञानतो ज्ञानाधिक्येन॥ ना०॥

...वीर्यतः शस्त्रकौशलेन..॥ रा०॥

जन्मतः वयस्तः। क्षत्रियादीनामुपन्यासो दृष्टान्तार्थः। उक्तमर्थं निगमयति॥ न०॥ १५५॥

---

न तेन वृद्ध उच्यते येनास्य पलितं धवलं शिरः शिरःस्थाः केशाः। कथं तर्हि यो वै युवापि तरुणो ऽपि अथ चाधीते तं देवाः स्थविरं विदु. ब्रुवते। देवाः किल सर्वस्य वेदितार इति प्रशंसा॥ मे०॥

येन कारणेन वयोभूयिष्ठाख्येनास्य पलितयुक्तं शिरो न तेन वृद्धो भवत्यपि तु यस्तरुणो ऽपि सम्यगधीतवेदो भवति तं देवा वृद्धं मन्यन्त इति भूयोऽभिधानं प्रकृतदार्ढ्यार्थम्॥ गो०॥

स्थविरं स्थविरपदवाच्यम्। येन वयोबाहुल्यादिहेतुना॥ ना०॥

शिरःपालित्यं पक्वकेशशुक्लता। अधीयानो ऽध्ययनोद्यतो ऽपि किं चाधीतवेदः॥ रा०॥ १५६॥

---

इयमध्ययनाध्येतृस्तुतिः। काष्ठमयो दारुमयः क्रियते। चक्रत्वादिना हस्त्याकृतिः। स यथा निष्फलो न हस्तिकार्यं राज्ञां शत्रुवधादि करोति। एवं यो ब्राह्मणो नाधीते स काष्ठतुल्यः। न क्वचिदधिकारी च। चर्ममयो मृगः चर्मविकारो ऽन्यो ऽपि यो मृगः स निष्फलो नाखेटकादि कार्यं करोति। त्रय एते नाममात्रं बिभ्रति न तस्यार्थम्॥ मे०॥

दारुमयो यथा हस्ती न युद्धादिसमर्थो यथा चर्ममयो मृग आखेटका-दावकिंचित्करः । एवमनधीयानो ब्राह्मणो ब्राह्मणसंपाद्यासु प्रतिग्रहादि-क्रियासु एव च त्रयो ऽप्येते नाममात्रं धारयन्ति । न तु हस्त्यादिसंपाद्याः क्रियाः कुर्वन्ति ॥ गो० ॥

काष्ठमयो हस्तीति लेपतो ऽपि तदन्वयाभावः । चर्ममये मृगे लेपतो ऽन्वयासंभवात् । नाममात्रं बिभ्रति । अतो यद्विप्रे कार्यं तदनधीयानो न कुर्यात् ॥ ना० ॥

काष्ठमयः कृत्रिमः । नाम बिभ्रति मृग इत्यादि नाम ध्रियन्ते न तु मृगादयः । तत्कार्याकारित्वात् ॥ रा० ॥

नाम बिभ्रति नामैव बिभ्रति । ब्राह्मणशब्दमेव बिभ्रति न तस्य प्रवृत्ति-निमित्तमित्यर्थः ।... ॥ न० ॥ १५७ ॥

---

षण्ढो नपुंसक उभयव्यञ्जनाशक्तः स्त्रीगमने यथा स स्त्रीष्वफलः । यथा गौर्गवि स्त्रीगौः स्त्रीगव्यामेवम् । तथा विप्रो ऽनृचो ऽनधीयानो ऽफलः सप्तार्थश्लोकाः अध्येतृवेदित्रोः प्रशंसार्था अतिक्रान्ताः ॥ मे० ॥

यथा नपुंसकं स्त्रीषु गच्छन्नपि अपत्यशून्यं यथा च स्त्रीगौः स्त्रीगवि गमनाभावादपत्यफलशून्या । यथा चाज्ञे निष्फलं दानम् । तथा वेदरहितो ब्राह्मणो ऽफलः । परमात्मनो दृष्टादृष्टानुपकारित्वात् । शिष्याचार्यप्रक्रमे ऽधुनाचार्यस्यापि किंचिन्नियममाह ॥ गो० ॥

षण्ढो नपुंसकम् । गौरिति गवीति च । स्त्रीलिङ्गे पदे अज्ञे स्थावरादौ अफलं दानम् । प्रत्युपकाराद्यभावात् । अनृचो अवेदः । ऋक्पदं वेदोपल-क्षणम् । अफलो दातुः फलाहेतुः ॥ ना० ॥

...अनृचः वेदशून्यः देयद्रव्यादिफलाजनकत्वात् ॥ रा० ॥

गौरित्यपहृतपुंभावो बलीवर्दो ऽभिप्रेतः । अफल इति पाठः । अथ ब्रह्म-चारिणां नियमान्तरमाह ॥ न० ॥ १५८ ॥

---

इदानीमश्रद्धस्य शिष्यस्याधीयानस्येतस्ततश्चित्तं व्याक्षिप्यते। अध्यापयितुः क्रोधोत्पत्तौ ताडनपरुषभाषणाद्यमत्यर्थं प्राप्तं निषिध्यते। अहिंसया अताडनेन भूतानां भार्यापुत्रदासशिष्यसोदर्याणां श्रेयोऽर्थमनुशासनं कार्यम्।...वाक् चैव मधुरा सन्त्वपूतिका। प्रियया वाचा श्लक्ष्णया नोच्चैरुद्धतेन काकरुक्षेण स्वरेण प्रियेणापि। अधीष्व पुत्रक। मा.चित्तमन्यत्रावधाः। श्रद्धया समापय शीघ्रं प्रपाठकम्। तल्लब्धा विहरिष्यसि शिशुभिः सवयोभिः।... ॥ मे० ॥

रज्ज्वा वेणुदलेन वेति शरीरपृष्ठे ईषत्ताडनस्य वक्ष्यमाणत्वात्। अतिताडनपरिहारेणैव भूतानां भार्यादीनामपि भूतग्रहणान्न शिष्याणामेव। प्रकृतानामाचार्येण वेदाध्ययनादि कर्तव्यम्। तदर्थं च वागेवानाक्रोशरूपानुच्चैर्वक्तव्याऽनुशासनाद्धर्ममिच्छता यस्मात्॥ गो० ॥

अहिंसया ताडनाद्यकुर्वता। उपदेशत्वेन मधुरार्थतः। श्लक्ष्णा मृदुशब्दतः। अतः शिष्योऽपि नाकस्मात्ताड्यो नाप्रियं वाच्य इत्यर्थः॥ ना० ॥

...मधुरा प्रीतिजननी। अत एव श्लक्ष्णा मृद्वी।...॥ रा० ॥ १५९ ॥

---

यस्याध्यापयितुरन्यस्य वा संक्षोभहेतौ सति वाङ्मनसी शुद्धे न कालुष्यं गच्छतः।...सर्वदाग्रहणं पुरुषमात्रधर्मार्थं नाध्यापयितुरेव। अध्ययनकाले स वै सर्वमाप्नोति।...वैदिकेषु तार्केषु यः सिद्धान्तो व्यवस्थितार्थोऽस्य कर्मण इदं फलमित्युपगत अभ्युपगतो वेदविद्भिस्तत्फलं सर्वं प्राप्नोति। अन्ये तु वेदग्रहणस्य ब्राह्मणत्वावगतेषु यदभ्युपगतं फलं नित्यानां कर्मणां निष्फलानां च यमनियमाना तत्फलं ब्रह्मप्राप्तिलक्षणं सर्वं प्राप्नोति।... अथवा वेदस्यान्तो ऽध्ययनसमाप्तिस्ततो यत्फलमाचार्यकरणविधिस्तत्प्राप्नोति। एवं तु व्याख्याने ऽध्यापनविध्यर्थतैव स्यात्॥ मे० ॥

यस्य वाङ्मनसी शुद्धे विकारहेतौ सत्यपि न कालुष्यं गच्छतः। सम्यग्गुप्ते चोत्पन्ने कथंचित्कालुष्ये न तत्कार्यं कुरुतः। सर्वदा यावज्जीवं स उपनिषदोक्तं मोक्षाख्यं फलमखिलं प्राप्नोति। अतश्च ॥ गो० ॥

मनःशुद्धिरक्रोधादि। वाचो गुप्तता रक्षा अनृतादिनिवर्तनात्। मनसोऽनिष्टध्यानादिनिवर्तनात्। वेदान्तोपगतमधिगतं मोक्षाख्यं वाङ्मनसोः शुद्धतां विन्दतीति॥ ना०॥

यस्य गुरोः संक्षोभहेतौ सति क्रोधरागद्वेषानभिभूतत्वं मनसः शुद्धि वाचः सुनियता गुप्ते असत्यादिभ्यो रक्षिते प्रकर्षेण सर्वात्मकवेदान्तोपगत ब्रह्मवागिति दृष्टान्ततया वाच इव मनसः शुद्धिः कार्येति भावः॥ रा०॥

वाचः शुद्धिरसत्यादिवर्जनं मनसो रागादिवर्जनम्। सम्यग्गुप्तिस्तत्राप्रमत्तत्वम्। सर्वदाश्रमान्तरेऽपि। वेदान्तोपगतं वेदान्तो वेदाध्ययनसमाप्तिस्तेनोपगतं परिपूर्णवेदाध्ययनोपलभ्यमित्यर्थः। यत एवं ततः॥ न०॥ १६०॥

---

अयमपरः पुरुषमात्रधर्मः। अरुंषि मर्माणि तुदति व्यथयतीत्यरुंतुदो मर्मस्पर्शिनीर्वाचो ऽत्यन्तोद्वेजनकरीराक्रोशवाचो यो वदति। आर्तः पीडितोऽपि परेण तादृशमप्रियं भाषेत। तथा परद्रोहः परापकारः परस्य तदर्थं कर्म तद्धीश्च न कर्तव्या। अथवा परद्रोहश्चासौ कर्म च तत्र धीः बुद्धिरपि न कर्तव्या।...॥ मे०॥

मर्मस्पृगार्तोऽपि न स्यात्। न परहिंसार्थव्यापारबुद्धिः स्यात्। यथा च वाचा लोक एनं द्वेष्टि तां स्वर्गादिलोकफलप्रतिषेधकां नोच्चारयेत्॥ गो०॥

अरुंतुदो दोषरूपव्रणस्य वाचा प्रकाशनेन तादृशः परद्रोहो हिंसा तत्कर्म मनसा ध्यायतीति परद्रोहकर्मधीः। दोषप्रकाशत्वाभावेऽपि यच्छ्रुत्वा परस्योद्वेगो यथा वर्षशतान्ते अवश्यं भवतो मरणमित्यादि। तथालोक्यां लोकाहितां तां वाचं नोदीरयेत्। एतच्च सर्वमत्यन्तावमतेनापि न कार्यमित्याह॥ ना०॥

आर्तो रोगादिना शिष्यकृतापराधेन। न परद्रोहकर्मधीः परस्य द्रोहः पीडायै यत्कर्म अभिशापादिस्तत्र धीर्मतिर्यस्य सः तथा न स्यात्। अलोक्यां स्वर्गादिलोकानर्हां ता तादृशीं नोदीरयेन्नोच्चारयेत्॥ रा०॥

अरुंतुदः परमर्मप्रकाशनः। अलोक्यामस्वर्ग्याम्॥ न०॥ १६१॥

---

भिक्षमाणस्य ब्रह्मचारिणो गृहे वा उपाध्यायस्य जीविकयाध्यापयतो यत्र संमानं न स्यात् न तेन चित्तसंक्षोभमाददीतापि तु संमानादेवोद्विजेत। पूजयैव दीयमानं न बह्व मन्येत। अमृतमिवाकाङ्क्षेदभिलषेत्।...॥ मे०॥

पूजातो ब्राह्मणो यावज्जीवं विषादिव खिद्येत। अमृतमिव चावज्ञां सर्वदाकाङ्क्षेत्॥ गो०॥

अवमानस्यामृतस्येवाल्पमप्यांशमित्यर्थः॥ ना०॥

दैवाद्गुरोर्वाङ्मनसोस्खलने शिष्यं शिक्षयति। संमानादिति। विषादिव विषवदुद्वेगहेतुत्वात्। लोकावर्जनस्य अमृतत्वं तया अमरत्वहेतुत्वादाकाङ्क्षितम्।...॥ रा०॥

सर्वदा आश्रमान्तरेऽपि। तत्र हेतुमाह॥ न०॥ १६२॥

---

...योऽवमानात्क्षुभ्यति स सुखं शेते। अन्यथा द्वेषेण दह्यमानो न कथंचिन्निद्रां लभते। प्रतिबुद्धश्च तच्चिन्तापरो न सुखं विन्दति। उत्थितश्च शयनात्कार्येषु सुखं चरति। यस्त्ववमानस्य कर्ता स तेन पापेन विनश्यति॥ मे०॥

अवज्ञातः स सुखं स्वपिति न यथा अवमन्तुरयुक्तं मया कृतमिति चित्तसंक्षोभो भवति। एवं स च सुखं निद्रां जहाति। सुखं लोके व्यवहरति। यः पुनरवमानकृत् स असाधु मया कृतमितीहलोके परलोके चापुण्याद्विनश्यति। एवं प्रसक्तानुप्रसक्तिकया पुरुषमात्रधर्ममुक्त्वाधुना प्रकृतमाह॥ गो०॥

सुखं शेते तत्कृतसंमानज्ञानाहितप्रत्युपकारचिन्ताविधुरत्वाभावात्। न चैवं स्वयमपि परस्याभ्युदयातिसंबन्धिना अवमानं कुर्यादित्याह॥ ना०॥

अवमत' तिरस्कृतः.. स सुखं शेते निद्राति। अन्यथा अवमानदुःखैर्दह्यमानो न निद्राति। अत एव सुखं न प्रतिबुध्यते सम्यग्निद्रितत्वात्। सुखं चरति श्रेयःसाधनेषु प्रवर्तते। अनवमतस्त्ववनानासहिष्णुः किंचित्कर्तुं न क्षमत इत्यनुभवसिद्धम्॥ रा०॥

...अवमन्ता विनश्यति राजदण्डेन यमदण्डेन च। उक्ताना ब्रह्मचारिधर्माणामध्ययनाङ्गतामाह॥ न०॥ १६३॥

---

संस्कृतात्मा उपनीतो द्विजोऽनेन क्रमयोगेन तपः संचिनुयात्। अध्येष्यमाणमित्यत आरभ्य यद्ब्रह्मचारिणः कर्तव्यमुक्तम्।...अनेन विधिसंघातेन क्रमयोगेन क्रमेणानुष्ठीयमानेन तप आत्मसंस्कारनिष्कल्मषत्वलक्षणम्।... ब्रह्मणः आधिगमिकमधिगमार्थमध्ययनावोधावधिगमः॥ मे०॥

उक्तपरिपाटीसंबन्धेन कृतोपनयनो द्विजो गुरुकुले वसन्वेदप्राप्तिप्रयोजनं तपोनियमाख्यं तपोऽर्जनमात्मसंस्कारं च शनैरन्वहमुपार्जयेत्॥ गो०॥

क्रमयोयेन क्रमिकेणोद्योगेन यत्नेन संस्कृतात्मा शोधितात्मा। शनैरत्वरितः संचिनुयाद्वेदाधिगमरूपं तपः॥ ना०॥

एवं संशिक्षितः शिष्यः किं कुर्यात्तत्राह। अनेनेति।...द्विजस्त्रैवर्णिकः। तपः ब्रह्मचर्यादि ब्रह्मादिगमिकं वेदप्राप्त्युपायम्॥ रा०॥

अनेन उक्तेन ब्रह्माधिगमिकं वेदाधिगमिकम्। स्वार्थे तद्धितम्। वेदाधिगमिकस्य तपस्त्ववचनं प्रशंसार्थम्। अङ्गान्तराण्याह॥ न०॥ १६४॥

---

तपोविशेषैः कृच्छ्रचान्द्रायणादिभिः। विविधैर्बहुप्रकारैरेकाहारचतुर्थकालाहारादिभिः।...व्रतैश्च उपनिषन्महानाम्निकादिभिर्विधिचोदितैर्गृह्यस्मृतिष्वाम्नातैरनुष्ठीयमानैः कृत्स्नो वेदोऽधिगन्तव्यः। ..षडङ्गो वेदोऽध्येय इति।.. सरहस्य इति रहस्यमुपनिषदः। सत्यपि वेदत्वे प्राधान्यात्पृथगुपादानम्॥ मे०॥

तपोविशेषैर्वक्ष्यमाणैरमौन्धनादिभिर्नानाप्रकारैर्व्रतैश्च प्रतिवेदं गृह्य-शास्त्रचोदितैः सावित्र्यादिभिः । वेदः कृत्स्नः समस्तो वेदशाखाब्राह्मणात्मको द्विजातिनाध्येतव्यः ।...रहस्यमुपनिषत्प्राधान्यात्पृथग्ग्रहणम् । ..प्रसङ्गाद्या-वज्जीवमध्ययनधर्ममाह ॥ गो० ॥

तपोविशेषैः प्राणायामादिभिर्व्रतैः सावित्रादिभिः तत्तच्छाखाभागाध्यय-नाङ्गभूतैः । वेद एकशाखाभूतसूत्रमन्त्रब्राह्मणसमुदायः । स कृत्स्न' षडङ्ग-सहितोऽध्येतव्य इत्यर्थः । सरहस्यो निगूढवेदार्थसहितः ॥ ना० ॥

तथा हि मुण्डकमधीयानः शिरस्याङ्गारपात्रं बिभर्ति केचिद्यथाकार-मधीयानो भूमिभोजनं करोति अश्वमेधमधीयानोऽश्वस्य घासं प्रयच्छति इत्यादि तपोविशेषैर्विधिचोदितैः स्वस्वगृह्योक्तैः सरहस्यो नामोपासनादि-युक्तः ॥ रा० ॥

व्रतैः प्राजापत्यादिभिः ।...कृत्स्नः साङ्ग अध्येतुरेकवेदाध्ययनेन कृतार्थता स्यादित्येकवचनेन सूचितम् । ब्राह्मणस्य वेदजप एव तपो नान्यदिति प्रस-ङ्गादाह ॥ न० ॥ १६५ ॥

---

...द्विज इति वचनादुपनीतस्यायं क्रमनियमः ।...वेदाभ्यासो हि यावत्किंचित्प्रकृष्टं तपस्ततः परं श्रेष्ठो वेदाभ्यासः । तत्तुल्यफलतामारोप्य स्तूयते ॥ मे० ॥

तपोयमनियमादि कर्तुमिच्छन् ब्राह्मणो . वेदमेव यावज्जीवमभ्यसेत । यस्माद्वेदाभ्यासस्तस्य तपोऽन्तरेभ्यः प्रकृष्टं तपः शास्त्रे उच्यते । द्विजोत्तमस्य ग्रहणं द्विजप्रदर्शनार्थम् । त्रयाणां प्रदर्शनार्थम् । प्रकृतत्वादेवार्थवादः ॥ गो० ॥

सदा चाश्रमान्तरेऽपि वेदमेव तपःस्थाने ऽभ्यसेद् ब्राह्मणः । न तु तद्वि-रोधि तपोऽपि कुर्यात् । पुनर्विप्रस्येति पदं द्विजोत्तमपदस्योपलक्षणार्थ-शङ्कानिवृत्त्यर्थम् ॥ ना० ॥

अभ्यसेच्छब्दतोऽर्थतश्चावर्तयेत् । तपःस्थाने वेदाध्ययनमेव कुर्यादिति ॥ रा० ॥

तपस्त न्तप एव परं निःश्रेयसकरमिति पश्यन् ।...॥ न० ॥ १६६ ॥

---

अयमपरो वाजसनेयकस्वाध्यायविधिर्ब्राह्मणो ऽर्थवादानुवादः । आ नखाग्रेभ्य एवेति संबन्धः । प्रकर्षे प्रतिपन्ने नखग्रहणं प्रकृष्टस्यापि प्रकर्षमाह ।... ॥ मे० ॥

यत्...द्विजः प्रत्यहं यथाशक्ति स्वाध्यायमधीते स आ नखाग्रेभ्यो निर्जीवनखाग्रव्यापकमेव तपः करोति परमतपोऽन्तरेभ्यः प्रकृष्टं तेषां नखानां व्यापकत्वात् । किं पुनर्योऽयमुक्तोऽधीत इति प्रकृतस्तुतिः । न तु यमनियमत्यागेन स्वाध्यायो ऽस्ति । हशब्द आगमसूचकः ॥ गो० ॥

हेति प्रसिद्धौ ।...। आ नखाग्रेभ्योऽपि नखाग्रेभ्यस्तपस्तरतीत्यर्थः ।...॥ ना०॥

आ ह इति पदच्छेदः । मूर्ध्न आरभ्य पदशाखाग्रेभ्यः कृत्स्नेन शरीरेणेति यावत् । ब्रह्मचारिणो दोषमाह ॥ न० ॥ १६७ ॥

---

यो द्विजो वेदमनधीत्य अन्यत्र शास्त्रे ऽङ्गेषु वा श्रममभियोगातिशयं कुरुते स जीवन्नेव शूद्रत्वं प्राप्नोति आशु क्षिप्रं सान्वयः पुत्रपौत्रादिसंतत्या ...॥ मे० ॥

यो द्विज उपनीतः सन्वेदमगृहीत्वैवाङ्गादौ यत्नं कुरुते । स वेदानभिज्ञत्वादात्मपुत्रादिसंस्काराकरणेन जीवन्नेव सान्वयः क्षिप्रं शूद्रतुल्यतां प्राप्नोति । ...॥ गो० ॥

अनधीत्यानभ्यस्य । अन्यत्र शास्त्रे ॥ ना० ॥

अन्यत्र कर्तव्याकरणादौ । गुरुमुखादनधीतस्य वेदस्य कर्मानधिकाराच्छूद्रत्वं सान्वयः पुत्राद्यैर्युतः ।...॥ रा० ॥

विद्यान्तरे शूद्रतां याति ॥ न० ॥ १६८ ॥

---

द्विजातीनां तत्राधिकारः श्रुतः।...मातुः सकाशादग्रे आदौ अधिजननं जन्म पुरुषस्य। द्वितीयं मौञ्जिबन्धने उपनयने।...तृतीयं ज्योतिष्टोमादियज्ञदीक्षायाम्।...॥ मे० ॥

मातुः सकाशात्प्रथमं पुरुषस्य जन्म। द्वितीयं मेखलाबन्धने। तृतीयं यागार्थं दीक्षाकाले द्विजस्य ॥ गो० ॥

यज्ञदीक्षायां दीक्षातः। द्विजस्य द्विजतां प्राप्तस्य। तृतीयं जन्म यद् ब्राह्मणे वेदात्मावित्रीरूपाज्जन्मा मौञ्जीबन्धनेनोपनयनकर्मणा चिह्नितमुन्नेयम्। पिता मातेति निरुक्तम्। तत्कथमाचार्यस्तथेत्यत आह ॥ न० ॥

अधीतवेदस्य जन्मद्वयमनुवदन् ज्योतिष्टोमादियज्ञस्यावश्यकत्वं तृतीयजन्मत्वेनाह। मातुरिति।...॥ रा० ॥

...मौञ्जिबन्धने उपनयने। क्रमो वृत्तभङ्गपरिहारार्थम्।...॥ न०॥१६९॥

---

तत्रैतेषु द्विजन्मसु यदेतद् ब्रह्मजन्म उपनयनं मौञ्जीबन्धनचिह्नितं मेखलाबन्धनेनोपलक्षितं तस्य माता सावित्री तया ह्यनुक्तया तन्निष्पन्नं भवति।...॥ मे० ॥

यस्मिञ्जन्मत्रयमध्ये यज्जन्म ब्रह्मग्रहणार्थं पुंसो जन्म मेखलाबन्धनोपलक्षणार्थं तस्य माता सावित्री पिता पुनराचार्यः कथ्यते।...॥ गो० ॥

...मौञ्जीबन्धनदीक्षालक्षणजन्मद्वयकारणत्वादेव पितृतः श्रैष्ठ्यमाह।... ॥ रा० ॥

तत्र यद् ब्रह्मजननं मौञ्जीबन्धनचिह्नितं माता तत्रास्य सावित्री पिता त्वाचार्य उच्यते। तत्र तेषु त्रिषु जन्मसु मध्ये ब्रह्मजननमुपनयनम्। अथाचार्यपितृत्वे हेतुमाह ॥ न० ॥ १७० ॥

---

मौञ्जीबन्धनचिह्नितमित्युक्तं तत्र रज्ज्वा सञ्जनात् आचार्यः पितृवन्मान्यः स्यात्। तदर्थमुच्यते वेदप्रदानादाचार्यं पितरं परिचक्षते। कृत्स्नवेदाध्या-

पनान्नोपनयनाङ्गभूतसाविच्यनुवचनमाचादेव। प्रदानं स्वीकारोत्पादनम् ।...
॥ मे० ॥

वेदाध्यापनादाचार्यं पितरमस्याहुः। यस्मात्तस्मिन्नुपनयनात्प्राक्किंचिदुत्कर्षहेतुभूतं कर्माध्ययनादि न युज्यते ।.. ॥ गो० ॥

प्रत्यवायनिवर्तनं हि रक्षणम्। तच्चाचार्येणापि वेदानधिगमजन्यप्रत्यवायरक्षणात्कृतमिति भवत्यसौ पितेत्यर्थः। प्रत्यवायमाह। न ह्यस्मिन्निति। अस्मिन्बाले कर्मधर्मसाधनं तपः प्रभृति तदेव कुत इत्याह ॥ ना० ॥

अस्मिन्ननुपनीतो बालो न युज्यते । अदृष्टार्थं कर्तृत्वेनेति शेषः ॥ रा० ॥

वेदप्रदानात्साविचीप्रदानात् । सर्वो हि वेदः साविची उपनयनाख्यजन्मप्रदानादिति यावत् ।...॥ न० ॥ १७१ ॥

---

आ मौञ्जीबन्धनादित्यनुवर्तते ।...ब्रह्म वेदास्तन्नोच्चारयेत् ।...केचिन्नियममेव ब्रह्माभिव्याहरणनिषेधं प्रागुपनयनाद्व्याकरणाद्यङ्गाध्ययने ज्ञापकं वर्णयन्ति।...वेदवाक्यानि स्वयं पठतस्तु न दोषः। एतत्तु न युक्तं स्मृत्यन्तरे हि पठ्यते। न ब्रह्माभिव्याहरेदिति ।...॥ मे० ॥

स्वधाशब्दाख्यमन्त्रसाधनकर्तव्यं निनीयते। पितॄन्प्रति प्राप्यते येन तत्स्वधानिनयनं पित्र्यं कर्म तद्वर्जयित्वा न वेदमुदाहारयेत् । यस्माद्वेदनिमित्तं यावन्न जायते यावदनुपनीतस्तावच्छूद्रतुल्यो ऽसौ एतदेव ज्ञापकमुपनीतपितृप्रसवे सत्येकोद्दिष्टश्राद्धादिकरणाधिकारस्य ॥ गो० ॥

ब्रह्म वेदं स्वधाशब्देनापो निनीयन्ते ऽचेति स्वधानिनयनं श्राद्धम् । तच मन्त्रोच्चारणमुपनीतेनापि कार्यमेव। ततो ऽन्यविषये वेदोच्चारणं न कारयेदिति। श्राद्धे नवश्राद्धादौ वेदोच्चारणमनुज्ञातम्। एतच्च कर्त्रन्तरासंभवे। ...॥ ना० ॥

वेदे वेदग्रहणयोग्यतासंपादकाद्देर्जन्मनि यावन्न जायते तावन्न व्याहारयेत् अध्यापयेत् । ब्रह्म वेदः स्वधा श्राद्धं तन्नीयते निष्पाद्यते येन

मन्त्रजातेन तद्वर्जयित्वा तेनानुपनीतस्य पितुरौर्ध्वदेहिके अस्त्यधिकार इति ॥ रा० ॥

ह्रि हेतौ। वेदे सावित्र्यामुपनयनानन्तरमध्ययने प्राप्ते क्रमो विधीयते ॥ न० ॥ १७२ ॥

---

उपनीय गुरुः शिष्यमित्यनेन शौचाचाराध्ययनानां क्रम उक्त अतश्च तेनैव क्रमेण पठेत् । उपनयनानन्तरमध्ययने प्राप्ते क्रमान्तरार्थमिदमारभ्यते । उपनीतस्य त्रैविद्यादि व्रतं च कर्तव्यम् । ततः स्वाध्यायो ऽध्येतव्यः । कृतोपनयनस्य ब्रह्मचारिणो व्रतादेशनमिष्यते क्रियते आचार्यैः शास्त्रवशेनैवमिष्यते । अतश्च कर्तव्यतैवैषा प्रतिपाद्यते । ततो ब्रह्मणो वेदस्य ग्रहणं क्रमेण विधिपूर्वकमित्यनुवादः श्लोकपूरणार्थः ॥ मे० ॥

उपनीतस्य सतो ऽस्यादौ स्वशाखाचोदितसावित्र्यादिव्रतोपदेश इष्यते । तत उक्तरूपवेदाध्ययनं स्वशाखागतमन्त्रब्राह्मणाध्ययनं क्रमेणोक्तम् । प्राणायामादिपूर्वकम् ॥ गो० ॥

व्रतादेशनं मधुमांसभक्षणादिनियमोपदेशः । यद्वा व्रतं यच्च भक्षणादि । आदेशनं चान्द्रायणादि प्रायश्चित्तोपदेश इति विभज्य व्याख्येयम् । क्रमेण न त्वन्त्यभागस्य पूर्वमध्ययनेन ॥ ना० ॥

संप्रति ब्राह्मणादिब्रह्मचारिणः प्रजापत्युक्तवस्त्राद्यनुवादेन नियममाह । कृतोपनयनस्येति सप्तदशभिः । व्रतादेशनं त्रैविद्यकादिव्रतोपदेशो गुरुणा कार्यः ।...॥ रा० ॥

व्रतादेशनं प्राजापत्यादीनामुपदेशः । क्रमेण वेदाध्यायिनामाचारेण । अथ कानिचिद् व्रतानि व्रतप्रसङ्गादाह ॥ न० ॥ १७३ ॥

---

गृह्यकारैर्व्रतनामधेयकानि कर्माणि उपदिष्टानि सवत्सरं वेदं भागं वा किंचिज्जिगृह्यत इयं व्रतचर्या यो यमनियमसमूहः तच्च पूर्वव्रतसमाप्तौ

व्रतान्तरारम्भे उपनयने ये विधयस्तादृश एव व्रतादेशः। अथ प्रागुपात्तानां का प्रतिपत्तिः। अप्सु प्रासनम्।...॥ मे० ॥

यस्य ब्रह्मचारिणो यज्जातीयानि चर्मोपवीतमेखलादण्डवस्त्राण्युपनयन उक्तानि तज्जातीयान्येव नान्यानि प्रति व्रतमुपादेयानि पूर्वोपात्तानां धारणोपदेशात्पुनस्तद्विधानमनर्थकमिति तज्जातीयान्यन्यानीति प्रतीयते पूर्वेषां च कार्यानुपयोगाद्विनष्टतुल्यत्वे सत्यप्सु प्रासेति प्रतिपत्तिः॥ गो० ॥

व्रतेषु चान्द्रायणादिषु। गार्हस्थ्ये ऽपि चान्द्रायणादि व्रतेषु एतत्पञ्चकं स्ववर्णोक्तं ग्राह्यमित्यर्थः।...॥ ना० ॥

व्रतेषु षट्त्रिंशदाब्दिकादिवेदव्रतेषु काम्येषु वेदग्रहणान्तपर्यन्तेषु वा इमान्वक्ष्यमाणान्नित्यं स्नात्वेत्यादिकान् समिदाधानमप्साविति शेषः॥ रा० ॥

यस्य ब्राह्मणस्य क्षत्रियस्य वैश्यस्य वा यच्चर्म कृष्णरौरवबास्तादीनि।... ॥ न० ॥ १७४ ॥

---

वक्ष्यमाणस्य यमनियमसमूहस्य पृथक्प्रकरणत्वेन श्लोको ऽयं गौरवख्यापनार्थः।...॥ मे० ॥

ब्रह्मचारी गुरुकुले वसन्निन्द्रियग्राममिन्द्रियसमूहं नियम्यात्मनस्तपोवृद्ध्यर्थमिमान्यमनियमाननुतिष्ठेत्॥ गो० ॥

इमान्वक्ष्यमाणान्॥ ना० ॥

इमान्वक्ष्यमाणान्नित्यं स्नात्वेत्यादिकान्॥ रा० ॥

इमान्वक्ष्यमाणानेव नियमानाह॥ न० ॥ १७५ ॥

---

तानिदानीं प्रतिज्ञातान्पूर्वेण नियमानाह। प्रत्यहं स्नात्वा शुचिः स्नाने नापनीताशुचिभावो देवर्षिपितृतर्पणं कुर्यात्। यदि पुनः शुचिर्न तदावश्यं स्नायात्। शुचिग्रहणेन शुद्धिहेतुतयात्र स्नानस्योपदिष्टत्वान्न स्नातकव्रत वत्तत्रानुष्ठीयमान एव।... ॥ मे० ॥

प्रत्यहं स्नात्वा शुचिर्देवानां महेश्वरादीनामङ्गिरःप्रभृतीनामृषीणां च प्रमीतानां च पित्रादीनामुदकदानं कुर्यात्। तथा देवानां हरादीनां पुष्पादिनार्चनं सायंप्रातरग्निसमिदाधानं च कुर्यात्॥ गो०॥

नित्यमिति। अवगाहनेन स्नात्वा मार्जनादिना वा शुचिर्भूत्वा। आदिष्टी नोदकं कुर्यादिति तु प्रेततर्पणपरं देवतानामर्चनं पुष्पाद्यैः॥ ना०॥

समिदाधानमग्नाविति शेषः॥ रा०॥

नित्यमाश्रमान्तरे ऽपि। तर्पणार्चनयोः करणार्थं नित्यग्रहणम्। समिदाधानस्य पुनर्ग्रहणमादरातिशयार्थम्॥ न०॥ १७६॥

---

...मांसं प्रोक्षितादयपि। गन्धशब्देन सुरभित्वातिशययुक्तानि कर्पूरागुरुप्रभृतीनि द्रव्याणि संबन्धिलक्षणया प्रतिषिध्यन्ते। तेषामनुलेपनाद्युपभोगप्रतिषेधः।...माल्यं कुसुमं ग्रथितं हि। रसा मधुराम्लादयः। ननु च नीरसस्य भोज्यत्वासंभवात्प्राणवृत्तिरेव न स्यात्। सत्यम्। उद्रिक्तरसाः केवला गुडादयो निषिध्यन्ते। संस्कारकरणे द्रव्यान्तर्गतानामपि प्रतिषेधः। अथवात्यन्तमसंस्कृतस्य उक्तिप्रतिषेधो ऽयम्।...अन्ये तु शृङ्गारादीन्मन्यन्ते नाटकादिप्रेक्षणेन वा रसपुष्टिर्न वक्तव्या। अन्येषां तु दर्शनमिक्षामलकादीनाम्...॥ मे०॥

माक्षिकमांसमाल्यस्त्रीप्राणिहिंसनानि वर्जयेत्। तथा गन्धवद्द्रव्यं कर्पूरादि उद्रिक्तरसं च गुडादि मधुनो रसशब्दग्रहणे ऽपि प्रायश्चित्तविशेषार्थः पृथगुपदेशः शुक्तानि यानि प्राप्तरसानि कालपरिवासेनोदकादिद्रव्यान्तरकालपरिवासाभ्यां चाम्लीभवन्ति। सर्वग्रहणं पादपूरणं न त्वस्यार्थान्तरग्रहणे सामर्थ्यमस्ति। यत्तु गौतमीये शुक्ता वाच इति तद्वाक्शब्दसंनिधानाच्छुक्तशब्दस्यार्थान्तरवृत्तित्वम्।...

वर्जयेन्नोपयुञ्ज्यादिति। माल्यं पुष्पम्। रसा उत्कटरसा गुडादयः शृङ्गारादय इत्यन्ये। सर्वाणि शुक्तानि दध्यादीन्यपि। शुक्तमिति तु

शुक्तमनम्लं कालवशेन द्रव्यान्तरयोगेन वाम्लतां गतम्। न त्वत्र शुक्ता वागपि ग्राह्या प्रवृत्तिनिमित्तभेदात् ॥ ना० ॥

शुक्तानीति स्वरसतो मधुराणि कालवशेनाम्लतां यान्ति यानि तानीति । रा० ॥

रसान्घृततैलादीन् । कालादिप्राप्त्या स्वरसं परित्यज्य रसान्तरापन्नानि ॥ नं० ॥ १७७ ॥

---

घृततैलादिना स्नेहेन शरीरस्त्रक्षणमभ्यङ्गः। अञ्जनं चाक्ष्णोः अक्षिग्रहणं वृत्तपूरणार्थम् ।...उपानहौ चर्मपादुके न केवले। छत्त्रधारणं स्वहस्तेन परहस्तेन वा उभयस्यापि निषेधः। कामो रागो मन्मथस्य स्त्रीप्रतिषेधादेव सिद्धेः। क्रोधो रोषः। लोभो मोह ।...॥ मे० ॥

अभ्यङ्गमञ्जनं घृताद्यभ्यञ्जनोपानच्छत्त्रधारणं कामक्रोधपरद्रव्यादिलोभगीतवादनानि वर्जयेत् । कामो भोजनाद्यभिलाषातिशयो मन्मथस्य स्त्रीग्रहणेन निषिद्धत्वात् ॥ गो० ॥

अभ्यङ्ग तैलादिम्रक्षणम्। स्त्रिय इति स्त्रीसंबन्धो निषिद्धः। कामशब्देन त्वत्र तदभिलाषो निषिध्यते ॥ ना० ॥

अभ्यङ्गः तैलादिनोन्मर्दनम्। कामो धनाद्यभिलाषः ॥ रा० ॥

अत्र वर्जयेदित्यनुवर्तते ॥ नं० ॥ १७८ ॥

---

द्यूतमक्षक्रीडा। समाह्वयः कुक्कुटादिभिः प्रतिषिद्धो द्यूतशब्दस्य सामान्यशब्दत्वात्। जनैर्वाद अकारणेन लौकिकेष्वर्थेषु वाक्कलहः। देशवार्त्ताद्यन्वेषणप्रश्नो वा परिवादः। असूयया परदोषकथनमनृतमन्यथा दृष्टमन्यथा च श्रुतं यदन्यथोच्यते। सर्वत्र वर्जयेदित्यनुषङ्गाद् द्वितीया। स्त्रीणां च प्रेक्षणालम्भौ। अवयवसंस्थाननिरूपणं प्रेक्षणमिदमस्याः शोभनमङ्गमिदं नेति। आलम्भमालिङ्गनं मैथुनम्...॥ मे० ॥

अक्षादिक्रीड़ा जनैः सह कलहं परदोषादिकीर्तनमसत्यं च स्त्रीणां च मैथुनसेवाशङ्कालिङ्गनं परस्य चार्थाद्युपघातं च वर्जयेत् ॥ गो० ॥

जनसंवादं वार्त्तादिकथनम्।...॥ ना० ॥

जनवादं निरर्थवाक्कलहं स्त्रीणामिति इदमस्याः सौकुमार्यमित्यादि सरागेक्षणस्पर्शने।...॥ रा० ॥

प्रेक्षणालम्भं रागयुक्तौ प्रेक्षणस्पर्शौ। उपघातं द्रोहम् ॥ न० ॥ १७९ ॥

---

न रेतः स्कन्दयेत्क्वचित्। अयोनावपि। योनौ स्त्रीप्रतिषेधादेव सिद्धत्वात्। अत्रार्थवादः। कामाद्धि स्कन्दयन् इच्छात्र कामः। हस्तव्यापारादिनायोनौ मैथुनेन च रेतः स्कन्दयन् क्षरयन् हिनस्ति नाशयति ब्रह्मचर्यव्रतमात्मनः ॥ मे० ॥

नान्येन सह शयीत सर्वत्र गुरुगृहे पितृगृहादौ न च स्त्रीप्रयोगात्प्रकारान्तरेणापि रेतः प्रक्षारयेत्। क्वचिदयोनावपि। यस्मात्तद्बुद्धिपूर्वं रेतः स्कन्दयन्नात्मनो ब्रह्मचर्यं खण्डयति ॥ गो० ॥

क्वचिद्भूम्यादावपि। न स्कन्दयेत्। कामतः स्कन्दयन्। कामतस्तु स्त्रियं दृष्ट्वापि स्कन्दनेन व्रतहानिः। व्रतं हिनस्त्यतः पुनरुपनयनं तस्येत्यर्थः ॥ ना० ॥

न स्कन्दयेत् स्वेच्छया न पातयेत्क्वचिदयोनावपि कामादिति प्रायश्चित्तार्थमनुवादः।...॥ रा० ॥

सर्वत्र मातृपितृसकाशेऽपि हि हेतौ व्रतं ब्रह्मचर्यं हिनस्त्यवहन्त्येव। अकामतो हि रेतःस्कन्दने प्रायश्चित्तं प्रकरणेऽप्यादरातिशयार्थमाह ॥ न० ॥ १८० ॥

---

कामाद्व्रतलोपेनावकीर्णिप्रायश्चित्तमकामात्त्विदमाह। स्वप्नग्रहणमविवक्षितम्। अकामत इत्येतावदनिमित्तम्। न हि स्वप्ने कामसंभवः। अतो यद्यसुप्तस्यापि कथंचिदनिच्छया सस्वप्न आश्रयवत् क्षरति शुक्रं तत्राप्येतदेव

प्रायश्चित्तम्। अकामतो रेतः सिक्त्वा इदं प्रायश्चित्तं कुर्यादित्येतामृचं जपेत्॥ मे०॥

यो द्विजो ब्रह्मचारी अबुद्धिपूर्वं स्वप्ने रेत उत्सृज्य स्नात्वा अर्कं पुष्पादिनार्चयित्वा त्रीन्वारान्पुनर्मामैत्विन्द्रियमित्येतामृचं जपेत्। अस्य प्रायश्चित्तस्य प्रकरणोत्कर्षो रेतःसंरक्षणनियमान्तरेभ्यो ब्रह्मचारिणो गुरुत्वप्रख्यापनार्थः॥ गो०॥

अकामतः स्त्रियमनुध्यायापि सुप्तः सक्तद्गन्धपुष्पादिनार्चयित्वा त्रिर्जपेत्। अत्र प्रायश्चित्तोक्तिः प्रसङ्गात्॥ ना०॥

ऋचं पुनर्मामैत्विन्द्रियमित्येताम्॥ रा०॥ १८१॥

---

यावद्भिरर्थैः प्रयोजनमुपाध्यायस्य सिध्यति तावदुदकुम्भादि आहरेत्। प्रदर्शनार्थं चैतदन्यदपि गृहोपयोगि यदगर्हितं कर्म कुर्यात्।...॥मे०॥

उदकुम्भपुष्पगोमयमृद्दर्भाद्यात्मनो यावत्प्रयोजनमानयेत्। भैक्षं प्रत्यहं चरेत् नैकदिवसाहृतेनापर्युषितेन स्वेच्छानियमभक्तादिना परेद्युर्वर्तेत॥गो०॥

गोशकृद्गोमयम्। यावदर्थानि यावता तद्दिनसाध्यसिद्धि। अहरहर्दिनद्वयार्थम्॥ ना०॥

गोशकृद्गोमयम्। यावदर्थानि प्रयोजनोपयुक्तानि। येभ्यो भैक्षमाहार्यं तानाह॥ रा०॥

यावदर्थानि यावत्प्रयोजनानि। अहरहर्भैक्षं चरेत्। न परेद्युरर्थं पूर्वेद्युः। अथ भैक्षापादननियममाह॥ न०॥ १८२॥

---

येभ्यो भैक्षमासादयितव्यं तान्वक्ति। वेदैर्यज्ञैश्च ये अहीना वेदाध्ययनेन संयुक्ता यज्ञाना च सत्यधिकारे कर्तारः। अहीना अवर्जितास्तदुपेता इति यावत्। स्वकर्मसु च प्रशस्ता येषां यज्ञे ऽधिकारो नास्ति अन्यस्मिंस्तु स्वे कर्मणि तत्पराः। अथवा स्वकर्मप्रशस्तास्त उच्यन्ते ये स्ववृत्तावेव संतुष्टा न

वार्धुषिकादिवृत्त्युपजीविनस्तेषां गृहेभ्यो भैक्षमाहरेद्याचित्वा गृह्णीयात् प्रयतः शुचिः । अन्वहमित्यनुवादः ॥ मे० ॥

वेदवेदार्थानुष्ठानयुक्तानां स्वकर्मसु च वृत्त्यर्थेष्वध्यापनादिषु प्रशस्तानां स्ववृत्त्या जीवतां गृहेभ्यो ब्रह्मचारी शुचिः सम्प्रत्यहं भैक्षमाहरेत् ॥ गो० ॥

प्रशस्तानां लब्धोत्कर्षाणाम् । स्वकर्मसु ब्रह्मवादिकर्मसु ॥ ना० ॥

प्रशस्तानां दक्षाणां स्वकर्मसु । भिक्षाहरणे प्रतिषिद्धानाह ॥ रा० ॥

प्रयतो वाङ्मनश्चक्षुर्भिः ॥ न० ॥ १८३ ॥

---

सत्यप्येतद्गुणयोगे गुरुगृहे न भिक्षेत । कुलं वंशस्ततो गुरोर्ये पितृव्यादयस्तेभ्योऽपि न ग्रहीतव्यं ज्ञातयो ब्रह्मचारिणः पितृपक्षास्तेषां कुलो बन्धुषु च मातृपक्षेषु मातुलादिषु नैवमभिसंबन्धः कर्तव्यो गुरुज्ञात्यादिष्विति । यतो गुरोः कुलशब्देनैव तेषां संगृहीतत्वात् कुतस्तर्हि भिक्षेत् । एतद्व्यतिरेकेणान्यगेहेभ्यः । अलाभे ऽसंभवे ऽन्यगेहानां सर्व एव यदि ग्रामो गुरुज्ञातिभिर्व्याप्तो भवति... एतेष्वपि गृहेषु भिक्षितव्यम् । अन्याभावे प्रथमं बन्धुं भिक्षेत तदभावे ज्ञातिं तदभावे गुरुकुलम् ॥ मे० ॥

गुरुगृहं न भिक्षेत तथात्मनः पितृमातृगृहेषु । यदि पुनरेतद्व्यतिरिक्तगृहेभ्यो न लभ्यते तदा पूर्वं पूर्वं परिहरेत् । प्रथमं बन्धुगृहे भिक्षेत्तदभावे गुरुगृहे ॥ गो० ॥

गुरोराचार्यस्य । पितुः कुलस्य मातरं चेत्यनुज्ञानात् । अत एव स्वसादिभ्यो ऽन्येषामेव बन्धूनां निरासः । ज्ञातिः सपिण्डः तस्य कुले । तथा बन्धुषु तदन्यसमानयोनिषु । अन्यगेहानां निषिद्धान्यगृहाणां पूर्वं पूर्वमुक्तेषु त्रिषु ॥ ना० ॥

गुरोरिति । तस्योद्वेगहेतुत्वात् ।...॥ रा० ॥

बन्धुषु मातृष्वसृपितृष्वसृबन्धुषु । अन्यगेहानामलाभे भिक्षालाभे गेहानामभावे वा पूर्वं पूर्वं विवर्जयेत् ।...॥ न० ॥ १८४ ॥

---

पूर्वोक्तानां वेदयज्ञैरहीनानामसंभवे सर्वं ग्राममनपेक्षवर्णविभागं विचरेत्...अभिशस्तान् क्षतपातकत्वेन प्रसिद्धान्दृष्टपातकानपि वर्जयित्वा।... नियम्य वाचं भिक्षावाक्यं वर्जयित्वा आ भैक्षलाभादन्यां वाचं नोच्चरेत्॥मे०॥

बन्धुगृहादिभ्योऽपि अलाभे चातुर्वर्ण्यस्याहरेत्। संजितेन्द्रियः सन्भिक्षा वाक्यवर्जं मौनम्। अभिशस्तान्पुनः पातकित्वेन प्रसिद्धान् निश्चितपातकान् दण्डापूर्विकया पतितांश्च वर्जयेत्॥ गो०॥

पूर्वोक्ताना देवयज्ञादीनां संपूर्णभिक्षादातृत्वासंभवे। नियम्य वाग्यमपरां तदर्थभाषाम्। प्रयतो ऽशुच्याद्यस्पर्शी।...॥ ना०॥

पूर्वोक्तानां वेदयज्ञैर्विहीनानाम्।अभिशस्तान्महापातकित्वादिनासंदिग्धान्॥ रा०॥

आपद्यप्यभिशस्तानां प्रतिषेधः कृतः।...॥ न०॥ १८५॥

---

दूरग्रहणमपरिगृहीतदेशोपलक्षणार्थम्। ग्रामात्किल दूरमरण्यं न च तत्र कस्यचित्परिग्रहः। अनुपलक्षणे हि दूरार्थे कियद्दूरमित्यनवस्थितः शास्त्रार्थः स्यात्। आहृत्य आनीय संनिदध्यात् स्थापयेत्। विहायसि गृहस्योपरि। न हि निरालम्बने ऽन्तरीक्षे निधानं संभवति। ताभिः सायंप्रातर्जुहुयात्। आहरणं तत्कालिकमन्यदा वा इच्छया विहायसि निधानमदृष्टार्थमित्याहुः। अन्ये तु ब्रुवते। संप्रत्यानीयमानं वृक्षाद्दारु आर्द्रं भवतीति गृहस्योपरि अन्यस्य वा प्राकारादेस्तत एवावगन्तव्यम्॥ मे०॥

अरण्यात्समिध आहृत्येति गृह्यदर्शनाद् दूरस्य चापर्यवसितत्वादपरिगृहीताः समिधः आनीय विहायस्याकाशे निधानासंभवाद्गृहपटलादौ स्थापयेत्ताभिस्तानलसः सन्सायंप्रातरग्निकार्यं कुर्यात्॥ गो०॥

दूराद् ग्राम्याशुचिशङ्काशून्याद्देशात्। विहायसि मञ्चादौ॥ ना०॥

दूराद् वनादेः। विहायसि भूम्यतिरिक्ताशुचिदेशे। ताभिः समिद्भिः। ॥ रा०॥

दूरादपहृतप्रदेशाद्भजखलादिस्पर्शे भूयिष्ठजन्तुसंक्रान्तिमी भूदित्युक्तं संनिदध्याद्विहायसीति । विहायस्याकाशे संनिदध्यात् ।...॥ न० ॥ १८६ ॥

---

अग्न्याधानं भैक्षचरणं नैरन्तर्येण सप्तरात्रमकृत्वा अनातुर अव्याधितः सन्नवकीर्णिव्रतं नाम प्रायश्चित्तमेकादशे वक्ष्यमाणस्वरूपं चरेत्कुर्यात् ।...॥मे०॥

प्रायश्चित्तगुरुत्वाद्भैक्षाग्निकार्ये समुच्चिते । कामकारेण सप्ताहानि प्रबन्धेनानातुरः सन्नकृत्वावकीर्णिप्रायश्चित्तमेकादशे वक्ष्यमाणं चरेत् । कथंचित्पुनः प्रत्येकव्यतिक्रमे गौतमीयमग्नीन्धनभैक्षचरणे सप्तरात्रमकृत्वाज्यहोमसमिधो वा एताभ्यामिति । अनातुर इत्यातुरस्य प्रायश्चित्तान्तरं न तु प्रायश्चित्ताभावः । एतावद्यतः प्रतीयते । अनातुरस्येदं प्रायश्चित्तम् ।...॥ गो० ॥

...अवकीर्णिव्रतमेकादशे वक्ष्यमाणम् । अनातुर इत्यनापदुपलक्षणम् । आपदि तु रोगादावदोषः । अन्यतरातिक्रमैकाहाद्यतिक्रमयोस्तु गौतमोक्तः क्रमादाज्यहोमः समिद्द्वयहोमश्च ॥ ना० ॥

असमिध्य अप्रज्वाल्य होमार्थमवकीर्णिव्रतं नैर्ऋतं गर्दभालम्भनम् ॥रा०॥

उभयोः समुच्चितयोरकरणे प्रायश्चित्तमेतत् । चकारेण समुच्चयावगमात् । सप्तरात्रमिति निमित्तयोर्नैमित्तिकस्य च कालोपदेशः ।... ॥ न० ॥ १८७ ॥

---

...भैक्षेणैव केवलेन वर्तिनो या वृत्तिः शरीरधारणमुपवासतुल्यफला सा वृत्तिः स्मर्यते ॥ मे० ॥

ब्रह्मचारी भैक्षेण यावद्ब्रह्मचर्यं प्राणयात्रां कुर्यात् । न त्वेकसंबन्धि अन्नमश्नीयात् । यस्मादस्य भैक्षेण वृत्तिरुपवासतुल्यफलेति । एतन्नियमफलाभिधानार्थं च भैक्षेण वर्तयेदित्युक्तसंकीर्तनम् । न चानित्यत्वाङ्कृत्वा प्रायश्चित्तस्योक्तत्वात् ॥ गो० ॥

वर्तयेज्जीवेत् । नैकान्नादी एकस्यान्नैनैकदिनस्वपणाकृत् । भैक्षेणेति नित्यत्वेऽपि भैक्षस्य नित्योपवासफलहेतुरित्यर्थः ।...॥ ना० ॥

नैकान्नादी नैकमात्रस्यान्नं गृह्णीयात् । उपवाससमा इति परयाकर्षचिर्न स्यात् ॥ रा० ॥

प्रतिषिद्धमेकेनाशनं प्रतिप्रसौति ॥ न० ॥ १८८ ॥

---

...तच्च व्रतवद्व्रतविरुद्धमधुमांसादिवर्जितमित्यर्थः । व्रतवदृषिवदिति चशब्दद्वयेनैक एवार्थ उच्यते । न पुनर्ग्रामारण्ययोः कर्मभेदव्यवस्था वृत्तानुरोधात्तु द्विरभिधानम् । ऋषिर्वैखानसस्तदशनाभ्यनुज्ञाने मासमपि ब्रह्मचारिणो ऽनुज्ञातं स्यात् ।...॥ मे० ॥

दैवे कर्मणि व्रतार्थं मध्वादि वर्जितम् । श्राद्धे च ऋषिवदृषिरिवारण्यनीवारादि । न ग्राम्यं प्रथितः सन् काममिच्छयैकान्नं समश्नीयात् । नास्यैवं कुर्वतो व्रतलोपो भवति । ऋषिशब्दस्य वसिष्ठादौ प्रसिद्धप्रयोगो न वैखानसेयेन तदर्हान्नाभ्यनुज्ञाने चैकमप्युपभुञ्जीतेति मांसाशनशङ्का स्यात् । श्राद्धभोजनस्याचाराधिकरणत्वादृषिवदिति नियमातिशयमाह ॥ गो० ॥

व्रतवदिति । व्रतं मधुमांसाद्यभक्षणनियमस्तद्युक्तम् । ऋषिवत् वानप्रस्थवत् । इति । मुन्यन्नाशनमभिप्रैति । देवदैवत्ये विश्वे देवा देवता यत्र तत्र पित्र्ये वा अत्यन्ताभ्यर्थनयोपरुद्धो ऽश्नीयात् । अकामानुमतौ काममत एवोक्तमस्य न लुप्यते न प्रत्यावर्तते ।...॥ ना० ॥

...तत्रैकान्नमद्यात् । व्रतवन्मधुमांसवर्जमश्नीयात् । तथा पैत्र्ये ऋषिवदृषिसम्यग्दर्शनसंपन्नत्वे ऽपि मधुमांसयोर्वर्जनात् । अथवा ऋषिर्मुनिः संन्यासीति तद्वदास्वादनासक्तमौषधवदशनमाचरेदिति संन्यासप्रकरणे श्रुते.। .॥ रा० ॥

व्रतवदिति मधुमांसवर्जनमभिप्रेतम् । ऋषिवदित्यल्पवन्याशनम् ।...॥ न० ॥ १८९ ॥

---

यदेतदेकान्नभोजनकर्मादिष्टमेतद्ब्राह्मणस्यैव मनीषिभिर्विद्वद्भिर्वेदादुपलभ्योपदिष्टं क्षत्रियवैश्ययोस्तु नैतदिच्छन्ति ।...॥ मे० ॥

एतद्दैवपित्र्यैकान्नभोजनाख्यं कर्म ब्राह्मणस्यैव मन्वादिभिः स्मृतम्। क्षत्रियवैश्ययोः पुनर्नैतत्कर्म ब्रुवते भैक्षस्य प्रतिग्रहप्रकारत्वे ऽपि ब्रह्म चारित्वं च प्रकारणात्क्षत्रियवैश्ययोरपि ब्रह्मचारिणोर्भैक्षभोजनाभ्यनुज्ञाने सति तदपवादैकान्नभोजने ऽपि तयोरपि प्रस्तुतत्वात्प्रतिग्रहस्य च ब्रह्मचारि-व्यतिरिक्तक्षत्रियविषये चरितार्थत्वात्सत्यमेवं प्रतिषेधः॥ गो०॥

एतत्कर्म श्राद्धान्नाशनम्। केचित्त्वेतत्पदेनैकान्नाशनमात्रपरामर्शं इत्याहुः॥ ना०॥

एतत्कर्म निमन्त्रितभोजनम्॥...॥ रा०॥

कर्म पूर्वश्लोकोक्तम्॥ न०॥ १९०॥

---

नोदितो नियुक्तो गुरुणा अप्रणोदितो ऽनियुक्तो ऽपि कुर्यादध्ययने योगं यत्नम्।...एवमाचार्याय हितं यदुदकुम्भाहरणादि श्रान्तसंवाहनादि तदप्य-नियुक्तेन कर्तव्यम्॥ मे०॥

गुरुणा नियुक्तो ऽनियुक्तो वा गृहीताध्ययनभागाभ्यासयत्नमाचार्ययत्नं यावद्ब्रह्मचर्यं कुर्यात्॥ गो०॥

योगमुद्यमम्। यत्नमिति क्वचित्पाठः। अचोदितो ऽपि गृहीतवेदभागा-भ्यासं कर्तुं स्वत एव शक्नोतीति न तत्र गुर्वपेक्षा।...॥ ना०॥

योगमुपायम्॥ रा०॥

योगमभ्यासम्॥ न०॥ १९१॥

---

कुतश्चिदागतो गुरोर्मुखं वीक्षमाणस्तिष्ठेन्नोपविशेत्। नियम्य च शरीरं मत्या हस्तचालनहसितानि न कुर्याच्च न किंचिद्वदेत्। अनुपयोगिबुद्धी-न्द्रियाणि नियच्छेत्॥ मे०॥

देहवाक्चक्षुरादिबुद्धीन्द्रियमनांसि नियम्य बद्धाञ्जलिः सन्गुरोर्मुखमीक्ष-माणस्तिष्ठेत्॥ गो०॥

शरीरनियमोऽन्यथाचेष्टा। बुद्धीन्द्रियाणि पञ्च। मनश्च नियम्य...॥ नां॥
निरीक्षमाण इत्यध्ययनकाल इति शेषः॥ रा०॥
बुद्धिरध्यवसायात्मिका। मनः संशयात्मिकम्॥ न०॥ १९२॥

...नित्यग्रहणं न तिष्ठत एव पाण्युद्धारो नाप्यध्ययनवेलायां किं तर्हि ततो ऽन्यत्रापि। साध्वाचारः साधुरनिन्द्य आचारो वाग्व्यवहारादिः कार्यः। अश्लीकादिभाषणमसंनिधाने ऽपि गुरोर्नित्यग्रहणान्न कर्तव्यम्। सुसंवृतः वाङ्मनश्चक्षुर्भिर्नियतात्मा स्वल्पो ऽपि दोषस्तं परिहरेत्। अनावृतो लोक उच्यते यो यथाकामी तद्विपरीतः सुसंवृतः। अन्ये तु मन्यन्ते वस्त्रेणाच्छादितशरीरो गुरुसंनिधौ भवेत्। नोत्तरयीमवतारयेत्। एवं तिष्ठेत्। यदा तु गुरुणास्यतामित्युक्तः...तदासीत उपविशेत् अभिमुखः संमुखः॥मे०॥
यावज्जीवं गुरुसंनिधौ वसेत्। उद्धृतबाहुः सदाचारयुक्तो ऽनलसः स्यात्। गुरुणोपविश्यतामिति चोक्तः सन्गुरोः संमुखमुपविशेत्॥ गो०॥
उद्धृतपाणिः उत्तरीयबहिष्परिष्कृतदक्षिणबाहुः। साध्वाचारो गुर्वनुगमनादिविशिष्टाचारकारी। सुसंयतो ऽचपलचित्तः। उक्तो गुरुणा। अभिमुखं दर्शनविषये॥ ना०॥
उद्धृतपाणिः वस्त्रादिभ्यो विकासितदक्षिणपाणिः सुसंवृतदेहः प्रोक्तो गुरुणेति शेषः॥ रा०॥
नित्यमाश्रमान्तरे ऽपि। उद्धृतपाणिः स्यादाविशेत्॥ न०॥ १९३॥

हीनं न्यूनमन्नं भुञ्जीत गुरुसंनिधौ। न्यूनता च परिमाणतः।...वेष आभरणं मण्डनादिः। सो ऽपि हीनः सर्वदा ब्रह्मचर्यात्परेणापि अत एव वेषग्रहणम्। न हि ब्रह्मचारिणो मण्डनमिष्यते। उत्तिष्ठेत्प्रथमं चास्य शय्याया राज्युपगमे आसनाद्वा उत्थानावसरं बुद्ध्वा प्रथमं पूर्वं गुरोरुत्तिष्ठेत्। चरमं पश्चात्स्वापकाले सुप्ते गुरौ संविशेत्। शय्यां समाश्रयेत् आसने चोपविशेत्॥ मे०॥

गुर्वपेक्षया संख्यापरिमाणादिना न्यूनान्नवस्त्रालंकारो यावज्जीवं गुरोः संनिधौ च स्यात् । शयनाच्च गुरुस्थानात्प्रागुत्तिष्ठेत् । तत्स्वापानन्तरं शयीत ॥ गो० ॥

हीनमपकृष्टं गुरुभोग्यान्नवस्त्रं गुरुवेषेभ्यः स्वस्य वस्त्रादेर्हीनत्वम् । उत्तिष्ठेच्छयनात् । संविशेच्छयीत ॥ ना० ॥

हीनान्नवस्त्रवेष अपकृष्टान्नादि गुरुतः प्रथमं गुरुस्थानात्पूर्वं चरमं गुरुसंवेशनादुत्तरम् । संविशेत् शयीत ॥ रा० ॥

सर्वदा आश्रमान्तरे ऽपि । संनिधाविति विशेषणादसंनिधावदोषः ॥ न० ॥ १९४ ॥

---

प्रतिश्रवणमाह्वयमानस्य कार्ये विनियुज्यमानस्य गुरुसंबन्धिवचनाकर्णनं संभाषा गुरुणा सह उक्तिप्रत्युक्तिकरणान्तप्रतिश्रवणसंभाषे शयानः स्वे स्तरे निषिक्तगात्रो न समाचरेन्न कुर्यात् । नासीनः आसने चोपविष्टः न भुञ्जानः न तिष्ठन्नेकस्मिन्नेव देशे अविचलन्नूर्ध्वं स्थितो न पुनः पराङ्मुखो यस्यां गुरुर्दृश्यते ततः पराकृत्य स्थितो न कुर्यात् । कथं तर्हि ॥ मे० ॥

आज्ञाङ्गीकरणकार्यार्थसंभाषणे । शयीत उपविष्टो अश्नन्नुत्थितो अनभिमुखो न कुर्यात् । कथं तर्हि ॥ गो० ॥

उत्तिष्ठेत् शयनात् । संविशेत् शयीत । प्रतिश्रवणमाज्ञास्वीकारः । यथा समाचरेत्तदाह ॥ ना० ॥

...न पराङ्मुखः गुरुं पृष्ठतः कृत्वा ॥ रा० ॥

प्रतिश्रवणमात्मानं प्रति गुरुणा प्रयुज्यमानस्य वाक्यस्याश्रवणम् ।... ॥ ना० ॥ १९५ ॥

---

आसीनो यदाज्ञां ददाति तदा स्थित आसनादुत्थाय प्रतिश्रवणसंभाषे कुर्यात् । अभिगच्छंस्तु तिष्ठतः । तिष्ठन्यदा गुरुरादिशति तदाभिगच्छन्

तदभिमुखः कतिचित्पदानि गत्वा व्रजत आगच्छतः प्रत्युद्गम्य अभिमुखमेव गत्वा प्रत्याभिमुख्ये । धावतो वेगेन गच्छतः पश्चाद्धावन् ॥ मे० ॥

उपविष्टस्याज्ञा ददत उत्थितः प्रतिश्रवणसंभाषे कुर्यात् । उत्थितस्य च तदभिमुखं गत्वा वेगेन गच्छतस्तस्य पश्चाद्वेगेन गच्छन् ॥ गो० ॥

अभिगच्छन्संमुखमागच्छन् ॥ ना० ॥

आसीनो यदा जातस्तदासनादुत्थितः । अभिगच्छन्कानिचित्पदानि प्रत्युद्गम्य आसनादेवोत्थितः । तत्क्रिया कुर्वन्प्रतिश्रवणसंभाषणे कुर्या द्गुरोरित्यन्वयः । किं च ॥ रा० ॥

कुर्यात्प्रतिश्रवणसंभाषे इत्येव । अभिगच्छंस्तु गच्छत इति पाठः ॥ न० ॥ १९६ ॥

---

पराङ्मुखस्य गुरोः संमुखोपविष्टशिष्यो यदि गुरुः परावृत्य कथंचित्स्थितः प्रेष्यति तदा तां दिशं प्राप्य गत्वा अभिमुखीभूय पूर्वोक्तवत्कार्यम् । दूरस्थस्य अन्तिकं गत्वा एत्य आगत्य प्राप्य । आसीनस्यापि शयानस्य प्रणम्य प्रह्वो भूत्वा गात्राण्यवनम्य निदेशे निकटदेशे तिष्ठतोऽपि प्रणम्यैव यत्प्रागुक्तमभि- गच्छन्निति ॥ मे० ॥

परावृत्तस्य च स्थितस्य चाभिमुखो भूत्वा दूरावस्थितसमीपमागत्य शयानस्य प्रह्वो भूत्वा निकटे वा देशे तिष्ठतः । तथैव ॥ गो० ॥

निदेशेऽधःस्थान्नीचे निम्ने देशे गर्तादौ तिष्ठतः । प्रणम्य कुर्यादित्यन्वयः । निदेशे निकटे देशे इत्यन्ये ॥ ना० ॥

.. निदेशे निकटदेशे तिष्ठतो गुरोः प्रणम्य प्रतिश्रवणादिकं कुर्यादित्य- न्वयः ॥ रा० ॥

...निदेशे विनतदेशे श्वभ्रादौ ॥ न० ॥ १९७ ॥

नीचमसमुन्नतं गुरुशय्याद्यपेक्षया न नीचत्वम् । नित्यग्रहणाद् ब्रह्मचर्या- दुत्तरकालमपि । गुरोश्च दृष्टिगोचरे यत्र स्थितं गुरुः पश्यति तत्र न

यथेष्टमासीत । पादप्रसारणाङ्कनिषङ्गादिना आसनग्रहणं चेष्टामात्रोपलक्षणार्थम् । यथेष्टचेष्टो न भवेत् ॥ मे० ॥

गुरुशय्याद्यपेक्षया कृतशय्यासनं यावज्जीवं गुरुसंनिधौ स्यात् । तथा गुरोश्चक्षुर्विषये न यथेष्टासन स्यात् ॥ गो० ॥

अत्र शय्यानीचत्वाभिधानादधःशय्यामिति प्रागुक्तं खट्वाद्यूर्ध्वशय्यानिषेधपरम् । न तु भूशयनपरम् । यथेष्टासनः पर्यङ्कबन्धादिना ॥ ना० ॥

उक्तपदार्थजातमतिशयविनय सूचनायानीचमिति निषेधार्थः ॥ रा० ॥

नित्यमुत्तराश्रमेष्वपि ॥ न० ॥ १९८ ॥

---

नोदाहरेन्नोच्चारयेदस्य गुरोर्नाम केवलमुपाध्यायाचार्यभट्टाद्युपपदरहित परोक्षमपि । न चैवास्यानुकुर्यात्सादृश्यं कुर्यात् । इमां गतिमस्मद्गुरुः प्रक्रामति । भाषितं द्रुतविलम्बितम्...। चेष्टितमेवं भुङ्क्ते एवमुष्णीषं बध्नाति एवं परिवर्तत इत्यादि उपहासबुद्ध्यायमनुकरणप्रतिषेधः ॥ मे० ॥

गुरोरसंनिधानेऽपि पूजावाक्यरहितं नाम नोच्चारयेत् । गुरोर्गमनभाषणभोजनादिचेष्टा नानुकुर्यात् । एवमस्मद्गुरुर्गच्छतीति ॥ गो० ॥

केवलं चरणाद्युपपदशून्यम् । नोदाहरेत्परोक्षमपि प्रत्यक्षं तु तद्युक्तमपि नोदाहरेदित्यर्थः । गतिभाषिते चेष्टितं च हस्तचालनादि नानुकुर्यात् परिहासबुद्ध्या तत्सदृशं गत्यादि न कुर्यात् ॥ ना० ॥

केवलं भगवच्छब्दादिशून्यम् । नानुकुर्वीतेति अनुकरणं तादृशश्यवहारादि तत्करणपरिहासादि प्रतीत्या क्रोधादिसंभादना स्यात् । भाषितमुक्ति ॥ रा० ॥

केवलं तत्र भवदादिशब्दरहितं हस्तमुद्रादिकम् ॥ न० ॥ १९९ ॥

---

यत्र देशे दुर्जनसपाते गुरोः परिवादः सभूतदोषानुकथनं निन्दा अविद्यमानाना दोषाणामभिधानं प्रवर्तते तत्र कर्णौ पिधातव्यौ अङ्गुल्यादिना । संवारयितव्यौ । ततः प्रदेशाद्वान्यत्र गन्तव्यम् ॥ मे० ॥

यस्मिन्देशे गुरोः सद्दोषाभिधानमसद्दोषकथनं वा केचन कुर्वन्ति। कर्णौ तत्राच्छादनीयौ तस्मात्प्रदेशादन्यत्र गन्तव्यम्। न चात्मना परिवादादि कर्तव्यम्॥ गो०॥

परिवादोऽवास्तवदोषोक्तिः। निन्दा तु सद्दोषोक्तिः। परिवादात्स्वयं क्रियमाणात्। एवमुत्तरेषु॥ ना०॥

परिवादो अविद्यमानदोषाभिधानम्। पिधातव्यावाच्छादितव्यौ। परिवादे शिष्यकर्तृत्वे प्रत्यवायमाह॥ रा०॥

परिवादो बुद्धिपूर्वदोषः। निन्दा व्यक्तादि॥ नं०॥ २००॥

---

पूर्वप्रतिषेधे शेषोऽयमर्थवादः। अत एव व्याख्येयम्। परिवादाच्छ्रुत्वा खरो भवति।...निन्दको निन्दाश्रावी उपचारान्निन्दक उच्यते। तथा संस्कर्ता च घातकः श्रवणनिषेधादेव साक्षात्करणनिषेधसिद्धिः। परिभोक्ता यो गुरुमुपजीवति कुमत्या वा वर्तते। मत्सरी गुरुसमृद्धिमभ्युच्चयं न सहते अन्तर्दह्यते।...॥ मे०॥

परिवादकर्ता जन्मान्तरे खर उत्पद्यते। श्वा च निन्दाकर्ता। अननुज्ञातगुरुधनोपजीवकः क्रमिर्भवति। गुरुगुणामहन कीटः कृमेरीषदुपचितप्राणी भवतीति फलकथनम्। अत एव न कर्तव्यमिति।...॥ गो०॥

परिभोक्ता उत्तमवस्तूनां लब्धानां तदनुज्ञया भोक्ता। मत्सरी तद्गुणासहिष्णुः। कीटः क्रिमेरीषदुपचितः॥ ना०॥

परकृतपरिवादादिश्रवणं वा। परिभोक्ता अनुचितगुरुधनाद्युपजीवी। क्रिमिरपदः सपदः कीटः। मत्सरी गुरुगुणासहिष्णुः॥ रा०॥

परिवादी परिवादप्रयोगी। परिभोक्ता गुरोर्भागादधिकभोगभोगी॥ नं०॥ २०१॥

---

अत्र परप्रेषणेन गन्धमाल्यादेरर्पणं प्रतिषिध्यते। स्वयं कृते परेण च कारिते तुल्यं कर्तृत्वं प्रयोजकेऽपि कर्तृत्वस्मरणादित्यनया बुद्ध्या प्राप्ते पर-

मुखेनार्चने प्रतिषेधः। अशक्तौ ग्रामान्तरस्थस्य न दोषः।...न क्रुद्धो गुरौ क्रोधासंभवादन्यनिमित्तेऽपि क्रोधे.। क्रुद्धमित्यन्ये पठन्ति। नान्तिके समीपे स्त्रियाः कामिन्याः स्थितं गुर्वाराधनपरत्वात्...॥ मे०॥

दूरस्थः सन्परहस्तपुष्पप्रेषणेनाचार्यं नार्चयेत्। नाप्येनं प्रत्युपजातक्रोधम्। न च भार्यायाः समीपस्थमर्चयेत्। यानासनस्थश्च यदा भवति तदावतीर्यैनमभिवादयेत्।...गन्त्रीगवादियानासनस्थस्यापि चोत्थानं सम्भवति। अत उक्तमवरुह्याभिवादयेदिति॥ गो०॥

दूरस्थः परहस्तप्रेषितप्रणामबुद्ध्यादिना नार्चयेत्। क्रुद्ध क्रोधनिषेधाप्रतिसंधाने दैवादुत्पन्नक्रोधः। न स्त्रिया अन्तिके स्त्रिया सहैकान्त आसीनमभिवादनादिना नार्चयेत्।...॥ ना०॥

एनं गुरुं न क्रुद्धः स्वयं स्त्रिया गुरोरवरुह्य भूमौ॥ रा०॥

दूरस्थो नार्चयेदेनं गन्धमाल्यादिप्रेषणेन नार्चयेत्। स्वयमर्चयेदित्यर्थः। क्रुद्धोऽन्यस्मै स्त्रिया गुरुपत्न्या अन्तिके रहसि पत्न्या सहितमित्यर्थः॥ न०॥ २०२॥

---

यस्यां दिशि गुरुर्व्यवस्थितस्ततो देशाद्यदा वायुः शिष्यदेशमागच्छति शिष्यदेशाद्गुरुदेशं ते प्रतिवातानुवाते। एक प्रतिवातमपरमनुवातमपेक्षया। तद्गुरुणा सह नासीत। अपि तु अज्ञातसेवी गुरुर्भवेत्। अविद्यमानः संश्रवो यत्र तस्मिन्नसंश्रवे न किंचिदपि गुरुगतमन्यगतं वा कीर्तयेत्। यत्र गुरुर्व्यक्तं न शृणोति तत्कर्णजप्यादिना तु शिष्यसंबन्धिनाजानाति किंचिदयमेतेन संभाषत इति न कीर्तयेत्॥ मे०॥

.तथा गुरुसंनिधाने यस्मिन्देशे गुरोः संश्रव आकर्णनं नास्ति तत्रान्यस्य कस्यचिन्न किंचिदपि कथयेत्॥ गो०॥

गुरुणा सहासीनो गुरोरभिमुखवातवहनस्थाने नासीत श्वासादिनिर्गमसंभवात्। नानुवाते तत्पृष्ठभागगतवातवहनस्थाने एतदुदीरितशब्दस्य तेनाश्रवणात्।...॥ ना०॥

गुरुदेशाच्छिष्यमनुगच्छन्वायुः प्रतिवातः। अनुवातः शिष्यदेशाद्गुरुमनुगच्छन्। असंश्रवे यत्र गुरुर्न शृणोतीत्यर्थः।...॥ रा० ॥

प्रतिवाते पुरतो नासीत। अनुवाते पृष्ठतः। पार्श्ववातयोरप्युपलक्षणमेतत्।...॥ न० ॥ २०३ ॥

---

यानशब्दः प्रत्येकमभिसंबध्यते। गोऽश्वोष्ट्रयान इति चाभियुक्तं यानं गोऽश्वोष्ट्रयानं दधिघटादिवत्। समासे युक्तशब्दस्य लोपः। केवलेष्वश्वपृष्ठादिषु सहारोहणं नास्ति।...प्रासाद उपरि गृहादीनां या भूमिस्तस्या गृहादिभूमिवत्सिद्धं सहासनं। प्रस्तरो दर्भादितृणाकीर्ण आस्तरः। कट उशीरवीरणादिकृतः प्रसिद्धः। शिला गिरिशिखरादावन्यत्र वा। फलकं दारुमयमासनं पोतवर्तादि। नौर्जलतरणसंप्लवः। तेन पोतादावपि सिद्धं भवति ॥ मे० ॥

गोऽश्वोष्ट्रयाने युक्ते सति। प्रासादे धवलगृहे तृणप्रस्तरे कटे च नटादिकृते कुलाले शिलाफलकनौषु च न गुरुणा सहासीत। शय्यासनेऽध्याचरिते श्रेयसा न समाचरेदिति प्रतिषेधस्याय प्रतिप्रसवः॥ गो० ॥

गोऽश्वोष्ट्रयुक्ते याने रथादौ प्रस्तरे तृणसंचये। कटेषु तृणादिनिर्मितेषु बृहदासनेषु। फलके काष्ठपट्टे।...॥ ना० ॥

गवादिषु युक्तेषु शकटेषु तद्व्येषु यानेषु वा। प्रासादे देवभूभुजां गृहे। प्रस्तरेषु तृणादिकृतास्तरेषु कटेषु लतादिनिर्मितेषु। फलकं दारुघटितविस्तीर्णासनम् ॥ रा० ॥

गोऽश्वोष्ट्रयुक्ते याने। प्रस्तरस्तृणादिसमूहः ॥ न० ॥ २०४ ॥

---

उक्ता गुरुवृत्तिरिदानीमन्यत्रातिदिश्यते। अध्ययनधर्मत्वात्सर्वस्यास्य गुरुरत्राचार्यो विज्ञेयः। तस्य यो गुरुस्तस्मिन्संनिहिते गुरुवद्वर्तितव्यम्। संनिहित इति न तद्गृहगमनमभिवादनाद्यर्थं कर्तव्यम्। गुरुगृहे वसन्

गुरुणानिसृष्टोऽननुज्ञातः स्वान्गुरून् मातापितृप्रभृतीन्नाभिवादयितुं गच्छेत् । ...॥ मे० ॥

आचार्यगुरुर्यदा शिष्यस्य संनिहितो भवति तदा तस्याथाचार्यवद्वर्तेत । तथाचार्यगृहे च स्थितस्तेनानुज्ञातः स्वयोनिगुरून्नाभिवादयेत् ॥ गो० ॥

गुरुवद्गुरुतुल्यां वृत्तिम् ।.. न चेति आचार्यगृहे वसन्गुरुणा आचार्येणानिसृष्टोऽननुज्ञातो न स्वान्गुरून्मान्यानुपाध्यायादीनभिवादयेत् ॥ ना० ॥

वृत्तिमभिवादनादि । गुरोः गुरौ गुरोराचार्ये कुर्यात् । गुरुणा ब्रह्मदात्रा स्वान्गुरून्पित्रादीन् ॥ रा० ॥

गुरोराचार्यस्यानिसृष्टः अननुज्ञातः । स्वान्गुरून्पित्रादीन मातापितृभ्यामन्यत्र पितृव्यादीनित्यन्ये ॥ न० ॥ २०५ ॥

---

अयमप्यादेशः । आचार्यादन्ये उपाध्यायादयो विद्यागुरवः । तेष्वेवमेव वर्तितव्यम् । शरीरं चेवेत्यादि कृत्वा । स्वयोनिषु ज्येष्ठभ्रातृपितृव्यादिषु नित्या वृत्तिर्गुरुवृत्तिर्विद्यागुरूणा त्वाचार्यव्यतिरेकेण यावद्विद्याग्रहणम् अधर्मादिकार्यात्परदारगमनादेः प्रतिषेधत्सु वयस्येष्वपि ।.. हितं च विधिरूपमग्रन्थकमुपदिशत्सु । अथवा हितस्योपदेष्टारो भिषज उच्यन्ते ॥ मे० ॥

आचार्यादन्येषु उपाध्यायादिषु विद्यागुरुष्वेवमेव वर्तेत । तथा स्वयोनिषु गुरुष्वधर्मनिवर्तकेषु धर्माद्युपदेष्टृष्वप्येवमेव नित्या वृत्तिः ॥ गो० ॥

विद्यागुरुष्विति । विद्याग्रहणनिमित्तगुरुष्वेव तत्र अनुमतिप्रतीक्षणम् । स्वयोनिषु तु पितृमातुलादिषु गुरुषु नित्या वृत्तिरनुज्ञा विनाप्यभिवादनादिप्रवृत्तिः । तथा अधर्मे क्रियमाणे अयमधर्मो न कार्य इदं धर्मसाधनं हितं कार्यमित्यादि पारलौकिकोपदेशकारिष्वप्येतदेव मे तदनुमत्यैवाभिवादनादीति व्यवहितान्वयः ॥ ना० ॥

..नित्या वृत्तिरभ्यासः । प्रतिषेधत्सु अधर्मान्निवर्तकेषु हितं चोपदिशत्सु हितं तदद्दष्टोपकारम् ।...॥ रा० ॥

विद्यागुरुष्वाचार्यव्यतिरिक्तेषु स्वयोनिषु ज्ञातिषु । उपकारसंनिकर्षा-पेक्षया तेषु तारतम्यं कल्पनीयम् ॥ न० ॥ २०६ ॥

---

श्रेयांस आत्मापेक्षया विज्ञवयोविद्याद्यतिशययुक्ताः । तेषु गुरुवद्वृत्तिं यथासंभवमभिवादनप्रत्युत्थानादि कर्म सर्वदैवास्य समाचरेत् ।...गुरुपुत्रे तथाचार्ये आचार्यग्रहणेनाध्यापकत्वं लक्ष्यते । यदसंनिहिते गुरौ तत्पुत्रो ऽध्यापयति कतिचिदहानि तदा तस्मिन्गुरुवद्वृत्तिः । पाठान्तरं गुरुपुत्रे-ष्वथार्येषु । आर्यशब्दो गुरुवद् ब्राह्मणजातिवचनः ।...॥ मे० ॥

श्रेयःसु विद्याद्यधिकेषु । गुरुवद्वृत्तिं गुरुपुत्रेषु ब्राह्मणेषु गुरुबान्धवेषु यावज्जीवमाचरेत् ॥ गो० ॥

श्रेयःस्विति । अतिशयविद्यादिप्रकर्षवत्स्वगुरुष्वपि गुरुवद्वृत्तिमभिवाद-नादि । गुरुपुत्रेषु ज्येष्ठेषु । आर्येष्वपापेषु । ॥ ना० ॥

श्रेयःसु विद्यातपःसमृद्धेषु गुरुवन्नमस्कारोत्थानादि ॥ रा० ॥

आर्येषु सद्वृत्तेषु निर्दोषेषु । गुरुपुत्रविशेषणमेतत् ॥ न० ॥ २०७ ॥

---

.. यो वेदं वेदैकदेशं वाध्यापयति तस्यानाचार्यस्याप्येषा वृत्तिरुदाहृता । ...शिष्यो वा यज्ञकर्मणि यज्ञकर्मग्रहणं प्रदर्शनार्थम् । क्वचिदङ्गे वेदैकदेशे मन्त्रभागे कस्मिंश्चिद् वा तत्र ऽपि गुरुवत्पूज्यः ।...॥ मे० ॥

ब्रह्मचारिणः कनीयान्समो वा यज्ञविद्यादौ वा शिष्यः तथाध्यापयन्गुरु-सुतो गुरुवत्पूजामर्हति ।...॥ गो० ॥

बालोऽल्पवयाः । समानजन्मा सवयाः । यज्ञकर्मणीति यज्ञकर्मविषयक-ग्रन्थकल्पोपदर्शनेनाङ्गोपलक्षणम् । तत्राङ्गज्ञाने पूर्वं यद्यप्यस्य गुरुसुतः गुरोः शिष्यस्तथापि गुरुसुते गुरौ कार्यान्तरादिव्यासक्तौ वेदमध्यापयन् तत्काले गुरुवन्मान्यः । यदि सुतोऽपि गतदधीतवेद एवास्य शिष्यो न तदैवम् ॥ना०॥

अध्यापयन्गृहीतवेदत्वेन तत्र समर्थः ।...॥रा० ॥

यज्ञकर्मणि यज्ञादिषु कार्यान्तरेषु आचार्ययज्ञादिकर्मपरवश इत्यर्थः । आचार्यस्थानीयोऽध्यापयन् बालो वयस्को वा समानजन्मा वा समानवयस्को वा विद्यान्तरेषु शिष्यो वा गुरुसुतो वा गुरुवन्मानमर्हति ॥ न० ॥ २०८ ॥

---

अभुक्तस्य उद्वर्तनमुत्सादनं न कुर्यात् गुरुपुत्रस्य पादयोश्चावनेजनं प्रक्षालनम् । अस्मादेव प्रतिषेधाद्दूरावेतदयुक्तमपि कर्तव्यतया प्रतीयते । यदा तु गुरुपुत्र एव गुरुः संपद्यते । कृत्स्नवेदाध्यापनयोग्यतया तदा संनिमित्तं तत्रोच्छिष्टभोजनाद्यस्ति नानेन प्रतिषिध्यते ।...॥ मे० ॥

उद्वर्तनस्नापनोच्छिष्टभोजनपादधावनानि गुरुपुत्रस्य न कार्याणि । अस्मादेव प्रतिषेधाद्दूरावेतदनुक्तमपि कर्तव्यमित्यवसीयते ॥ गो० ॥

उत्सादनमुद्वर्तनम् । गुरुपुत्रस्य पूर्वश्लोकोक्तलक्षणवतः । अवनेजनं क्षालनम् । अर्थादभिवादनमपि निषिद्धमेव ॥ ना० ॥

उत्सादनं गात्रमलानां त्याजनम् । अवनेजनं पादप्रक्षालनम् । एतेन गुरोरुच्छिष्टं भोज्यम् ॥ रा० ॥

अनेनैव ज्ञापितं गुरोरुत्सादनादीनि कार्याणीति ॥ न० ॥ २०९ ॥

---

गुरुयोषितो गुरुपत्न्यः । सवर्णाः समानजातीयाः । गुरुवत्प्रतिपूज्या आज्ञाकरणादिना असवर्णास्तु केवलैः प्रत्युत्थानाभिवादनैः । बहुवचनादाद्यर्थोऽत्रान्तर्भवति । तेन प्रियहितादिकरणाद्यप्यतिदिश्यते ॥ मे० ॥

गुरोः सजातीया भार्या गुरुवत्पूजनीयाः । विजातीयाः पुनः प्रत्युत्थानाभिवादनमात्रेण ॥ गो० ॥

सवर्णाः शिष्यस्य । गुरुयोषित आचार्योपाध्यायपितृपितृव्यादिपत्न्यः । अभिवादनमसावहमित्युक्त्वा ॥ ना० ॥

सवर्णाः समानजातीयाः ॥ रा० ॥

गुरौ या वृत्तिरुक्ता तथा सवर्णा योषितः प्रतिपूज्याः। असवर्णास्तु प्रत्युत्थानाभिवादनैः पूज्याः।...॥ न०॥ २१०॥

---

गात्राणामुत्सादनमुद्वर्तनं कार्यं सामान्यत्वात्पादधावनमपि। सर्वथा शरीरस्पर्शसाध्या या काचिद्वृत्तिः सा सर्वा प्रतिषिध्यते। वक्ष्यति हेतुं स्वभाव एव नारीणामिति। केशानां च प्रसाधनं विन्यासरचनादिकरणम्। कुङ्कुमसिन्दूरादिना सीमन्तोत्थापनम्। प्रदर्शनार्थं चैतदुक्तम्। तेन देहप्रसाधनमपि चन्दनानुलेपनादिना निषिध्यते॥ मे०॥

अभ्यङ्गस्नापनोद्वर्तनकेशरचना गुरुभार्याया न कार्याः॥ गो०॥

अभ्यञ्जनं देहम्रक्षणम्॥ ना०॥

प्रसाधनं केशसंस्कारः॥ रा०॥

स्पष्टं॥ न०॥ २११॥

---

पूर्णविंशतिवर्षेण तरुणेनेत्यर्थः। बालस्य वक्षऊरुस्पर्शाददोषः। पूर्णानि विंशति वर्षाणि यस्य स एवमुच्यते। अयं कालो यौवनभेदोपलक्षणार्थः। अत एवाह। गुणदोषौ विजानता। कामजे सुखदुःखे गुणदोषावभिप्रेतौ। ..॥ मे०॥

तरुणी गुरुभार्या यूना कामसुखदुःखे जानता पादोपसंग्रहपूर्वकं नाभिवाद्या॥ गो०॥

पूर्णविंशतिवर्षेणेति यौवनोपलक्षणमिति ज्ञापयितुमुक्तम्। गुणदोषाविति। स्त्रीणां स्पर्शनाद्गात्रोत्पत्तिदोषम्। व्यवधाने च ब्रह्मचर्याच्युतिम्। गुणं जानता। पादयोरिति निषेधात्पादस्पर्शनमात्रं न कार्यम्। भूमावेव त्वभिवादनमिति वक्ष्यति॥ ना०॥

पूर्णविंशतिवर्षेण ब्रह्मचारिणा। ..॥ रा०॥

न पादयोर्नाभिवाद्या। अभ्यञ्जनादिप्रतिषेधे कारणं श्लोकद्वयेनाह ॥ न० ॥ २१२ ॥

एषा प्रकृतिः स्त्रीणां यन्नराणां धैर्यच्यावनम् ।...अतोऽर्थादस्माद्धेतोर्न प्रमाद्यन्ति दूरत एव स्त्रियः प्रहरन्ति । प्रमादः स्पर्शादिकरणम् । वस्तु-स्वभावोऽयम् । यत्तरुणी स्त्री कामकृतं चित्तसंक्षोभं जनयति । तत्र चित्त-संक्षोभ अपि प्रतिषिद्धः...॥ मे० ॥

स्वरूपमेतत्स्त्रीणां यन्मनुष्यस्मरोद्रेकजननम् । अतोऽस्माद्धेतोः प्राज्ञः स्त्रीषु न स्पर्शनादिप्रमादं भजते ॥ गो० ॥

स्वभाव एष स्त्रीणामनिच्छन्तीनामपि दर्शनेन रागेण दुष्यन्तीति । नराणां दूषणं पुरुषेषु दोषापादकत्वं नारीणां स्वभावः । न प्रमाद्यन्ति तदनीक्षणादौ कार्ये न प्रमत्ता भवन्ति । अयमर्थः ॥ ना० ॥

दूषणं शृङ्गारचेष्टया व्यामोहनम् ॥ रा० ॥

यन्नराणां दूषणमेष नारीणां स्वभावः। अतोऽर्थमेतदर्थम् ॥ न० ॥ २१३ ॥

...शक्नुवन्ति हि स्त्रियः सर्वमुत्पथमार्गं लोकशास्त्रविरुद्धविषयं नेतुं कामक्रोधवशानुगं सन्तं कामक्रोधयोर्वशं विधेयतामनुगच्छति प्राप्नोति कामक्रोधाभ्यां यः संबध्यत इत्यर्थः । ..॥ मे० ॥

यतः कामक्रोधविधेयः पुरुषः सम्यक् शास्त्रज्ञो वा लोके अधर्ममार्गं नेतुं स्त्रियोऽलं समर्थाः ॥ गो० ॥

अलं समर्था । उत्पथं नेतुमविद्वांसं विद्वांसं तु कामक्रोधवशानुगं नान्यम् ॥ ना० ॥

क्रोधेन वशीभूतमिव । ॥ रा० ॥

स्पष्ट. ॥ २१४ ॥

विविक्तासनो निर्जने गृहादौ नासीत नापि निःशङ्कमङ्गस्पर्शादि

कुर्यात् । अतिचपलो ह्यीन्द्रियसंघातो विद्वांसमपि शास्त्रनिगृहीतात्मानमपि कर्षति परतन्त्रीकरोति ॥ मे० ॥

मातृभगिनीदुहितृभिरपि सह निर्जने देशे नासीत । यतोऽत्र ह्यय इन्द्रियसमूहः शास्त्रज्ञमपि संप्रयातं च्यावयति ॥ गो० ॥

मात्रेत्यादावध्याहार्यम् । विविक्तासन एकान्त आसीनः ॥ ना० ॥

विविक्तं विगतान्यजनं तत्रैताभिर्नासीतेति तत्र हेतुर्बलवानिति । अहो बलवानिन्द्रियग्रामो यतो मातृदुहित्रोस्त्रिंशद्वत्सरान्तरेऽपि पुत्रादेर्मैथुनादिसंभावना तत्रान्यासु का कथेति ॥ रा० ॥

...येन बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति । कथं तर्हि युवतीषु । गुरुपत्नीषु पूजा कर्तव्येत्याह ॥ न० ॥ २१५ ॥

---

काममित्यरुचिं सूचयति । उत्तरेण चैतत्संबध्यते । विप्रोष्य पादग्रहणमिति । भुवि तु पादवन्दनमिष्यत एव । युवतीनां युवा द्वयोर्यूनोरयं विधिः । यदि बालो ब्रह्मचारी वृद्धा वा गुरुपत्नी तदा पादोपसंग्रहणमविरुद्धम् । असावहमिति प्रागुक्तस्याभिवादनविधेरनुवादः । विधिवदिति व्यत्यस्तपाणिनेति ॥ मे० ॥

गुरुपत्नीनां तरुणीनाम् । युवा वन्दनं भुवि विन्यस्तहस्तो विन्यस्तपाणिनेत्यनेन विधिनासावहमिति ब्रुवन्नित्युक्तरूपेणाविभादनं कुर्यात् ॥ गो० ॥

भुवि न पादयोः । विधिवत् पाणिभ्यां व्यस्ताभ्याम् । तथा चोक्तं सव्येन सव्य इति ॥ ना० ॥

भुवि तदग्रभूमौ । विधिवद् बाहुभ्यां सह जानुभ्यां शिरसा च ।... ॥ रा० ॥

भुवि वन्दनं कुर्यान्न पादौ स्पृष्ट्वा । असावहं देवदत्तोऽहम् ।... ॥ न० ॥ २१६ ॥

---

प्रवासादेत्य पादयोर्ग्रहणं सव्येन सव्य इति अन्वहमहन्यहन्यपि अभिवादनं भूमौ सतां शिष्टानामेव धर्म आचार इत्यनुस्मरन् ॥ मे० ॥

प्रवासप्रत्यागतः पादोपसंग्रहणं प्रत्यहं पुनरभिवादनमात्रं गुरुभार्यासु कुर्यात्। एष एव साध्वाचार इति संचिन्तयन्। युक्तमेतत्पुत्रदारादिपर्यन्तं गुरुपरिचरणं यस्मात् ॥ गो० ॥

अत्र विप्रोष्य प्रवासादेत्य पादग्रहणं तत्पूर्वकमभिवादनम्। अन्वहं त्वभिवादनमात्रं वृद्धानामपि न पादग्रहणम्। गुरुदारेषु आचार्यादिभार्यासु न तु मातरि। समावृत्तमिति रागोत्पत्त्यसंभावनायामप्येवमेवैष आचार इत्यर्थः ॥ ना० ॥

विप्रोष्य प्रवासं कृत्वा। अन्यदा अभिवादनमात्रं सतां शिष्टानामयमाचार इति स्मरन् ॥ रा० ॥

विप्रोष्य प्रोषितप्रत्यागतः। युवतीषु गुरुदारेषु पादग्रहणं न कुर्वीत अन्वहं भुवि अभिवादनम्।...॥ न० ॥ २१७ ॥

---

सर्वस्य शुश्रूषाविधेः फलमिदं गुर्वाराधनद्वारेण स्वाध्यायविध्यर्थता। यथा कश्चिन्मनुष्यः खनित्रेण कुद्दालादिना भूमिं खनन्वारि प्राप्नोति नालोपेन। एवमयं विद्यां गुरुगतां शुश्रूषुर्गुरुसेवां परो ऽधिगच्छति ॥ मे० ॥

यथा कुद्दालादिना खनित्रेण महता यत्नेन खनन्नरः पातालगतमुदं प्राप्नोत्येव। आचार्यस्थां विद्यां परिचरणशीलः प्राप्नोति न त्वालस्यात् ॥ गो० ॥

वारि प्राप्नोति कुद्दालेन खनन्नालोपेन विद्यां शुश्रूषुः क्रमेणाधिगच्छतीति दृष्टान्तार्थः ॥ ना० ॥

खनञ्छिद्रार्थं यास्यन्वारि कूपादिजे ॥ रा० ॥

नियमान्तराण्याह ॥ न० ॥ २१८ ॥

मुण्डः सर्वतः केशवपनं कारयेत् । जटिलो वा जटाः परस्परमत्यन्तमितरेतरसंलग्नकेशाः तद्वाञ्जटिलः शिखैव वा जटा यस्य जटाकारां शिखां धारयेत् । तथा च कुर्याद्यथा ग्रामे स्थितस्य सूर्यो नाभिम्लोचेन्नास्तं गच्छेत् । ग्रामग्रहणं नगरस्यापि प्रदर्शनार्थम् । अस्तमयसमयमरण्ये संभावयेत् । एवं ग्रामे नाभ्युदियात् । उदयो ऽपि सूर्यस्य यथारण्यस्थस्य ब्रह्मचारिणो भवति तथा कुर्यात् ।...॥ मे॰ ॥

लूनाखिलकेशो वा स्यात् । इतरेतरसंलग्नधृतसमस्तकेशो वा स्यात् । शिखैव वा जटास्य । तथाभूतः स्यात् । तथा च कुर्यात् । यथास्य ग्रामनगरावस्थितस्योत्तरश्लोके शयानग्रहणाच्छयानस्य सूर्यो नास्तं यायात् । नाभ्युदियात्कचित्कस्मिंश्चिदपि काले ॥ गो॰ ॥

मुण्डः मुण्डितसर्वकेशः । जटिलो जटीकृतसर्वाकेशः । शिखाजटः शिखामात्रं जटीकृतमन्यन्मुण्डितमित्यर्थः । एवं ब्रह्मचारिणमभिमुखीयग्रामे न निम्लोचेदस्तमियात् संध्यार्थमरण्यं गत एवास्मिन्नस्तमियादित्यर्थः । मुण्डः केशरहितमस्तकः । जटिलो जटायुक्तः । शिखाजटः शिखामात्रजटा यस्य इति शाखाभेदेन । नैनमिति ग्राम इत्युपलक्षणम् ।...॥ रा॰ ॥

तत्र सक्तो ऽस्मिन्ब्रह्मचारिणि निम्लोचेदस्तमियात् । क्वचिदाश्रमान्तरे पे । ग्रामशब्देन लौकिककर्म लक्ष्यते ।... न॰ ॥ २१९ ॥

---

अत्रेदं प्रायश्चित्तं चरेत् । ब्रह्मचारिणं शयानं, निद्रावगतमभ्युदियात्स्वेनोदयेन अभिव्याप्तदोषं कुर्यात् । प्रातरतिक्रमे दिने जपोपवासौ रात्रौ तु भोजनं पश्चिमातिक्रमे तु रात्रौ जपोपवासौ प्रातर्भोजनमिति दिनशब्दः प्रदर्शनार्थः कामकारतः ज्ञात्वैव संध्याकाले यः स्वपिति । अज्ञानाच्चिरसुप्तस्य संध्याकालो ऽय वर्तत इत्यनवबोधः । अविज्ञानादेतदुक्तं भवति । इच्छयाप्रमादकृते चातिक्रम एतदेव प्रायश्चित्तम् ।...॥ मे॰ ॥

तं ब्रह्मचारिणमिच्छातः सुप्तं यदि सूर्य उदयेनाभिव्याप्तं कुर्यात् । तस्य वा शास्त्रार्थापरिज्ञानाच्छयानस्य यद्यस्तं यायात्तदा जपन्निदानीमिति

गौतमस्मरणात्। सावित्रीं जपन्दिनं नाश्नीयात्। अस्यापि प्रायश्चित्तस्य प्रकरणोत्कर्षो लाघवार्थः। तत्र हि क्रियमाणे ब्रह्मचारिग्रहणं कर्तव्यं स्यात्। अत्रार्थवादः ॥ गो० ॥

एवं नाभ्युदियादित्यपि शयानमित्यनुक्तसंबध्यतामुपलक्षयति। कामकारतोऽज्ञानेन कामनया वा। अविज्ञानादकामतश्चेत्यपि। तेन ज्ञानतोऽज्ञानतो वा एतदेव प्रायश्चित्तमित्यर्थः। जपन्नित्यत्रानादेशे तु सावित्रीति सावित्र्येव जप्या ॥ ना० ॥

कामकारतो अनातुरत्वाद् इच्छया शयानम्। जपन्सावित्रीमिति शेषः। उपवसेद्दिनमिति अभ्युदिते अहरभोजनं रात्रौ भुक्तिः। अस्तमिते तु रात्रौ जपः सूर्योदयपर्यन्तः सूर्ये ऽभ्युदिते ब्रह्मचारी तदहरभुञ्जानोऽस्तमितश्च रात्रिं जपन्सावित्रीमिति गौतमवचनादुपोषणमिति सज्योतिः ॥ रा० ॥

...अवश्यकर्तव्यतामस्य प्रायश्चित्तस्याह ॥ न० ॥ २२० ॥

---

पूर्वप्रायश्चित्तविधेरयमर्थवादः निम्लोचनेनाभिदुष्टः अभिनिर्मुक्तः। एवमभ्युदितः। प्रायश्चित्तं पूर्वोक्तं न करोति। तदा महता पापेन संबध्यते न स्वल्पेन। नरकादिदुःखोपभोगनिमित्तमदृष्टपापमुच्यते ॥ मे० ॥

सूर्येणाभिनिम्लुक्तो निम्लोचनेनास्तं गमनेन शयानः सन्नभिव्याप्तो ऽनन्तरोक्तं प्रायश्चित्तमकुर्वाणो महता पापेन युक्तः स्यात्। यत एवमतः ॥ गो० ॥

अभ्युदितो दिनमभिनिर्मुक्तो रात्रिमिति विवेकः। अभ्युदितोऽहरभुञ्जानो अभ्यस्तमितश्च रात्रिं जपन् सावित्रीमिति स्मृतेः। महतैनसा व्रतवैगुण्यकारिणा ॥ ना० ॥

हि यतः। ॥ रा० ॥

अथोक्तमपि संध्याकृत्यमादर्शयन् प्रसङ्गादाह ॥ न० ॥ २२१ ॥

---

एष एव महान्दोषोऽभ्युदयाभिनिम्लोचनयोस्तस्मादाचम्य प्रयतस्तत्परः समाहितः...शुचौ देशे जपञ्जप्यं प्रणवव्याहृतिसावित्र्याख्यमुपासीत उभे संध्ये।...॥ मे० ॥

प्रयतः शुचिः सन्समाहितः संयतेन्द्रिय उपस्पृश्य शुचौ देशे जपं कुर्वन् संध्योपासनोक्तविधिना यावज्जीवमुभे संध्ये सेवेतेति संध्यालोपप्रायश्चित्त-प्रसङ्गेनायं संध्योपासनानुवादः। प्रयतत्वं समाहितत्वं शुचिदेशविध्यर्थम् ॥ गो० ॥

प्रयतः शुचिः संध्ये उपासीत सेवेत। प्रयतत्वं शुचिदेशविध्यर्थं विहितम्। संध्योपासनानुवादः ॥ ना० ॥

जप्यं गायत्र्याख्यम्। विधिवदुपासीत तद्देवतामित्यर्थः।...॥ न० ॥२२२॥

---

यदि स्त्री आचार्याणी अवरजः कनीयानाचार्यादुपलभ्य श्रेयो धर्मादि-त्रिवर्गं सामाचरेत्। तत्सर्वमाचरेत्।...॥ मे० ॥

स्त्रीशूद्रावपि यच्छ्रेयो वक्ष्यमाणं शास्त्राविरुद्धमनुतिष्ठतः। तदपि तयोः सकाशाद्दृष्ट्वा युक्तो यत्नवाननुतिष्ठेत्। तथा यत्र च शास्त्रीयपदार्थे जपादौ मनो ऽस्य परितुष्येत्तत्समाचरेत् ॥ गो० ॥

अवरजः शूद्रः श्रेयःसाधनं श्रुतिस्मृत्यविरुद्धं यदाचरेत्। तत्स्वयं प्रयत्न-वानाचरेत्। तथा धर्मसाधनत्वेन पौरुषेयवाक्यादवगते यात्राविरुद्धेऽस्य कर्तुं मनोरतिः। अत्र प्रसङ्गेन पुरुषार्थं निरूपयति। धर्मार्थाविति ॥ ना० ॥

अवरजः शूद्रः। शास्त्राविरुद्धे कर्मणि ॥ रा० ॥

सर्वमाचरितुमशक्तौ यत्र मनोरतिरस्ति तदाचरेत्। कः पुनरत्र श्रेयः-शब्देन विवक्षितोऽर्थ इत्याह ॥ न० ॥२२३॥

---

...इदं श्रेय एतदर्थं यत्नः कर्तव्यः। तत्र मतान्तराणि तावदुपन्यस्यति। केषाचिन्मतं धर्मार्थौ श्रेयः धर्मः शास्त्रविहितौ विधिनिषेधौ। अर्थो गोभू-हिरण्यादि। एतदेव श्रेयः। एतदधीनत्वात्पुरुषप्रीतेः। अपरं मतं कामार्था-

विति। कामस्तावन्मुख्य एव पुरुषार्थः प्रीतिरूपत्वात्। पुरुषप्रीतिर्हि श्रेयः। अर्थो ऽपि तत्साधनत्वात्। एव हि चार्वाका आहुः। काम एवैकः पुरुषार्थस्तस्य साधनमर्थः। धर्मो ऽपि यद्यस्ति धर्म एव सर्वेभ्यः श्रेयान्। सर्वस्य तन्मूलत्वाच्च। उक्तं च धर्मादर्थश्च कामश्चेति। अर्थत एवेति वणिजः प्रयोगजीविनः। सिद्धान्तस्तु त्रिवर्ग इति तु स्थितिः। अतो धर्माविरोधिनावर्थकामावपि सेवितव्यौ न तद्विरोधिनौ। ॥ मे० ॥

धर्मार्थौ श्रेय इति कैश्चिदुच्यते। परलोकेहलोकयोर्यथाक्रमं तयोः कर्मनिमित्तत्वात्। कामार्थावित्यपरैः कथ्यते। प्रत्यक्षत्वयोरेव पुरुषार्थसाधकत्वोपलम्भात्। धर्म एवेत्यन्यैर्भण्यते। अर्थकामयोस्तन्मूलत्वश्रवणात्। अर्थ एवेहलोके श्रेय इत्यन्यैरभिधीयते। तत एव धर्मकामसिद्धेः। एवं मतान्तराण्युक्त्वा स्थितपक्षमाह। त्रिवर्ग इति तु स्थितिरिति धर्मार्थकामरूपस्त्र्यात्मको वर्गः। श्रेय इत्युच्यते। इत्येष एव निश्चयः। परस्पराविरोधेन त्रयाणामपि पुरुषार्थसाधकत्वात्। नोपदिश्यते श्रेयः पदार्थनिरूपणपरत्वात् ॥ गो० ॥

धर्मार्थयोरेव प्रयत्नसंभवात्। धर्मस्याप्यर्थद्वारा कामहेतुत्वेनोपादेयत्वम्। तेन कामस्ततः साक्षान्न हेतुरर्थश्च हेतुरित्यन्ये। धर्मस्य सर्वमूलत्वाद्धर्म एवेत्यन्ये। इहलोके ऽर्थ एव कामहेतुतया श्रेयानित्यन्ये। स्वमतमाह। त्रिवर्ग इति। अन्योन्यवादिकथितयुक्तिभिस्त्रयाणां पुरुषार्थानां वर्गः समूहः। श्रेयः मोक्षार्थिनो विरलप्रचारत्वेन मोक्षो न गणितः ॥ ना० ॥

तत्र किं श्रेय इत्यपेक्षां मतभेदेन पूरयति धर्मेति।...॥ रा० ॥

कैश्चिद्धर्मार्थौ श्रेय उच्यते। कैश्चित्कामार्थौ। कैश्चिदर्थ एव। परस्पराविरुद्धस्त्रिवर्गः स्थितिरिति। ॥न० ॥ २२४ ॥

---

अन्यो ऽपि न कश्चिदवमन्तव्यः। एते पुनर्विशेषतः। प्रायश्चित्ताधिक्यमत्रेत्यर्थः। आर्तेन ते पीडितेनापि। अवमानमवज्ञा। प्राप्तायाः पूजाया अकरणं न्यक्कारश्चानादराख्यः। ब्राह्मणग्रहणं पूरणार्थम्॥ मे० ॥

आचार्यपितृमातृज्येष्ठभ्रातरः पीडितेनापि छेदनादिना नावमाननीयाः विशेषतो ब्राह्मणेन नान्येषां तन्मूलत्वाद्धर्मानुष्ठानं स्यादिति प्रसङ्गः स्यात्। यस्मादिति ॥ गो० ॥

आर्तेन तैः पीडितेन ॥ ना० ॥

आचार्यादीनामनवज्ञा।...॥रा० ॥

अत्र हेतुमाह ॥ २२५ ॥

---

पूर्वस्यायमर्थवादः। यत्परं ब्रह्म वेदान्तोपनिषत्प्रसिद्धं तस्याचार्यो मूर्तिः शरीरं मूर्तिरिव। मूर्तिः प्रजापतेर्हिरण्यगर्भस्य पिता। येयं पृथिवी सैव माता भारसहत्वसाम्यात्। भ्राता स्वः सोदर्यः आत्मनः क्षेत्रज्ञस्येति प्रशंसा। एते सर्वे देवरूपा महत्त्वयुक्ता अवमता घ्नन्ति। आराधिता अभिप्रेतैः कामैर्योजयन्ति। एते समा आचार्यादय इति स्तुतिः ॥ मे० ॥

ब्रह्मोपदेशोत्पादनसाधारणैकोदरनिवासालम्बनमेव देतेषां ब्रह्मादिशरीरत्वाभिधानं पूर्वातिविध्यर्थवादार्थम्। ब्रह्मप्रजापती परमात्महिरण्यगर्भौ। स्वः सोदर्यः ॥ गो० ॥

ब्रह्मणो हिरण्यगर्भस्य मूर्तिर्देहान्तरं वेदोपदेशकत्वसाम्यात्। प्रजापतेर्मनोः सृष्टिकर्तृत्वसाम्यात्। पृथिव्या मूर्तिराधारत्वसाम्यात्। भ्राता स्वः सोदरः। आत्मनो मूर्तिरेकस्थत्वात्॥ ना० ॥

ब्रह्मणः परमात्मनः।...आत्मनः क्षेत्रज्ञस्य। स्वः समानगर्भजः ॥ रा० ॥

ब्रह्मणो वेदस्य मूर्तिः। आधाराधेययोर्विनाभावसामान्यात्। प्रजापतेर्मूर्तिः पिता उत्पादकत्वसामान्यात्। पृथिव्या मूर्तिर्माता धरित्रीत्वसामान्यात्। आत्मनः स्वा मूर्तिर्भ्राता आत्मनः साधारणा मूर्तिः। एकक्षेत्रत्वबीजत्वसामान्यात् ।मातापित्रोर्विशेषमाह ॥ न० ॥ २२६ ॥

---

भूतार्थानुवादेनेयमपरा प्रशंसा। क्लेशं दुःखं माता च पिता च नृणामपत्यानां संभवे गर्भात्प्रभृति यावद्दशवर्षान्मातुः क्लेशः गर्भधारणं प्रसवः

प्राणहरः स्त्रीणां जातस्य च संवर्धनयोगः क्लेशः स सर्वस्य स्वयं वेद्यः। पितुरप्युपनयात्प्रभृति आ वेदार्थख्यापनात्।...न तस्य क्लेशस्य निष्कृतिरान्टण्यं प्रत्युपकारत्वं शक्यं कर्तुं वर्षशतैर्जन्मभिर्बहुभिः किं पुनरेकजन्मना।...॥ मे० ॥

संभवे गर्भग्रहणे सति तदनन्तरमेवानवरतं यद्दुःखमपत्यानां संबन्धि मातापितरावनुभवतः। तस्यानेकवर्षशतप्रत्युपकारकरणेनाप्यान्टण्यं प्राप्तुं न शक्यते किमुतैकजन्मनेति तस्मात्॥ गो० ॥

संभवेन जन्मनि सति तत्पोषणादिना। निष्कृतिः कृतप्रतिकृतिः॥ ना० ॥

पितुरपि गर्भाधानसंस्कारकृतिपोषणाद्यैः क्लेशो ऽस्तीति।...॥रा० ॥

संभवे वृद्धौ नृणां पुत्राणां निष्कृतिः प्रत्युपकारः। यत एवं तस्मात्॥ ज० ॥ २२७ ॥

---

तयोर्मातापित्रोराचार्यस्य च सर्वदा यावज्जीवं यत्प्रियं तेषां तत्कुर्यात्। न सकृद्द्विस्त्रिर्वा कृत्वा कृतीभवेत्। तेष्वेवाचार्यादिषु त्रिषु तुष्टेषु भक्त्याराधितेषु तपः सर्वं बह्वन्वर्षगणाच्चान्द्रायणादि तपस्तप्त्वा यत्फलं प्राप्यते तत्तत्परितोषादेव प्राप्यते।...॥मे० ॥

मातृपित्राचार्याणां यावज्जीवं प्रियं कुर्यात्। न च तपोऽन्तराशक्त्या तत्प्रियापेक्षा कार्या। तस्मात्तेष्वेव च तुष्टेषु सर्वं तपः फलं सम्यक् प्राप्यते। यत एवमतः॥ गो० ॥

आचार्यस्य चाध्यापनोपकारनिष्कृत्यर्थम्। चकाराद्भ्रातुरपि ज्येष्ठस्यात्मतुल्यत्वात्।...॥ ना० ॥

...तपः सर्वमिति क्लेशापायो वा शुश्रूषोरिति शेषः। तस्य सर्वतपःसाध्यत्वात्॥ रा० ॥

नित्यं यावज्जीवम्। सर्वदा आपद्यपि। हि हेतौ। सर्वं सर्वाश्रमसाध्यम्॥ २२८ ॥

---

एतदेव सर्वोत्तमं तपो यत्तेषां पादसेवनम्। न तैरनभ्यनुज्ञातो धर्ममन्यं तत्सेवाविरोधनं तीर्थगमनादिरूपं.. समाचरेत्। ॥ मे० ॥

एतेषां मात्रादीनां त्रयाणां परिचर्या तपोऽन्तरेभ्यः प्रकृष्टं तपो मन्वादिभिः कथ्यते। एवं च तैरननुज्ञातो नित्यनैमित्तिकवर्जमन्यं धर्मं नाचरेद्यस्मात्॥ गो० ॥

· तेषां त्रयाणामिति यतस्तच्छुश्रूषया परमं तपोऽतस्तेषां शुश्रूषाया असंभव एव तैरनुज्ञातो ऽन्यं धर्मं कुर्यात्॥ ना० ॥

अननुज्ञातः प्रतिषिद्धः अप्रतिषिद्धं कृत्वा निवेदयेदिति वक्ष्यति ॥ रा० ॥

स्पष्टं ॥ न० ॥ २२९ ॥

---

कार्यकारणयोरभेदादेवमुच्यते। त्रयाणां लोकानां प्राप्तिहेतुत्वात्त एव त्रयो लोका उच्यन्ते। एवं त्रय आश्रमा ब्रह्मचर्यादन्यत्र य आश्रमाः। गार्हस्थ्यादिभिराश्रमैर्यत्फलं प्राप्यते तत्त्रिभिस्तुष्टैः। त एव त्रयो वेदाः वेदत्रयजपतुल्यत्वात्। त एव त्रयोऽग्नयः अग्निसाध्यकर्मानुष्ठानफलावाप्तेस्तच्छुश्रूषातः। एषापि प्रशंसैव ॥ मे० ॥

पृथिव्यन्तरीक्षब्रह्मलोकावाप्तिहेतुत्वात् तच्छुश्रूषायास्त एव त्रयो लोका इत्युच्यन्ते। एवं च ब्रह्मचर्यव्यतिरिक्ताश्रमत्रयतुल्यफलत्वात्तत्सेवायास्त एव त्रय आश्रमाः। वेदत्रयजपतुल्यफलत्वात्। तत्परिचर्यायास्त एव त्रयो वेदाः। अग्निसंपाद्यकर्मतुल्यफलत्वात्तदाराधनायास्त एव त्रयो ऽग्नयः। इति मन्वादिभिरुक्ता इति पूर्वविध्यर्थवादः॥ गो० ॥

त्रयो लोकाः पृथिव्यन्तरिक्षब्रह्मलोकाः। आश्रमा ब्रह्मचर्यगार्हस्थ्यवानप्रस्थाख्याः। तत्पालनतुल्यफलत्वाच्छुश्रूषाया एवं वेदत्वाग्नित्वोपचारस्तदध्ययनतदाधानलभ्यकर्मफलस्यैतच्छुश्रूषया सिद्धेः। अत्र त्रयो ऽग्नय इत्येतत्प्रपञ्चयति ॥ ना० ॥

...एवं पिता ऋग्वेदः। माता यजुर्वेदः। आचार्यः सामवेदः।...॥ रा०॥

...ब्रह्मचर्याश्रमो माता। तत्र हि द्वितीयं जन्म। गार्हस्थ्याश्रमः पिता भोगप्रदत्त्वसामान्यात्। संन्यासाश्रम आचार्यः ब्रह्मलोकप्रापकत्वसामान्यात् ...॥ न० ॥ २३० ॥

---

केनचित्सामान्येन अयं पित्रादीनां गार्हपत्यादिव्यपदेशः। साग्नित्रेता आधानाग्नित्रेता या गरीयसी महाफला त्रयाणा त्राणार्थमिता प्राप्ता त्रेता इति शब्दव्युत्पत्तिः ॥ मे० ॥

गार्हपत्यो हविषां संभवो ऽस्य च पितुः सकाशात्। दक्षिणाग्नेश्च गुणत्वं मातुश्च पितृपरतन्त्रत्वम्। आहवनीयस्य यागनिवर्तकत्वम्। प्राधान्यमाचार्यस्याप्यखिलपुरुषार्थकारित्वात्प्राधान्यमित्येव किंचित्सामान्यमाश्रित्यायमेषामग्निव्यपदेशः। अग्निभ्यश्चैषामुपकरोति। साग्नित्रेता त्राणार्थमिव गुरुतरेति अयमप्यर्थवादः ॥ गो० ॥

गार्हपत्यः प्राथमिकत्वात्। दक्षिणाग्निः पित्राचार्यापेक्षयाल्पोपयोगात्। आहवनीयो बहूपयोगत्वात्। सैषाग्नित्रेता अन्यस्यास्त्रेताया गरीयसी मान्यतमा ॥ ना० ॥

ऋग्वेदगार्हपत्याग्न्योर्दृष्टिः पितरि विधीयते। मातरि यजुर्वेददक्षिणाग्न्योराचार्ये सामवेदाहवनीययोः ॥ रा० ॥

गार्हपत्योऽग्निः पिता। अस्मिँल्लोके भोगप्रदत्त्वसामान्यात्। तथा हि श्रुतिः। आयुष्मा आहवनीय इति ॥ न० ॥ २३१ ॥

---

एतेषु अप्रमाद्यन् आराधने अस्खलन् यथाराधनात्त्रींल्लोकाञ्जयेत् स्वीकुर्यात्। आधिपत्यमाप्नुयाद् गृही। गृहस्थावस्थस्य हि पुत्रस्य पित्रादीनां तत्कृतमाराधनमुपयुज्यते। तदा हि तौ वृद्धौ भवतः। दीप्यमानः शोभमानः प्रकाशमानो वा स्वेन वपुषा स्वेनैव तेजसा देववदादित्यवद् दिवि देवलोके मोदते हृष्ट आस्ते ॥ मे० ॥

एतेषु त्रिषु शुश्रूषायामस्खलंस्त्रींल्लोकान्वक्ष्यमाणाञ्जयते गृही । आधिपत्येन स्वीकुर्यात् । ततः स्वदेहेन कान्तियुक्तेन ज्वलन्नादित्यादिदेववत्सुखं द्युलोके भवति । गृहस्थस्याप्ययं धर्म इति दर्शयितुं गृहीत्युक्तम् ॥ गो० ॥

अप्रमाद्यन्नप्रमत्तः शुश्रूषमाणः । गृही गृहस्थः । अपीत्यध्याहार्यम ॥ ना० ॥

अप्रमाद्यन्निति च्छेदः । दीप्यमान अपरान्द्योतयन् । त्रींल्लोकान्विजयेदित्युक्तं केन कं जयतीत्यपेक्षायामाह ॥ रा० ॥

न केवलं ब्रह्मचारिणामयं धर्मः किं चोत्तरेषामपीति प्रदर्शितो गृहीति ॥ न० ॥ २३२ ॥

---

अयं लोकः पृथिवी । भारसहत्वात्तुल्या माता पृथिव्याः । पितृभक्त्या मध्यमो लोकोऽन्तरिक्षं प्रजापतिः पितोक्तः । मध्यमस्थानस्य प्रजापतेर्निरुक्तायां स हि वर्षकर्मणां प्रजानां पाता पालयित वा । ब्रह्मकमादित्यलोकम् ।...॥ मे० ॥

मातृपिताचार्यशुश्रूषाभिः पृथिव्यन्तरिक्षब्रह्मलोकान्प्राप्नोति ॥ गो० ॥

मध्यमं भूलोकादूर्ध्वं ब्रह्मलोकादय ः॥ ना० ॥

इमं भूलोकं मध्यमं भुवर्लोकम् ।...॥ रा० ॥ २३३ ॥

---

आदृताः सत्कृताः ।...अथवादृतः परितुष्ट उच्यते ।...सर्वाणि तस्य कर्माण्यास्य फलदायीनि भवन्ति । यस्यैते त्रय आदृताः शुश्रूषया परितुष्टाः । एतैस्तु अनाराधितैर्यत्फलकामेन किंचित्क्रियते शुभं कर्म तत्सर्वं निष्फलं सर्वाः क्रियाः सर्वाणि श्रौतस्मार्तानि कर्माणि । अर्थवादोऽयम् ।...॥ मे० ॥

सर्वे यागादयो धर्मास्तस्य फलदानोन्मुखा भवन्ति । येन मातृपित्राचार्या आराधिताः । येन पुनरेते न परितोषिताः । तस्य सर्वा यागादिक्रिया निष्फला इति शुश्रूषा विध्यर्थवादः ॥ गो० ॥

सर्वे धर्मा यागाद्याः। आहृता आदरेण कृताः। अफला अल्पफलाः॥ ना०॥

अफलाः क्रियाः तदाचरितं पुण्यमात्रं निष्फलमित्यर्थः॥ रा०॥

इयं स्मृतम्॥ न०॥ २३४॥

---

उक्तार्थोऽयं श्लोकः। नान्यत्समाचरेत्। दृष्टमदृष्टं वा तदनुज्ञामन्तरेणेत्युक्तम्। तेष्वेव नित्यं शुश्रूषां कुर्यात्। प्रियहिते रतः प्रियं च हितं च यत्प्रियकरं तत्प्रियं यदायकरं तद्धितम्॥ मे०॥

मातृपित्राचार्येषु जीवत्सु अन्यं धर्मं नाचरेत्। किं तर्हि तेष्वेव सर्वदा वर्तमानभविष्यदुपकारतः कुर्यादिति प्रकृतविध्यर्थवादः। तेषां त्रयाणामित्येतत्सिद्धस्यैवास्य पुनरभिधानं प्रकृतविधिदार्ढ्यार्थम्॥ गो०॥

नान्यच्छुश्रूषाविरोध्याचरेत्। हितमपि प्रियमप्युदर्कशुद्धम्॥ ना०॥

प्रियहिते इह प्रीतिसाधनं प्रियम्। आयत्यामिष्टसाधनं हितमिति॥ रा०॥

नित्यं यावज्जीवम्॥ न०॥ २३५॥

---

परत्र जन्मान्तरे यस्य फलं भुज्यते तत्पारत्र्यं छान्दसं रूपमेतत्। शुश्रूषाया अविरोधेनान्यं यद्यद्धर्मं समाचरेत् तत्तन्निवेदयेत्। तेभ्यस्ताञ्ज्ञापयेत्।...अथ चैवं संबन्धः कर्तव्यो मनोवचनकर्मभिः पारत्र्यं यद्यदाचरेत्। तत्तन्निवेदयेत्तेभ्य इति॥ मे०॥

तच्छुश्रूषाविरोधेन परलोकार्थं यागार्थं यद्यदाचरेत। तत्तदेषां तत्फलं स्यादित्येवं मनोवाक्कायव्यापारेण तेभ्यो दद्यात्॥ गो०॥

तेषामनुपरोधेन दुःखाजननेन। पारत्र्यं परलोकार्थम्। निवेदयेत्तेभ्य एतत्फलम्। तेषामन्विति। मनसा वचनेन च कर्मणा हस्तोदकादिनानेन निवेदयेत्। यद्वा मनोवचनकर्मभिर्यद्यदाचरेदित्यन्वयः। परसंबद्धस्य तथैव सिद्धः। न त्वत्र निवेदनं ज्ञापनमात्रम्। ॥ ना०॥

अनुपरोधेनापीडया पारत्र्यं परलोकफलकम् । मनोवचनकर्मभिरित्युभयत्राचरणे निवेदने च संबध्यते ॥ रा० ॥

पारत्र्यं परलोकहितम् ॥ न० ॥ २३६ ॥

---

इतिशब्दः समाप्तिवचनः कार्त्स्न्यं गमयति । यत्किंचन पुरुषस्य कर्तव्यं यावान्कश्चन पुरुषार्थः स एतेष्वाराधितेषु समाप्यते परिपूर्णमनुष्ठितो भवति । एष धर्मः परः श्रेष्ठः साक्षात्तेन अन्यस्त्वग्निहोत्रादिरुपधर्मः प्रतीहारस्थानीयो न साक्षाद्राजवदिति प्रशंसा ।...॥ मे० ॥

यस्मान्मात्रादिष्वाराधितेषु यावत्किंचिद्यागादि कर्तव्यं तत्सर्वं पुरुषस्य परिपूर्णं भवति । यस्मादेष साक्षात्प्रकृष्टो धर्मः । अग्निहोत्रादिर्गौण इति मन्वादिभिरुच्यते । इति प्रकृतिविध्यर्थवादः ॥ गो० ॥

कृत्यं कृत्यप्रकारः । साक्षादविलम्बितफलः । अन्यो यज्ञादिस्तेषु जीवत्सूपधर्मः ॥ ना० ॥

अन्यस्तद्भिन्नो यः स उपधर्मो अन्यधर्मो धर्मः पाषण्डधर्मो वा ॥ रा० ॥ २३७ ॥

---

श्रद्दधान आस्तिक्योपगृहीतान्तरात्मा अभियुक्तो यः शिष्यः । शुभां विद्या न्यायशास्त्रादितर्कविद्या । अथवा या शोभते केवलं भरतादिविद्या ।...अवरादपि हीनजातीयादपि आददीत शिक्षेत ।..या स्त्री संस्थानलावण्यातिशयवती । अथ धान्यबहुधनसुतादिशुभलक्षणा । सा दुःकुलाद्धीनक्रियादेरप्यानेया ।.. ॥मे० ॥

श्रद्धोपेतः प्रकृष्टां विद्यामुत्क्रमात्मज्ञानाद्युपदेशं क्षत्रियादेर्निकृष्टजातीयादपि गृह्णीयात् । शूद्रादपि प्रकृष्टं धर्मं शास्त्राविरुद्धं तेन कृतोऽपि ज्ञातं शिष्येत ।...उत्कृष्टा वैधव्यादिलक्षणोपेतां स्त्रियं कुम्भकारादिकुलादप्याददीत ॥ गो० ॥

शुभां वैदिकीम्। अवराद्धीनात् श्रद्दधानो बाल्यादिना। तत्राश्रद्धा न कार्येत्यर्थः। अन्त्यात् शूद्रादपि परं धर्ममाचारतो ऽधिगम्य गृह्णीयात्। अत्रानेकान्तदृष्टान्ताँल्लोकव्यवहारसिद्धानाह ॥ ना० ॥

शुभां दृष्टशक्तिं गारुडादिविद्याम्। धर्मं लौकिकं धर्मसिद्धौषधादि॥ रा०॥

एतदेव दृष्टान्तेनोपपादयति ॥ न० ॥ २३८ ॥

---

...विषे ऽपि यदमृतं तद्ग्राह्यमेव। यथा हंस उदकात्क्षीरं गृह्णाति रसायनेषु केषुचिद्विषमित्येतदभिप्रेत्योक्तम्। बालो ऽपि यत्किंचिदकस्मात्सुभाषितं माङ्गलिकं प्रस्थानादौ वक्ति तद्ग्राह्यम्। अमित्रादेरपि सता यद्वृत्तं शिष्टाचारः।...अमेध्यादपि काञ्चनं सुवर्णमसदाश्रयात्प्राप्यते तथा गृह्यते। तद्वद् ब्राह्मणाध्ययनमिति ॥ मे० ॥

विषादपि...तत्साधनकरणेनामृतं ग्राह्यम्। ग्रामादिप्रस्थितेन च प्रशस्तवाक्यं बालोदीरितमप्यभीष्टार्थसिद्धेः सूचकत्वेन ग्राह्यम्। शत्रोरपि साध्वाचारो ग्राह्यः। अमेध्यपतितमपि अकृतसंस्कारमपि काञ्चनं ग्राह्यम् ॥ गो० ॥

सर्वममृतममरणहेतुरसायनसाधनं सत्त्वं सुभाषितं यात्रादौ शकुनत्वेन शौचं वृत्तम्।...॥ ना० ॥

विषाद्विषव्याप्तादमृतमात्मानं दृष्टान्तार्थो विधेयार्थो वा।..॥ रा० ॥

उक्तमेवार्थं पुनः प्रकारान्तरेण स्थिरीकरोति ॥ न० ॥ २३९ ॥

---

रत्नानि मणयः शबरपुलिन्दादिभ्यो ऽप्युपात्ताः शुद्धा भवन्ति। तद्वद्वेदो ऽपीति। शिल्पानि च विचित्रपत्त्रच्छेद्यानि। अदुष्टानि। अगर्हितानि।... सर्वतो जातिविशेषमनपेक्ष्य समादेयानि स्वीकर्तव्यानि।...॥ मे० ॥

अत्र स्त्रीरत्नशौचचित्रकर्मादि अदुष्टशिल्याभिधानार्थः यथैतानि सदाश्रयाण्युपादेयान्येवम् ॥ गो० ॥

अदुष्टानि शिल्पानि लिप्यादीनि तु शस्त्रनिर्माणादीनि। एष पूर्वेषामेव किंचिदधिको ऽन्योपसंहारः ॥ ना० ॥

क्षीरत्वं सर्वदा शुद्धमेव । कूटकार्षापणादिग्राहत्वार्थमाह । अदुष्टा-नीति ।...॥ रा० ॥

स्मृतः ॥ न० ॥ २४० ॥

---

आपद् ब्राह्मणाध्यापकाभावः । आपदः कालः आपत्कालः । आपदीत्येव सिद्धे कालग्रहणं वृत्तपूरणार्थम् । पाठान्तरमापत्कल्प इति कल्पनं कल्पः । आपद्येवा कल्पना विधीयते उपदिश्यते । यदाचार्य आरब्धाध्यापनः प्राय-श्चित्तेनान्येन वा निमित्तेन शिष्यं हित्वा देशान्तरं व्रजेत् । न च ब्राह्मणो ऽध्यापकस्तस्मिन्देशे लभ्यते बालत्वाच्च दूरदेशगमनमशक्यम् । तदाब्राह्मणा-त्क्षत्रियात्तदभावे वैश्यादध्ययनं प्रकृतत्वाद्वेदः । कृत्स्न इति वेदग्रहणं विधीयते ।...॥ मे० ॥

ब्राह्मणाध्यापकाभाव आपत्कल्पो विधानमापत्काल इति वा पाठान्तरम् । तस्मिन्ब्रह्मचारिणा अब्राह्मणादध्ययनमुपदिश्यते । अब्राह्मणशब्देन च ब्राह्मणसदृश उच्यते ।...॥ ना० ॥

अब्राह्मणात्क्षत्रियाद्वैश्याद्वा । आपत्कल्पे आपदः प्रसक्तौ । ब्राह्मणा-भावे तस्य च यावदध्ययनमनुगम एव शुश्रूषणाभिवादनादि ।...॥ ना० ॥

अब्राह्मणाद्वैश्यात्क्षत्रियाद्वा ।..॥ रा० ॥

क्षत्रियवैश्याभ्यामपि ॥ न० ॥ २४१ ॥

---

अब्राह्मणे गुरौ वासो ऽध्ययनाय पूर्वेणोक्तो नैष्ठिकस्यापि प्राप्तो विशेषेण निषिध्यते । आत्यन्तिकं वासं यावज्जीविकं न वसेत् न कुर्यात् ।...समाप्ता-ध्ययनो ऽन्यत्र गच्छेत् ।...ब्राह्मणे वाननूचाने वाशब्दो ऽप्यर्थः । ब्राह्मणो ऽपि यद्यननूचानो वृत्ताभिजनसंपन्नो न भवति न च व्याख्यानाध्यापनशीलो ऽनुवचनेन एते ऽपि गुणा लक्ष्यन्ते ।...अनुत्तमा यस्या अन्योत्तमा नास्ति तां काङ्क्षन्परमात्मानमानन्दरूपं मोक्षम् ॥ मे० ॥

नैष्ठिकः शिष्यो ऽब्राह्मणगुरुगृहे ऽध्यापनाचाराभिजनशून्यब्राह्मणगृहे

वा सर्वोत्कृष्टां गतिमिच्छन्यावज्जीविकं वासं न कुर्यात्। इदानीं नैष्ठिकब्रह्मचर्यं विध्यर्थमाह ॥ गो० ॥

नात्यन्तिकं नैष्ठिकाश्रमोक्तम्। ब्राह्मणो ऽपि साङ्गवेदपाठानध्येतरि न नैष्ठिकं वासं वसेत्।.. ॥ ना० ॥

आत्यन्तिकं यावज्जीवं न वसेत्किंतु यावदध्ययनं तावद्वसेत्।...॥ रा० ॥

आत्यन्तिकं वासं नैष्ठिकब्रह्मचर्यं वसेत्कुर्यात्॥ न० ॥ २४२ ॥

---

अत्यन्तभवमात्यन्तिकं वासं गुरोः कुले नैष्ठिकं ब्रह्मचर्यं यदि रोचयेत। तदा युक्तस्तत्परः परिचरेदेनमा शरीरस्य विमोक्षणात् यातायावच्छरीरं म्रियत इत्यर्थः ॥ मे० ॥

यदि पुनर्ब्रह्मचारी यावज्जीविकं वासं गुरुगृहे इच्छेत्। तदा यत्नवान्भूत्वा शरीरपातनाद्गुरुमाराधयेत्। इत्येष एव नैष्ठिक उच्यते।...अस्य फलमाह ॥ गो० ॥

यदि आत्यन्तिकं तत्र जन्मनि तत्र गृहवासात्यागेन युक्तः प्रयत्नवान् परिचरेत् शुश्रूषेत। एवं गुरुं ब्रह्मचार्याचार्यकुलवासी।...॥ ना० ॥

गुरोर्ब्राह्मणस्यानूचानस्य ॥ न० ॥ २४३ ॥

---

नैष्ठिकब्रह्मचर्यस्य फलविधिरयम्। शरीरसमाप्तिर्जीवितत्यागः। आ ततः कालाद्यो गुरुं शुश्रूषते परिचरति स गच्छति विप्रो ब्रह्मणः सद्म सदनं स्थानं शाश्वतं न पुनः संसारं प्रतिपद्यत इति यावत्। अञ्जसाक्लिष्टेन मार्गेण न गत्यन्तरेण तिर्यक्प्रेतमनुष्यादिजन्मतां व्यवधीयते।...॥ मे० ॥

यावच्छरीरं यो गुरुं परिचरति स ब्रह्मलोकमह्याप्रलयादनश्वरमञ्जसा स्पष्टेन मार्गेण गत्यन्तराव्यवहितेन गच्छति। विप्रग्रहणं प्रदर्शनार्थं त्रयाणां प्रकृतत्वात् ॥ गो० ॥

अञ्जसा शीघ्रम्। ब्रह्मणो हिरण्यगर्भस्य ॥ ना० ॥

स्पष्टः ॥ न० ॥ २४४ ॥

---

नैष्ठिकस्यायं गुरवे ऽर्थदानं प्रतिषिध्यते ।...उपकुर्वाणस्य तु उपनयना-त्प्रभृति यावत्स्नानमस्त्येव सति संभवे यथाशक्त्या दानं न पूर्वं स्नानमाहुः। गुरुवत्किंचिदुपकुर्वीत दद्यात् । ददात्यर्थे धातुः ।...॥ मे० ॥

स्नानपूर्वमगृहीतवेदशिष्यो धनमाहरन् यथा न अध्यापयामीत्येवं गुरुणा-दिष्टो न किंचिदपि गुरवे दद्यात् । भृतकाध्यापकत्वप्रसङ्गात् । अत एवाह धर्मविदिति ।. स्नानं पुनः कर्तुमिच्छन् समावर्तनकाले इममर्थमाहरेत्येवं गुरुणादिष्टो यथाशक्त्यवश्यं गुर्वर्थमाहरेत्तदानीं भृतकाध्यापितत्वासंभवात् ॥ गो० ॥

अध्ययनात्प्राग्गुरवे नोपकुर्वीताध्ययनाभिसंबन्धि न किंचिद्दद्यात् । एतन्नैष्ठिकोपकुर्वाणकयोस्तुल्यम् । अन्यथा भृतकाध्ययनप्राप्तिप्रसङ्गात् । अत्र प्रसङ्गादुपकुर्वाणस्य दक्षिणादानकाल उक्तः ॥ ना० ॥

नोपकुर्वीत धनेनेति शेषः ॥ रा० ॥

स्नास्यन्समावर्तयिष्यमाणः ॥ न० ॥ २४५ ॥

---

उक्तमुद्दिष्टं गुर्वर्थं कुर्यात् । तत्र न सर्वं कर्तव्यमित्येवमर्थो ऽयं श्लोकः । यदि गुरुर्विरुद्धमादिशेदमुष्यस्त्रियमाहरेति सर्वस्वं वा देहीति तन्न कर्त-व्यम् । किं तर्हि क्षेत्रं धान्यानां भवनभूमिः क्षेत्रमुच्यते । हिरण्यं सुवर्णम् । वाशब्दो विकल्पार्थः । न समुदितानि देयानि । अन्ततः अन्याभावे छत्त्रोपानहमपि द्वन्द्वनिर्देशात्प्राक्छित्यदानम् । वासांसीति सर्वत्र सख्यादि-र्विवक्षिता । प्रत्युत्पत्तिं प्रति क्षेत्राणां प्रीतिमाहरन्नित्येतदाहरेदिति पूर्व-संबन्धः । प्रीतिमाहरेदिति पाठे च अत्रैव क्रियासमाप्तिः प्रीतिमाहरेदिति वा प्रीतिमुत्पादयेत् । धान्याद्याहरेत् । स्वतन्त्रैव वा प्रीतिराहार्यतयोच्यते । ...॥ मे० ॥

अतश्च प्रीत्युपादानपरत्वात्प्रदर्शनार्थं भूम्यादिग्रहणम् । अन्ततो यद्युत्पन्नं किंचित्स्यात्तदा छत्त्रोपानहम् । नैष्ठिकधर्मविध्यर्थमाह ॥ गो० ॥

अन्ततः पूर्वालाभे । प्रीतिं प्रीतिहेतुम् । धान्यादावप्यन्यत इति यथा-योगमनुषञ्जनीयम् । प्रकृतं नैष्ठिकधर्ममाह ॥ ना० ॥

अन्ततः पूर्वेषामप्राप्तौ धान्याद्युत्तराहरणमित्यर्थः।...प्रीतिमिति प्रीत्यर्थमित्यर्थः।...॥ रा० ॥

स्पष्टम्। अथ नैष्ठिकं प्रत्याह ॥ न० ॥ २४६ ॥

---

नैष्ठिकस्यायमुपदेशः। असत्याचार्ये तत्पुत्रे श्रोत्रियत्वादिगुणयुक्ते। गुरुपत्न्यामाचार्याण्या वा। सपिण्डे वा गुरोरेव। वसेत्तत्र च गुरुवद्वृत्तिमाचरेत् भैक्षनिवेदनादि सर्वं कुर्यात्। दारशब्दो बहुवचनान्तः वैयाकरणैः स्मर्यते। स्मृतिकारास्त्वेकवचनान्तमपि प्रयुञ्जते।.. ॥ मे० ॥

आचार्ये प्रमीते गुरुवद्गुरुपुत्रदारसपिण्डाना पूर्वस्य पूर्वस्याभाव उत्तरस्योत्तरस्य शुश्रूषां कुर्यात् ॥ गो० ॥

गुरुपुत्रे गुणान्विते अनूचाने गुरुसपिण्डे वा तादृश एव गुरुदारे तु गुणान्विते प्रमीतपतिके धर्मचारिणि गुरुवद्वृत्तिमाचरेत्। तच्छुश्रूषया तद्गृहे वसेत् ॥ ना० ॥

सपिण्डे गुरुसपिण्डे ॥ न० ॥ २४७ ॥

---

अविद्यमानता सर्वेषामभावः। यदि वा गुणहीनता। एतेष्वसत्सु अग्निशुश्रूषां प्रयुञ्जीत। अग्निशरणोपलेपनमग्नीन्धनम्। आचार्यवत्संनिधानेन विहारासनम्। एषा अग्नेः शुश्रूषा। एतां कुर्वन्देहं साधयेत् शरीरं क्षपयेत्। यथान्धः चक्षुष्मानुच्यते। एवं साधयेदिति। स्थानासने एव विहारः। तद्वान्न कदाचिदासीत एवं विहरेत्।. ॥ मे० ॥

गुरुपुत्रादिष्वसत्सु कालनियमावलम्बनेनोत्थानोपवेशनाटनाटनवान् भक्त्याग्निकार्यमनुतिष्ठन्नात्मसंबन्धि शरीरं क्षपयेत् ॥ गो० ॥

स्थानमूर्ध्वं वस्थानं नियतम्। आसनमुपवेशनं नियमेन विहारो भ्रमणमित्येतैस्तपोविशेषग्रहणमभिप्रैति। साधयेत्तपःसिद्धिं कुर्यात् ॥ ना० ॥

स्थानासनविहारवानग्नेर्गुरोरिति शेष।...देह ब्रह्मलोकगमनपर्यन्तम्। नैष्ठिकस्य ब्रह्मसद्मप्राप्तिरित्युक्तमुपसंहरति। एवमिति ॥ रा० ॥

स्थानासनाभ्यां विहारः कालयापनं तदस्यास्तीति स्थानविहारवान्। अथोपकुर्वाणं प्रत्याह ॥ न० ॥ २४८ ॥

---

एवमिति नैष्ठिकवृत्तिं प्रत्यवमृशति। एवं यो ब्रह्मचर्यं चरति अविप्लुत अस्खलन्स प्राप्नोत्युत्तमं स्थानं धाम परमात्मप्राप्तिलक्षणं न चेह पुनर्जायते न संसारमापद्यते ब्रह्मरूपं संपद्यत इति ॥ मे० ॥

...उक्तरूपेण योऽस्खलन्नैष्ठिकं ब्रह्मचर्यं चरति स ब्रह्मलोकं गच्छति। न च संसारे जायते। महाप्रलये ब्रह्मणा सह युज्यते। विप्रग्रहणं प्रदर्शनार्थं त्रयाणां प्रकृतत्वात् ॥ गो० ॥

एवं नैष्ठिकधर्मेण। विप्रपदं विप्रस्यैव नैष्ठिकधर्मो नान्येषामित्येतदर्थम्। अविप्लुत अभग्नव्रतः। ब्रह्मलोकं प्रागुक्तं प्राप्योत्तमं स्थानं मोक्षास्पदं गच्छत्यत एव नेह संसारे पुनराजायत इति ॥ ना० ॥

अविप्लुतब्रह्मचर्य अविच्युतव्रतः।...॥ रा० ॥

अविप्लुत अस्कन्दनरेताः ॥ न० ॥ २४९ ॥

---

मान्या कापि मनुस्मृतिस्तदुचिता व्याख्या मेधातिथेः सा लुप्तैव विधिवशात्क्वचिदपि प्राप्यानयत्पुस्तकम्। क्षोणीन्द्रो मदनः सहारणसुतो देशान्तरादाहृतं जीर्णोद्धारमचीकरत्तत इतस्तत्पुस्तकैर्लेखितैः ॥ इति मनुभाष्ये मेधातिथीये द्वितीयोऽध्यायः समाप्तः ॥ मे० ॥

इति श्रीभट्टमाधवात्मजगोविन्दराजविरचितायां मनुटीकायां मन्वनुसरण्यां ब्रह्मचर्याश्रमविधानं नाम द्वितीयोऽध्यायः। इति। शिवमस्तु ॥ गो० ॥

सर्वज्ञश्रीनारायणकृतायां मन्वर्थविवृतौ द्वितीयोऽध्यायः ॥ ना० ॥

इति श्रीराघवानन्दविरचितायां मन्वर्थचन्द्रिकाया द्वितीयोऽध्यायः ॥ रा० ॥

इति श्रीवीरमल्लप्रियसखेन श्रीनन्दनाचार्येण विरचिते मनुव्याख्याने द्वितीयोऽध्यायः ॥ न० ॥

द्विविधो ब्रह्मचारी पूर्वत्र प्रतीतो नैष्ठिक उपकुर्वाणश्चेति।...त्रैवेदिकं व्रतं त्रयाणां वेदानां समाहारस्त्रिवेदस्तद्ग्रहणं प्रयोजनं त्रैवेदिकग्रहणम्।... एवं ब्रह्मचारिधर्मकलापः। चर्यं चरितव्यम्।...षट्त्रिंशत अब्दाः समाहृताः षट्त्रिंशदब्दं तत्रभवं षट्त्रिंशदब्दिकम्। तदर्धपरिमाणं तदर्धिकम् एवं पादिकं ग्रहणान्तिकमिति।...॥ मे० ॥

षट्त्रिंशद्वर्षसंभवं गुरुगृहे ऋग्यजुःसामाख्यं वेदत्रयविषयं प्रतिशाखं चीर्णीति यावता वा कालेनोक्तावधेरूर्ध्वं मध्ये वा वेदान्गृह्णीयात्तावत्कालं चरितव्यम्। नियमफलापेक्षो विकल्पः। नियमेनाधीतं वीर्यवत्तमं भवतीति श्रुतेः।...॥ गो० ॥

षट्त्रिंशवर्षनिर्वर्त्यवेदत्रयाध्ययनार्थं व्रतं ब्रह्मचर्याश्रमनियतधर्मरूपम्। चर्यं चरणीयम्। नियमेनाधीतं वीर्यवत्तरं भवतीति श्रुतेरेकदेशस्यापि व्रतेनाध्ययने प्राशस्त्यादशक्तस्य तदर्धिकमष्टादशाब्दिकं वा नवाब्दिकम्। ...॥ ना० ॥

...अर्धिकमष्टादशवर्षसाध्यं पादिकं नववर्षसाध्यम्।...॥ रा० ॥

.. व्रतं चर्यं चरितव्यम्। तदर्धमष्टादशाब्दाः। तदुक्तं तदर्धिकम्। एवं पादिकं ग्रहणान्तिकम्॥ न० ॥ १ ॥

---

त्रैवेदिकमध्ययनमुक्तम्। एकद्वित्रिवेदाध्ययनमप्राप्तं विकल्प्यते। वेदशब्दः शाखावचनो व्याख्यातः। तिस्रः शाखा अधीयीत द्वे एका वा।... अधीत्य गृहीत्वा वेदमुक्तया व्रतचर्यया गृहस्थाश्रममावसेत्। गृहस्थाश्रमस्य स्वरूपं वक्ष्यति। उद्वहेत द्विजो भार्यामित्यादि। आवसेदनुतिष्ठेत्।... ॥ मे० ॥

शाखात्रयं द्वयं वैकां वा स्वशाखां पूर्वक्रमेण मन्त्रब्राह्मणपूर्वापर्यस्थितिक्रमेण चाधीत्याखण्डितब्रह्मचर्यो असंजातस्त्रीप्रसङ्गो गार्हस्थ्यं प्रतिपद्येत ॥ गो० ॥

विद्यास्नानपक्षे शक्त्यपेक्षो विकल्पः। यथाक्रमं वेदत्रयद्वयाध्ययनपक्षे ऋग्वेदक्रमेणैव वेदाध्ययने तु यच्छाखीयसंस्कारैः संस्कृतस्तस्या एवादावध्ययनमित्यर्थः॥ ना०॥

...तत्र ऋग्वेदेन हौत्रं यजुर्वेदेनाध्वर्यवं सामवेदेनौद्गात्रम्।...॥ रा०॥

स्पष्टः॥ न०॥ २॥

---

तं ब्रह्मदायहरं सन्तं प्रथमं गवार्हयेत्। ब्रह्म च दायश्च ते उभे हरति स्वीकरोति इति ब्रह्मदायहरः। दीयत इति दायो धनं ब्रह्म वेदाधिगमः। गृहीतवेदः पित्रा कृतविभागो गार्हस्थ्यं प्रतिपद्यते निर्धनस्यानधिकारात्। यदि तु पिता निर्धनः। तदा सान्तानिकतया धनमर्जयित्वा विवाहयेत्। अन्ये तु ब्रह्मैव दायो ब्रह्मदाय इति पूर्वोक्तविध्यनुवादं मन्यन्ते पितुरिति ननु चाचार्यस्य माणवकाध्यापनेऽधिकार उक्तः किमिदमुच्यते पितुर्ब्रह्मदायहरमिति। उच्यते यस्य पिता विद्यते तस्य स एवाचार्य अभावे पितुरशक्तौ वान्यस्याधिकारः। आचार्योत्तरोपादानेन पितुरधिकारो निवर्तत एव।...॥ मे०॥

तं कृतब्रह्मचर्यं ब्रह्मचर्यावस्थानोदितधर्मानुष्ठानानुशयेन प्रतिख्यातम्। ...पितुः प्राथमकल्पिकत्वात्पितु सकाशात्तदभाव आचार्य अधीतवेदं कृतमाल्याद्यलंकारं ..शयनोपविष्टं पिता तदभाव आचार्यादिर्गृह्योक्तास्वरूपगोसाधनकमधुपर्काख्यकर्मणा गार्हस्थ्यप्रतिपत्तेः प्राक् पूजयेत्। दीयत इति दायः। ब्रह्मैव दायो ब्रह्मदायस्तं हरतीति ब्रह्मदायहरः॥ गो०॥

ब्रह्म वेदं प्रतीतं प्राप्तवन्तमधिगतवन्तमिति यावत्। दायहरं वित्तहरं पितुः पितृरिक्थग्रहणार्हमनैष्ठिकमिति यावत्। प्रथमं यस्य गृहेऽसावुपस्थितः सान्तानिकत्वेनार्थार्थितया स गवार्हे इति गोशब्दस्तत्सहचरितमधुपर्कपरः। स्रग्विणं तल्प आसीनमिति आच्छादनविशेषाभ्यामर्चाभिप्रेता।..॥ ना०॥

न ब्रह्मचारिणां प्रतीतं स्वधर्मानुष्ठानेन ख्यातम्। ब्रह्मदायहरं पितुः पितृतो गृहीतवेदम्। अथवा स्वधर्मेणैव ब्रह्म वेदं प्रतीतं प्राप्तं तं पितुर्दायहरं नैष्ठिकव्यावृत्त्यर्थं पितुर्दायहरमित्युक्तं पितृतो अध्ययनस्य अनावश्यकत्वात्। स्रग्विणां समलंकृतं तल्प शय्यायां गवा गोमता मधुपर्केण पिता आचार्यो वा अर्हयेत्पूजयेत्॥ रा०॥

पितुः सकाशाद्ब्रह्मदायहरं ब्रह्म वेदः। तदर्थं दाय दानं दक्षिणा ब्रह्मदायं तद्धरतीति ब्रह्मदायहरः पितुः सकाशात्। गुरुदक्षिणां कृत्वा दत्तवन्तमित्यर्थः प्रतीतं प्रतिगतं ब्रह्मचर्यान्निवृत्तमित्यर्थः। स्वक्शब्दः सर्वालंकाराणामुपलक्षणम्। गोशब्दादीनामर्हयेत्॥ न०॥ ३॥

---

सत्यामपि वेदव्रतसमाप्तौ गुरुणानुज्ञातः स्नायात्। स्नानशब्देन गृह्योक्तसंस्कारो लक्ष्यते।...तथा प्राग्व्याख्यातं तदहरेव गृह्यकारोक्तं मधुपर्कपूजाविहितं संस्कारं प्राप्य समावृत्तो गुरुकुलात्पितृगृहं प्रत्यागत इत्यनुवाद उद्वहेतेत्येतद्विधिशेषमेतत्सर्वं प्राप्तमेव। न तु समावर्तनं विवाहाङ्गम्।... विवाहशब्देन च पाणिग्रहणमुच्यते।...सवर्णां समानजातीयाम् लक्षणान्वितां लक्षणान्यवैधव्यप्रजाधनसूचकानि वर्णलेखातिलकचिह्नानि ज्योतिःशास्त्रावगम्यानि तैरन्वितां युक्ताम्।...॥ मे०॥

गुर्वनुज्ञातो गृह्यशास्त्रविध्यनतिक्रमेण कृतगृह्योक्तस्वल्पस्नानसमावर्तनाख्यकर्मा द्विजः समानजातीयां प्रशस्तलक्षणां भार्यामुपयच्छेत्॥ गो०॥

गुरुणेत्यादिना व्रतान्तकर्तव्यं संक्षिप्योक्तम्। स्नात्वा व्रतविद्यासमापननिमित्तं वैधर्म्यस्नानं गुरुकुल एव कृत्वा समावृत्तः गुरुगृहात्पितृगृहानागतः। यथाविधि स्वगृह्योक्तहोमादिकर्मपूर्वकं स्नात्वेत्यन्वयः। लक्षणमवैधव्यादिचिह्नम्॥ ना०॥

...लक्षणान्वितां वक्ष्यमाणगुणां दुर्लक्षणहीनां च॥ रा०॥

स्पष्टः॥ न०॥ ४॥

---

यादृशी कन्या वोढव्या तामिदानीं दर्शयति। मातुर्या असपिण्डा पितुश्च या असगोत्रा सा दारकर्मणि प्रशस्ता। सपिण्डग्रहणं मातृबन्धूपलक्षणार्थं मातुर्हि सापिण्ड्यं स्त्रीणां स्मृत्यन्तरे तृतीयपुरुषावधीष्यते। न तु त्रिभ्य ऊर्ध्वं मातृबन्धुभ्यो विवाह इष्यते। किं तर्हि पञ्चमादूर्ध्वम्। एवं हि गौतमः पठति। ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो मातृबन्धुभ्यः पञ्चमादिति। ...असगोत्रा च या पितुः। गोत्रं वसिष्ठभृगुगार्गादि च स्मर्यते। समानगोत्रा सगोत्रा वासिष्ठा न वासिष्ठैर्विवहति गार्गा गार्गैः। वासिष्ठे तु मातृसगोत्राया अपि प्रतिषेधः। परिणीय सगोत्रां तु समानप्रवरां तथा। कृत्वा तस्याः समुत्सर्गं द्विजश्चान्द्रायणं चरेत्॥ मातुलस्य सुतां चैव मातृगोत्रां तथैव च॥ गौतमे तु पठ्यते। असमानप्रवरैर्विवाह इति। तत्र गोत्रसमानत्वे सत्यपि प्रवरभेदश्चेदुच्यते विवाहो यतः स्मृत्यन्तरे ह्युभयं निषिध्यते। असमानार्षगोत्रजामिति। आर्षं प्रवर इत्येको ऽर्थः।... इहापि सगोत्रा चशब्दादसपिण्डा च तथानुवर्त्तमानः सपिण्डशब्दः पूर्ववदनुसंबन्धोपलक्षणार्थः। तेन पितृष्वसुरन्वयस्त्रीणामन्यासां च प्रपितामहसंततिस्त्रीणामा सप्तमात्पुरुषात्प्रतिषेधः सिद्धो भवति। सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते। अन्ये च गोत्र वंशमाहुः। न तत्रावध्यपेक्षा। यावदेतज्ज्ञायते। वयमेकवंश्या इति तावदविवाहः। अस्मिन्नपि पक्षे असपिण्डा चेत्यनुवर्त्यते। तेन पूर्ववत्पितृष्वस्रादिदुहितॄणां प्रतिषेधः। अस्मिंस्तु पक्षे समानादिगोत्राणां प्रतिषेधो दुर्लभः।...दारकरणं दारक्रिया दारकर्म तत्र प्रशस्ता प्रशंसया विहितेत्यर्थः। मैथुनीनां मैथुनममैथुनी पितुरिति संबध्यते।...अन्ये त्वमिथुनेति पठन्ति।...॥ मे०॥

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते। इत्यपि वक्ष्यत्यतो मातुरसपिण्डा मातामहप्रमातामहान्वयजाता या न भवति। या च मातामहीप्रमातामह्यन्वयजाता न भवति। पितुश्च या समानगोत्रा न भवति। चशब्दादसपिण्डा च पितृष्वस्रादिसंततिजाता या न भवति। सा द्विजातीनां मैथुनादौ दारकर्मणि दारकार्ये योग्या॥ गो०॥

समान एकः पिण्डो जनको येषां ते सपिण्डशब्देनाच ग्राह्याः। तथा च साक्षात्परंपरया वा यो मातृजनकः पिण्डो देहस्ततो येषां जन्म ते मातुः सपिण्डा इति। मातुः पञ्चमात्परतो ऽर्वाक् षष्ठादिष्वपि विवाहनिषेधप्रसक्तौ स्मृत्यन्तरान्नियमः। यथा याज्ञवल्क्यः। पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेति।...एवं च मातुः पूर्वे ये चत्वार उत्तरोत्तरक्रमेण सपिण्डास्तथा तत्संताने ऽप्यर्वाचीनाः प्रत्येकं चत्वारश्चत्वारस्तथा तथा मातृतो वर्गे ऽपि चत्वारस्तत्संतानभूताश्च प्रत्येकं चत्वारः सपिण्डास्तदन्तर्भूता कन्या न विवाह्येति सिध्यति। एवं पितृतः सप्तमादित्यत्रापि व्याख्येयम्। मनुना ह्यसंगोत्रा च पितुरिति चकाराद् असपिण्डा चेत्यनुक्तम्। तथा च तत्रापि अवध्यपेक्षायां याज्ञवल्क्यवचनादेव नियमः। तेन यथा मातृसपिण्डेषु पञ्चसंख्यावधिस्तथा पितृसपिण्डेषु सप्तसंख्येति।...मातृपक्षे तु यद्यपि असपिण्डा च मातुरिति चकारेण सगोत्रत्वाकर्षणात्पितृपक्ष इव सामान्यतो मातुः सगोत्रमात्रे विवाहनिषेधः प्राप्तस्तथापि स्मृत्यन्तरे। मातुः सगोत्रामप्येके नेच्छन्त्युद्वाहकर्मणि। जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कित इत्यभिधानात्। यावदस्मिन्मातृकुलजादेतन्नाम्नो ऽस्या जन्मेति ज्ञायते। तावन्मातृसगोत्राणामविवाह्यत्वं तदूर्ध्वं तु न दोष इति।...दारकर्मणि भार्यासाध्ययज्ञादिकर्मणि निमित्ते विवाहं कर्तुं प्रशस्ता अनिन्दिता। तथा मैथुने स्त्रीपुंससाधारणसाध्ये सुरतकर्मणि अपि सैव प्रशस्तानिन्दिता। यद्यप्येतदपि दारकर्मैव तथापि पृथग्ग्रहणं विधिलङ्घनेन परदारप्रवृत्तस्यापि मातृसपिण्डादिगमने अधिकप्रायश्चित्तार्थम्। द्विजातीनामिति तत्प्राधान्यादुक्तं शूद्रस्यापि तत्परित्यागेनैवोद्वाहः।...॥ ना० ॥

...चकारान्मातृसगोत्रा च।...तथा च व्यासः। सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहककर्मणि। जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कित इति वसिष्ठादिस्मृतिरपि। एतदनुरोधेन नेया। · मैथुने मिथुनसाध्ये अग्न्याधानादौ॥ रा०॥

सपिण्डा तु पुरुषे सप्तमे विनिवर्तत इति सपिण्डतां वक्ष्यति। अमैथुनी अक्षतयोनिः॥ न०॥ ५॥

वक्ष्यमाणस्य प्रतिषेधस्य निन्दार्थवादो ऽयम्। समृद्धिः संपत्तिर्धनं विभवः। महान्त्यपि प्रकृष्टान्यपि। धनविशेषणार्थमाह। गोऽजाविधनधान्यत.।... स्त्रीसंबन्धो विवाहः स्त्रीप्राप्त्यर्थं संबन्धः संबन्धता॥ मे०॥

इमानि दश वक्ष्यमाणानि कुलान्युत्कृष्टान्यपि वर्जयेत्। तथा गोच्छागावि-महिषीधान्यैः समृद्धान्यपि तच्छीलप्रजोत्पत्तिव्याधिसंक्रान्तिपरिहाराय शास्त्रनोदनासमर्थ्याददृष्टदोषपरिहारार्थं दारसंबन्धे वर्जयेत्॥ गो०॥

धनं सुवर्णादि। एतेन गुणान्तरवद्वित्तवत्तयापि विवाह्यतेति दर्शि-तम्॥ ना०॥

धान्यतः धान्यादिभिः। अविर्मेषः। स्त्रीसंबन्धे स्त्रीकर्मविवाहे॥ रा०॥

एतानि वक्ष्यमाणानि॥ न०॥ ६॥

---

हीनाशाः क्रिया यस्मिन्कुले जातकर्मादयः संस्काराः क्रियन्ते नित्याश्च पञ्चयज्ञादयः। निष्पुरुषं स्त्रीप्रसूतेः प्रायेण कन्या जायन्ते न पुमांसः। निश्छन्दो वेदाध्ययनवर्जितम्। रोमशार्शसं द्वन्द्वैकवद्भावेन कुलद्वयं निर्दिष्टं बहु दीर्घबाह्वादिषु लोमभिर्युतम्। अर्शांसि गुह्येन्द्रियगतान्यधिमांसनिब-द्धानि। तानि हि रोमरूपत्वात्पिण्डिकाकाराणि। क्षयो राजयक्ष्मा व्याधिः। आमयावी मन्दाग्निर्यस्य भुक्तमन्नं सम्यङ् न जीर्यते। अपस्मारः स्मृतिभ्रंशा-द्युपघातकृत्।...श्वित्रं शरीरगताच्छेदवती श्वेतता। कुष्ठं प्रसिद्धम्। सर्व एते व्याधिविशेषवचनाः शब्दाः...॥ मे०॥

यागादिरहितं कुलं स्त्रीजनकं वेदशून्यं प्रचुरतरदीर्घरोमाञ्चितमर्शआख्या-व्याध्युपेतं राजयक्ष्मिमन्दाग्न्यपस्मारिश्वित्रिकुष्ठिनां च संबन्धीनि कुलानि वर्जयेत्॥ गो०॥

निश्छन्दो निर्वेदम्। आमयो ऽग्निमान्द्यम्। कुष्ठं मांसादिक्लेदः।... ॥ ना०॥

हीनक्रियं पित्रादेर्जातकर्मादिराहित्यं यत्र। निष्पुरुष स्त्रीजननप्रधानम्।

निष्कन्दो वेदाध्ययनशून्यम्। रोमशं बहुदीर्घरोमयुक्तम्। अर्शसमर्शारोग-युक्तम्।...॥ रा० ॥

हीनक्रियं श्रौतस्मार्ताचारैर्हीनम्। निष्पुरुषं स्त्रीशेषं तद्वर्जयेत्। कुतः संतत्यभावानुसारभावात्। निष्कन्दो निरध्ययनम्। रोमशं रोमबहुलं तद्वर्जयेत्।...॥ न० ॥ ७ ॥

---

पूर्वः कुलाश्रयः प्रतिषेधः। अयं तु स्वरूपाश्रयः। यस्याः कद्रुवर्णाः कनकवर्णा वा केशाः सा कपिला। अधिकाङ्गीं षडङ्गुल्यादिकाम्। रोगिणीं बहुरोगाम्।...अविद्यमानलोमां बाहुमध्ये जङ्घद्वये वा सर्वलोम्नामभावः। वाचाला स्वल्प एव वक्तव्ये बहुलं परुषं च भाषते। पिङ्गला अक्षिरोगेण मण्डलाक्षी। पिङ्गाक्षी वा ॥ मे० ॥

कपिलां षडङ्गुल्यादिका व्याधिनाधिष्ठितामविद्यमानलोमां बहुलोमां बहुभाषिणीं पिङ्गलवर्णां कन्यां नोपयच्छेत् ॥ गो० ॥

न रोगिणीं स्वतः क्षयादिव्याधिमतीम्। पूर्वं हि कुले तेषां प्रायिकत्वेन कन्यानां संभावनामात्रेणाविवाह्यतोक्ता। अत्र तु तस्यां तन्निश्चयेनेति विशेषः। पिङ्गलां भामरक्तगौरवर्णाम् ॥ ना० ॥

कपिलां कपिलकेशां वर्णतो वा ॥ रा० ॥

कपिलां केशाक्षिभ्यां पिङ्गलां त्वचा ॥ न० ॥ ८ ॥

---

ऋक्षं नक्षत्रं तन्नामिका आर्द्रा ज्येष्ठा इत्यादि। वृक्षनाम्नीं शिंशपामल-कीति। नदी गङ्गायमुनेत्यादि। ऋक्षाणि वृक्षाश्च नद्यश्चेति द्वन्द्वः।... अन्त्यनामिका वर्वरीशवरीत्यादि। पर्वता विन्ध्यमलयादय।...पक्षिनाम्नी शुका सारिका। अहिः सर्पः तन्नाम्नी। व्याला भुजंगी। प्रेष्या दासी चेटी...। भीषणं नाम भयजनकं डाकिनी राक्षसी ॥ मे० ॥

नक्षत्रवृक्षनदीम्लेच्छपर्वतपक्षिसर्पदासभयानकनामिकां कन्यां नोद्वहेत् ॥ गो० ॥

अन्त्यश्चाण्डालादिस्तज्जातिनाम्नीं चाण्डालीत्यादिनाम्नीम् । पर्वतनामिकां विन्ध्यहिमेत्यादिनाम्नीम् । प्रेष्यनाम्नीं दासीत्यादिना ।...॥ ना० ॥

अन्त्यो म्लेच्छः । तेन यवनीं म्लेच्छाम् । पर्वतनामिकां शिलामयीम् । पक्षी गरुडः । अहिः भुजंगः । प्रेष्या अनुदासी । भीषणनामिका उग्रेत्यादि ॥ रा० ॥

ऋक्षनाम्नी कृत्तिकेति । वृक्षनाम्नी शिंशपेति । नदीनाम्नी गङ्गेति । अन्त्यनाम्नी मातङ्गीति । पर्वतनाम्नी विन्ध्येति । पक्षिनाम्नी शुकीति । अहि-नाम्नी नागीति । प्रेष्यनाम्नी दासीति । विभीषणनाम्नी दासीडिम्बेति । अदृष्टो ऽयं निषेधः ॥ न० ॥ ९ ॥

---

अव्यङ्गान्यङ्गानि यस्याः सैवमुच्यते । अव्यङ्गशब्दो अवैकल्यवचनः ।... सौम्यं मधुरं नाम स्त्रीणां सुखोद्यमत्र दर्शितम् । हंसवारणा इव गच्छति यादृशी । हंसानां हस्तिनां च विलासवती मन्थरा गतिर्यस्याः । तनुशब्दो नाल्पवचनः ।... तन्वङ्गी सोच्यते नातिस्थूला नातिकृशेति । मृदुसुस्पर्शा-कठिनापरुषाण्यङ्गानि यस्यास्तामुद्वहेत् ।...॥ मे० ॥

अविकलाङ्गीं प्रसन्ननाम्नीं राजहंसगजरुचिरगमनामनतिस्थूलरोमकेश-दन्तां कोमलाङ्गीं कन्यां परिणयेत् । विधिनिषेधो ऽभयाभिधाननिर्दोष-सगुणकन्योपयमनं ऽभ्युदयार्थम् ॥ गो० ॥

अव्यङ्गाङ्गी अङ्गेष्वपि यस्या न व्यङ्गत्वम् अङ्गाङ्गेष्वपि नखादिषु यस्या वैकल्यं नास्तीत्यर्थः । तथा विभीषणनामत्वाभावे ऽपि सौम्यं शान्तं नाम यस्याः सा विवाह्या । तथा विभीषणनामनिषेधः प्रत्यवायाधिक्यार्थः । तनवः सूक्ष्माः केशाः शिरोरुहः ।...॥ ना० ॥

न्यूनाधिककुब्जाद्यङ्गरहितां सौम्यनाम्नीं शशिनीचन्द्रिकेत्यादिनाम्नीं हंस-वारणवत् वारणो हस्ती तद्वत् गमनशीलाम् । अत्र विधिनिषेधौ अभ्युद-यानभ्युदयफलौ ॥ रा० ॥

अङ्गशब्दो ऽवयवे शरीरे च ॥ न० ॥ १० ॥

---

यस्या भ्राता नास्ति तां न विवहेत् पुत्रिकाधर्मशङ्कया पुत्रिकात्वशङ्कया पुत्रिकाधर्मः कदाचिदस्याः कृतो भवत्यनेत्यनया शङ्कया न संदेहेन । कथं चेयं शङ्का भवति । यदि न विज्ञायेत पिता देशान्तरे प्रोषितो मृतो वा सा च मात्रा पितृसपिण्डैर्वा दीयते भ्रातृकालापि पितर्यसंनिहिते एतेऽपि ज्ञातव्येति स्मर्यते।...अन्ये तु स्वतन्त्रमेतत्प्रतिषेधद्वयमाचक्षते । यद्यपि पिता न विज्ञायते अनेनेयं जातेति गूढोत्पन्नायाः प्रतिषेधः । एवं च संबन्धः यस्या भ्राता नास्ति तां पुत्रिकात्वशङ्कया नोपयच्छेत ।...॥ मे० ॥

यस्या भ्राता नास्ति यदपत्यं भवेदस्यास्तन्मम स्यात्स्वधाकरमित्यभिसंधिमात्रात्पुत्रिकेत्येवं ननु गौतमोक्तपुत्रिकाविधिभ्रान्त्या नोद्वहेत् । भ्रातृभावे हि पितरि विज्ञायमानेऽपि पुत्राभावात् कदाचिदसौ पित्रा पुत्रिका कृता स्यात् । सत्यामपि वा अभ्रातृकत्वप्रसिद्धावनेनैवमुत्पन्नेयं नेति यस्या जनको विशेषेण ज्ञायते तामपि पुत्रिकात्वभ्रान्त्या नोद्वहेत् । जनके हि सम्यगज्ञायमाने भिन्नपितृकयोरप्येकमातृकयोर्भ्रातृप्रसिद्धेरस्ति जनककृते पुत्रिकात्वशङ्का एतदुक्तं तयोर्विशेषणम् । पुत्रिकायाश्च न परिपूर्णं भार्यात्वमत एव निषेधात् ।...॥ गो० ॥

न भवेन्नोत्पद्येत । न विज्ञायेत कुलप्रवृत्तादिना प्रसिद्धिः । संतत्यन्तराभावेनापरिभाषितपुत्रिकाशङ्कया आद्याया न विवाहः । द्वितीयस्या अधर्मशङ्कया भ्रात्यकन्यादिपरिणयकृतपापशङ्कयेति क्रमादन्वयः ।..॥ ना० ॥

...पुत्रिकेति पुत्रिकात्वेन मनसा नियुक्ता वेति शङ्का अतीतपितृकत्वेन जारजाप्रजाद्यधर्माशङ्कयेति पुत्रिका च अधर्मश्च तयोः शङ्कया ॥ रा० ॥

अपुत्रेण पित्रा जनयिष्यमाणानां दुहितृपुत्राणां स्वसंतानसंकल्पः पुत्रिकाधर्मः। भ्रातुरभाव एव पुत्रिकाधर्मशङ्का भवति ।...ज्ञाते पितरि जानतापि पुत्रिकाधर्मशङ्का कथंचिन्निवर्तयितुं शक्यते न पुनरज्ञाते। तेनोक्तं न विज्ञायेत पितेति ।...॥ न० ॥ ११ ॥

...सवर्णा समानजातीया सा तावदग्रे प्रथमतोऽकृतविजातीयदारपरिग्रहस्य प्रशस्ता। कृते सवर्णाविवाहे यदि तस्यां कथंचित्प्रीतिर्न भवति अपत्यार्थो व्यापारो न निष्पद्यते। तथा कामहेतुकायां प्रवृत्ताविमा वक्ष्यमाणा असवर्णा वराः श्रेष्ठाः शास्त्रानुज्ञातव्याः।...॥ मे० ॥

द्विजातीनामादौ पाणिग्रहणे समानजातीया प्रोक्तेत्युक्तं कामात्पुनर्दारकर्मणि प्रवृत्तानामिमा वक्ष्यमाणा वर्णक्रमेण श्रेष्ठाः स्युः ॥ गो० ॥

अग्रे प्रथमं सवर्णैव दारकर्मणि प्रशस्ता। श्रेयोहेतुर्नासवर्णा तादृक्। श्रेयोऽर्थित्वाभावेन तु कामतः प्रवृत्तौ क्रमशो यथापूर्वमिमा वराः श्रेष्ठास्तदाह ॥ ना० ॥

दारकर्मणि दारसाध्ये अपत्योत्पत्तौ धर्मादौ च इमाः सा चेत्यादि ता वक्ष्यमाणास्तिस्र अवरा निकृष्टाः ॥ रा० ॥

क्रमशः अग्रे सवर्णा प्रशस्ता। तदन्वनन्तरा। तदन्वेकान्तरा। तदनु द्व्यन्तरेत्यर्थः। अवरा हीनवर्णा इमा वक्ष्यमाणाः ॥ न० ॥ १२ ॥

---

वर्णमते सति सवर्णानियमो यथैव ब्राह्मणस्य क्षत्रियादिस्त्रियो भवन्ति। एवं शूद्रस्य जातिन्यूना रजकतक्षकादिस्त्रियः प्राप्ताः। अतः सवर्णैरियमुच्यते। उत्कृष्टजातीयास्तु पूर्वेण क्रमग्रहणादप्राप्ताः।...॥ मे० ॥

शूद्रस्य शूद्रैव भार्या भवति। न तूत्कृष्टापकृष्टे। शूद्रा वैश्या च वैश्यस्य मन्वादिभिः स्मृते। वैश्या शूद्रा क्षत्रिया च क्षत्रियस्य क्षत्रिया वैश्या ब्राह्मणी च ब्राह्मणस्य। शूद्रामप्येके मन्त्रवर्जमिति वसिष्ठस्मरणात्। मन्त्रवर्जितैषा द्विजातीनां भवति ॥ गो० ॥

स्वा स्वजातीया। अत्र शूद्राविवाहेन केवलमसवर्णाविवाहदोषः किंतु दोषान्तरमपीत्याह ॥ ना० ॥

तास्र शूद्रावैश्याक्षत्रियाः स्वा च ब्राह्मणी अग्रजन्मनो ब्राह्मणस्य ॥ रा० ॥

एवकारेण केवलशूद्रभार्यात्वं शूद्रस्यैव नान्यस्येति सूचितम्। स्वशब्द-

ग्रहणेन सवर्णायामूढायामेवासवर्णा या वोढव्येति प्रत्येकं निर्देशेन नोत्तरा वोढव्येति ।...॥ न० ॥ १३ ॥

---

कस्मिंश्चिदपि वृत्तान्ते न क्वचिदितिहासव्याख्याने ऽपि उपदिश्यते वर्ण्यते । आपदि गरीयस्यामधिकायामापदि । पूर्वत्रानुज्ञाता अनेन प्रतिषिध्यते ।..॥ मे० ॥

ब्राह्मणक्षत्रिययोर्गार्हस्थ्यप्रतिपत्तये सवर्णामलभमानयोः कस्मिंश्चिदपीतिहासाख्याने शूद्राभार्या नोपवर्ण्यते । एवं च शूद्रानिषेधाद् ब्राह्मणक्षत्रिययोः सवर्णालाभे ऽस्ति क्षत्रियवैश्योद्वाह इति गम्यते ।...॥ गो० ॥

आपद्यपि दुर्भिक्षादौ । शूद्राविवाहेन धनलाभान्निस्तारसंभवे ऽपीत्याह ।...॥ ना० ॥

...वृत्तान्ते इतिहासादौ ॥ रा० ॥

आपत्सु सवर्णाया अन्तरीयाया अलाभे । वृत्तान्ते वृत्तमाचरितमन्तो निर्णयः धर्मशास्त्र इत्यर्थः । भार्या नोपदिश्यते भार्यात्वेन नोपदिश्यते । किंतु काम्यत्वेनेत्यर्थः । न केवलं ब्राह्मणक्षत्रिययोरेव निषेधः । किंतु वैश्यस्यापीति सूचितं तत्र निन्दार्थमाह ॥ न० ॥ १४ ॥

---

पूर्वस्य प्रतिषेधस्य शेषो ऽयं निन्दार्थवादः । हीनजातिः शूद्रैव तस्या एव प्रकृतत्वात् । ससंतानानि शूद्रतामिति च निगमनात् ते द्विजातयः शूद्रा भवन्त्येवं तत्पुत्रपौत्रा इत्यत उच्यते ससंतानानीति संतानमपत्योत्पत्तिप्रबन्धः पुत्रपौत्रादिः ॥ मे० ॥

शूद्रतामित्युपादानात् हीनजातिं शूद्रां शास्त्रार्थापरिज्ञानादुपयच्छमाना द्विजातयः कुलानि पुत्रपौत्रादिप्रबन्धांश्चिरंतनकालभाविसंतानानि शूद्रतां गमयन्ति । तथाविधानामेव तत्रोत्पादनात् । अत्र द्विजातय इति वचनाद्वैश्यस्याप्यकृतसवर्णाविवाहस्य शूद्रानिषेध इति गम्यते । ब्राह्मणक्षत्रिययोः पुनः प्रत्यवायातिशयपूर्वप्रतिषेधारम्भसामर्थ्यात् । मतान्तराण्याहुः ॥ गो० ॥

हीनजातिं शूद्राम्। कुलानि पित्रादिरूपाणि। ससंतानानि ब्राह्मणी-जातस्वपुत्रादीनि शूद्रतां नयन्तीति सर्वसाधारणो दोष उक्तः। अथ गोत्रविशेषानियतं दोषमाह ॥ ना० ॥

हीनजातिं शूद्रां तदुत्पन्नपुत्रपौत्रादिना शूद्रतां नयन्तीत्यन्वयः ॥ रा० ॥

हीनजातिं संस्कारहीनामुत्पत्त्या शूद्राम्...। कुलं संततिं शूद्रतां जात-कर्मादिसंस्कारहीनताम्...॥ न० ॥ १५॥

---

शूद्रां विन्दति परिणयति शूद्रावेदी स पतति पतित इव। अत्रिरुतथ्य-तनयः पुत्रः तयोरेतन्मतमित्युपस्कारः। अयं तावदत्र श्लोकः पूर्वप्रतीति-निषेधशेषः। शौनकस्य सुतोत्पत्त्या शास्त्रान्तरमिदम्।.. तदपत्यतया भृगोः। इदमपि स्मृत्यन्तरं तान्येव शूद्रोत्पन्नानि अपत्यानि यस्य तदपत्यः तदभावस्तदभावता भृगोरेतन्मतम्।...॥ मे० ॥

अत्रेरुतथ्यपुत्रस्य च गोतमस्यैतन्मतं यच्छूद्रोदोढा पतितो भवतीति निन्दया प्रतिषेधानुमानम्। न ह्यकस्मान्निन्दा प्रवर्तत इत्येवं च तन्मतेनायं शूद्राया अत्यन्तप्रतिषेधः। शौनकस्य पुनर्मतं यच्छूद्रासुतोत्पत्त्या पतती-त्यतस्त न्मते नैनां तामुपेयात्। भृगोः पुनर्मतं यत्केवलशूद्रापत्यतया पततीत्येवं च तत्पक्षे इतरासु जातापत्यः शूद्रामृतौ व्रजेत् ॥ गो० ॥

शूद्रावेदी शूद्रापरिणेता। अत्रेः अत्रिसंज्ञकस्य मुनेर्मते सतत्यनुत्पत्त्यापि पतति। द्विजातिधर्मेभ्यो हानिः पतनमिति गौतमोक्तपातित्ययोगी भवति। उतथ्यतनयो गौतमस्तद्गोत्रजस्येति सुतोत्पत्त्येत्यनेन व्यवहितेना-न्वितम्। शौनकस्येत्यपि तदपत्यतयेत्यनेनान्वितम्। तेन गौतमगोत्रस्य पुत्रोत्पत्त्या शौनकभृगवादीनां तु पुत्रोत्पत्त्या शूद्रतुल्यत्वहेतुर्द्विजातिधर्महानिरूपं पातित्यमित्यर्थः। अतश्च तत्तद्गोत्रकर्तृणां तेन प्रकारेण पूर्वं पातित्यभोत्पन्नत्वात्सैरेव नियमितम्। अत एव भविष्ये शूद्रामारोप्य शय्यां तु पतितो ऽत्रिर्बभूव ह। उतथ्यः पुत्रजननात्पतितत्वमवाप्तवान् ॥ पुत्रस्य पुत्रमासाद्य शौनकः शूद्रतां गतः। भृग्वादयो ऽप्येवमेव पतितत्वमवाप्नुयुः

अत्र च भृगवादय इत्यादि पदादत्रिगौतमव्यतिरिक्तानां सर्वेषां ग्रहणम्। केचित्त्वत्रिमतेरिति षष्ठ्यर्थं व्याचक्षते। एवमुत्तरेष्वपि। तत्तु व्याख्यानं व्यवस्थितार्थानभिधानेन शूद्रावेदनस्यादोषत्वमापादयन्निषेधविध्यनर्थकप्रसङ्गकतया हेयमेव। प्रसङ्गादविन्नायामपि शूद्रायां मैथुने दोषमाह॥ ना०॥

शूद्रां विन्दते परिणयत इति शूद्रावेदी। अत्रेरुतथ्यतनयस्य गौतमस्य च मते विवाहमात्रेण पतति शौनकस्य तु मते सुतोत्पत्त्या। अत एव दैवाज्जातशूद्राविवाहे ऋतौ नोपेयादिति वचनं संगतं तत एवर्तुतः भृगोर्मतमुदितानुदितहोमवद् विप्रराजन्यविशां यथाक्रमं संबन्ध इति केचित्। तन्न। उत्तरत्र विप्रविषय एव निन्दार्थवादः। तानाह॥ रा०॥

शूद्रां भार्यात्वे विन्दतीति शूद्रावेदी तेन पततीत्यत्रेरुतथ्यतनयस्य मतम्। उतथ्यतनयो गौतमः। शूद्राया सुतोत्पादनेनेन न पुनस्तस्या गमनेनेति शौनकस्य मतम्। शूद्रामूढवानपि तस्या सुतोत्पत्तिभयादृतौ तां नोपेयादित्यर्थः। तदपत्यतया भृगोरित्येतत्स्वमतं कुतः। भृगुमुखेन शास्त्रस्य प्रोच्यमानत्वात्। तदपत्यतया तस्यां शूद्रायामेवापत्यं यस्य तदपत्यः तदपत्यतया पततीति भृगोर्मम मतम्। शूद्रापत्यस्य केवलैरिति वक्ष्यति।.. ॥ न०॥ १६॥

अर्थवादोऽयम्। यदि पुत्रमुत्पादयति तस्यां ततो ब्राह्मण्यादेव हीयते। अपत्यस्याब्राह्मणत्वमिति।..॥ मे०॥

शूद्रां गत्वा ब्राह्मणो नरकं व्रजति। पूर्वशेषो ऽर्थवादः। सुतं शूद्रायामुत्पाद्य ब्राह्मण्यादेव भ्रश्यतीत्ययं सुतोत्पत्तिनिषेधार्थवादः। एवं चेद्धार्थवादो यो ब्राह्मणग्रहणादत्यन्तप्रतिषेधः सुतोत्पत्तिनिषेधे ब्राह्मणविषयादेव॥ गो०॥

आरोप्येति कारणेन कार्यं मैथुनमुक्तम्। अधोगतिं नरकं ब्राह्मण्याद्ब्राह्मणकर्मणः। यदुक्तं कस्मिंश्चिदपि वृत्तान्त इति दोषकथनेन स्पष्टयितुमाह॥ ना०॥

प्रयनमारोप्य केवलशूद्रोढेत्यर्थः। तस्यां केवलशूद्रायामेतदेव विशदयति ॥ न० ॥ १७ ॥

---

सार्वकालिको ऽयं निषेधः. यदि कथंचिच्छूद्रा व्यूह्यते तदैतानि कर्माणि तत्प्रधानानि न कर्तव्यानि। न च तया सह त्रैवर्णिकस्त्रीवद्धर्मे ऽधिकारो ऽस्तीत्यर्थः। भार्यात्वादधिकारे प्राप्ते निषेधो ऽयम्।..॥ मे० ॥

यस्तु तत्कारयेन्मोहात्सजात्या स्थितयान्ययेति निषेधं वक्ष्यत्यतः संनिहितायामपि सजात्यायां वा यागश्राद्धातिथिदानानि यस्य शूद्रया दत्तानि तद्धव्यकव्यं पितृदेवा नोपजीवन्ति। न च तेनातिथेयेन स गृहस्थः स्वर्गं गच्छति ॥ गो० ॥

तत्प्रधानानि भार्यान्तराभावात्। न च स्वर्गमित्यातिथेयविषये दोष उक्तः। तत्र नादन्त्यतिथय इत्यभिधानयोगात् ॥ ना० ॥

दैवं होमादि। पित्र्यं श्राद्धादि। शूद्रास्तत्सुतास्च प्रधानतया यस्य सुत इति न च स्वर्गं ब्राह्मण्यभावेन स्वर्गसाधनकर्माभावात् ॥ रा० ॥

यस्य द्विजस्य तत्प्रधानानि शूद्राप्रधानानि। तस्य तद्दैवं पित्र्यमातिथेयं च देयम्। पितृदेवा नादन्ति नाश्नन्ति। आतिथेयस्यापि दैवपित्र्यात्मकत्वादुक्तं पितृदेवा इति। ततश्च स स्वर्गं न गच्छति। न ब्राह्मणक्षत्रिययोरित्यारभ्य यदिदं शूद्राभार्यात्वं निषिद्धं तत्केवलशूद्राभार्यात्वविषयमिति। तत्प्रधानानीत्यनेन स्पष्टीकृतम्।...॥ न० ॥ १८ ॥

---

वृषलीफेनो वृषल्याः फेनो वक्त्रासवः स पीतो येन पलाण्डुभक्षितादिवत् पूर्वनिपातः। पाठान्तरं वृषलीपीतफेनस्य।...तस्यां चैव प्रसूतस्य कृतौ गच्छत इत्यर्थः। निष्कृतिः शुद्धिर्नास्तीति निन्दातिशयो यतः॥ मे०॥

शूद्रया कृतपरिचुम्बनस्य तथव चैकपर्यङ्कादौ मुखश्वासापवित्रीकृतस्य तस्यामेव चोत्पन्नापत्यस्य संशुद्धिर्नोपदिश्यत इति पूर्वोत्तरश्लोकार्धवत्यन्तनिषेधाद्भ्रगमनार्थवादौ ॥ गो० ॥

वृषलीफेनपीतस्य पीतवृषलीमुखफेनस्य निःश्वासो वृषल्या एव। एतेन प्रधानमैथुनाभावे ऽपि प्राप्याङ्गमात्रेण दोष उक्तः। प्रसूतस्योत्पन्नापत्यस्य। निष्कृतिर्निस्तारः। पापान्न विधीयते नानुमतो विना प्रायश्चित्तमित्यर्थः॥ना०॥

वृषलीफेनपीतस्य शूद्राधरसुधापायिनः। चुम्बनेन भोगकाले तन्निश्वासैर्नोपहतं स्पृष्टं शरीरं यस्य। तस्य प्रसूतस्य स्वयमेवापत्यतया जातस्य निष्कृतिः शुद्धिरैहिकामुष्मिकयोः कर्मणोर्नाधिकार इति भावः।..॥ रा०॥

वृषलीफेनपीतस्य..वृषलीभोगोपलक्षणमेतत्। प्रसूतस्य जातापत्यस्य तिष्ठति प्रायश्चित्तम्।...॥ न०॥ १९॥

---

वक्ष्यमाणस्य संक्षेपोपन्यासः हिताश्च अहिताश्च केचिद्धिताः केचिन्न। अष्टाविति सङ्ख्यानिर्देशः समासः संक्षेपः। स्त्रीसंस्कारार्था विवाहा स्त्रीविवाहाः। कः पुनरयं विवाहो नाम। उपायतः प्राप्ताया दारकरणार्थः संस्कारः...॥ मे०॥

चतुर्णामपि ब्राह्मणादिवर्णानां परलोकेहलोकयोः कांश्चिद्धिताहितानिमान्वक्ष्यमाणानष्टौ भार्याप्राप्तिहेतून्विवाहान्संक्षेपेण शृणुत॥ गो०॥

हिताहितान् हितानहितांश्च। तत्र केचित्सर्वेभ्यो वर्णेभ्यो हिताः केचिदहिताः केचित्कस्यचिदेव तादृशा इति वक्ष्यति॥ ना०॥

हिताहितान्स्वर्गनरकसाधनान्। स्त्रीविवाहान् स्त्रीकर्मकान् अनेन स्वयंवरविवाहो नाष्टसु गण्यत इत्यर्थः॥ रा०॥

यथा विवाहे इह प्रेत्य च हितानहितान्विपरीतान्॥ न०॥ २०॥

---

...अधमग्रहणं पैशाचस्य निन्दार्थम्॥ मे०॥

स्तुतिनिन्दाप्रतिपादनो ऽयम्। एषां ब्राह्मादिव्यपदेशो न त्वसाधारणेन ब्रह्मादिदेवतासंबन्ध एषां विद्यते॥ गो०॥

येन विवाहेनोत्पन्नया संतत्या ब्रह्मलोकप्राप्तिः स ब्राह्मः। एवं दैवादावपि॥ ना०॥

दैवात्प्राजापत्यस्य श्रैष्ठ्यं फलतो वक्ष्यति।... ॥ न० ॥ २१ ॥

धर्मादनपेतो धर्म्यः शास्त्रविहित इत्यर्थः। यस्य च विवाहस्य यौ गुणदोषौ इष्टानिष्टफलहेतुत्वाद्गुणदोषौ प्रसवे अपत्यजन्मनि गुणा गुणाः अगुणो दोषः। वोढुरेव स्वर्गनरकादिलक्षणौ गुणदोषौ... ॥ मे० ॥

ये विवाहा यस्य वर्णस्य धर्मादनपेता यस्य च विवाहस्य यौ गुणदोषौ वोढुरिष्टानिष्टफलदातारौ प्रतिनियतविवाहोत्पन्ना यत्तेषु च ये गुणदोषा-स्तत्सर्वं युष्माकं प्रवक्ष्यामि ॥ गो० ॥

धर्म्यो धर्मादनपेतः। गुणदोषौ विवाहमात्रे ऽपि श्रुतिं विनापि। तत्र प्रशस्ताप्रशस्तत्वाभिधानादर्थादभिहितमिति विशेषतो नोक्तम्। प्रसवं संततौ ॥ ना० ॥

यस्य वर्णस्य यो विवाहो यावत्संख्यो विहितो यस्मिंश्च यो दोषस्तं ब्रूत य इति पञ्चभिः। ॥ रा० ॥

यो विवाहो यस्य वर्णस्य धर्म्यो यस्य विवाहस्य यौ च गुणदोषौ प्रसवेषु पुत्रेषु ॥ न० ॥ २२ ॥

षड्विवाहा ब्राह्मणस्यानुपूर्व्या। आनुपूर्वीक्रमो नामोद्देशः क्रमेण क्षत्रस्य क्षत्रियवचनः क्षत्रशब्दः। तस्य चतुरः। अवरानुपरितनानासुरगान्धर्व-राक्षसपैशाचान्विद्यात्। वैश्यशूद्रयोस्तानेवाराक्षसान् राक्षसं वर्जयित्वा ॥ मे० ॥

षडादित क्रमावस्थितान्विप्रस्य। क्षत्रियस्य चोपरितनांश्चतुरो वैश्य-शूद्रयोः पुना राक्षसवर्जितांस्तानेव धर्मादनपेताञ्जानीयात् ॥ गो० ॥

षडानुपूर्व्येति गान्धर्वान्ता विप्रस्य षड् धर्म्या धर्मादनपेताः। प्रशस्तास्त्वा-द्यास्त्वार इति वक्ष्यति। अवरानन्यांश्चतुरः। तत्र पैशाचस्य शूद्रेष्वपि निन्दितत्वात् प्राजापत्यादयश्चत्वारो ग्राह्याः। तानेव चतुरस्तेषु तु मध्ये न राक्षसमिति व्युदासात्। त्रयः प्राजापत्यासुरगान्धर्वाः शिष्यन्ते ॥ ना० ॥

... चतुरस्तानेवासुरादीन् राक्षसं वर्जयित्वा तानासुरगान्धर्वपैशाचान्।... ॥ रा० ॥

ब्राह्मादीन् षड्विवाहान्विप्रस्य धर्म्यान्विद्यात्।... ॥ न० ॥ २३ ॥

---

आसुरगान्धर्वयोरयं निषेधो ब्राह्मणस्य पुनर्ब्राह्मादिविधानेन।... ॥मे०॥

ब्राह्मणस्याद्याश्चत्वारः। क्षत्रियस्य राक्षसमेकं वैश्यशूद्रयोरासुरं स्मृत्यर्थोपनिबन्धकाराः प्रशस्तान्मन्यन्ते। अत्र चासुरादीनां ब्राह्मणादिषु पूर्ववाक्यविहितानामिह निराकरणाद्विकल्पतो नित्यासंभवे वैकल्पिकेषु प्रवृत्तिरेवमुत्तरत्रापि वेदितव्यम् ॥ गो० ॥

प्रशस्तानुत्तमसंततिहेतुतया। अत्र ब्राह्मणस्य चत्वार इति प्रथमः कल्पः। एवं वैश्यशूद्रयोर्ज्ञेयम्। आपत्कल्पं ब्राह्मणस्याह ॥ ना० ॥

चतुरः प्राजापत्यान्। कवयः क्रान्तदर्शिनः। एकं प्रधानं प्रशस्तमित्यर्थः।... ॥ रा० ॥ २४ ॥

---

क्षत्रियादिविषयेयं स्मृतिः। न ब्राह्मणविषया। राक्षसे विरोधात। न हि वधभेदने ब्राह्मणः कर्तुमर्हति।... ॥ मे० ॥

इह पैशाचनिषेधात्प्राजापत्यादयः पञ्च गृह्यन्ते। पञ्चानां प्राजापत्यादीना मध्यात्त्रयो धर्मादनपेता द्वौ त्वधर्म्याविह शास्त्रे स्मृतौ पैशाचासुरौ तावापद्यपि न कर्तव्यौ ॥ गो० ॥

क्षत्रस्य चतुरोऽवरानिति उपक्रान्ताः प्राजापत्यादयः पञ्च। तेषामपि मध्ये त्रयो धर्म्या विप्रस्य।... ॥ ना० ॥

पञ्चानां प्राजापत्यादीना मध्ये त्रयो धर्म्या धर्मादनपेता.... ॥ रा० ॥

पञ्चानामिति पाश्चात्याना ग्रहणं पैशाचस्यासुरस्यैवेति लिङ्गात्। पञ्चानां प्राजापत्यादीनां मध्ये त्रयः प्राजापत्यगान्धर्वराक्षसा धर्म्याः।... ॥ न० ॥ २५ ॥

---

...वरेण संविदं कृत्वा नय मामितो येन केनचिदुपायेनेत्यात्मानं नाययिष्यति। स च शक्नुयतिशयोगाद्धत्त्वा छित्त्वेत्येवं हरति।... ॥ मे० ॥

यावेतौ गान्धर्वराक्षसाख्यौ विवाहौ पूर्वोक्तौ तौ पृथक् पृथक् क्षत्रस्याधर्म्याविति पूर्व सिद्धं मिश्रौ धर्म्यौ तस्य तौ स्मृतौ इत्यनेनोच्यते। तत्रेतरेतरानुरागपूर्वं यदा कन्या वरेणात्मानं संविदा युद्धादिनापहारयति तदा गान्धर्वराक्षसौ मिश्रौ भवतः॥ गो० ॥

पृथगसंकीर्णौ मिश्रौ संकीर्णौ। यथा प्रथमं गान्धर्वेण परिगृह्य तद्बन्धुषु विरोधप्रवृत्तेषु युद्धेन हरणम्। अत्र मिश्रावित्यापत्कल्पः।. . ॥ ना० ॥

पृथक्पृथगिति राक्षसः क्षत्रियस्येत्युक्तत्वात्। अनुवादो मिश्राविति। वरकन्ययोः पूर्वं परस्परसंवादे सति परिपन्थिनो विजित्योद्वहनात् तौ गान्धर्वराक्षसौ मिश्रौ भवतः। .. ॥ रा० ॥

पृथक् पृथग्वा केवलो वा राक्षस इत्यर्थः।... ॥ न० ॥ २६ ॥

---

इदानीं स्वरूपमेतेषामाह। . अर्चयित्वानेनालंकरणकटककर्णिकादिना प्रीतिविशेषसत्कारविशेषैरर्चनं कृत्वा। एते चाच्छादनार्चने कन्याया वरस्य चान्यतरसंबन्धिप्रामाण्याभावादुभयोपयोगतः कार्ये। अन्येऽपि स्मृत्यन्तरोक्ता वरगुणा द्रष्टव्याः। ॥ मे० ॥

वासोविशेषैः कन्यामाच्छाद्यालंकारादिभिश्चार्हयित्वा श्रुताचारवन्तं वरं याच्ञारहितं स्वयमानीय यत्तस्मै कन्यादानं स ब्राह्मो विवाहो मन्वादिभिः स्मृतः॥ गो० ॥

आच्छाद्य वाससा कन्याम्। एतेन यथाशक्त्यलंकरणमुपलक्षितम्। अर्चयित्वा वरं मधुपर्केण स्वयमर्हयित्वा . ॥ ना० ॥

वासोऽलंकाराभ्यां कन्यामाच्छाद्य अर्चयित्वा च वरमिति। ॥ रा० ॥

आच्छाद्य कन्यां वाससी परिधाप्य भूषणादिभिश्चार्हयित्वा। .
॥ न० ॥ २७ ॥

वितते प्रारब्धतन्त्रे ज्योतिष्टोमादौ यज्ञे तत्कर्मकारिणे ऋत्विजे... ॥मे०॥

ज्योतिष्टोमादियागे प्रारब्धमर्थवदृत्विजि प्रचरति यदलंकृत्य कन्यादानं क्रियते । तं दैवं विवाहं मन्वादय आचक्षते ॥ गो० ॥

यज्ञे यज्ञमध्ये ऋत्विजे दानं स्वयज्ञस्य सम्यङ्निष्पत्त्यभिसन्धानेन सुतादानम्...॥ ना० ॥

वितते कर्तव्यतया प्रारब्धे । अलंकृत्येत्यनुवादो ऽलंकृतां विवाहयेदिति सामान्योक्तेः । दैवं देवकर्मसंबन्धित्वाद्देवोद्देश्यत्वाद्वा ॥ रा० ॥

सुतामलंकृत्य यद्दानं तद्दैवं धर्मं विदुः । दैवकार्याधिकृत्यतया दाना द्दैवत्वम् ॥ न० ॥ २८ ॥

---

स्त्रीगवी पुंगवश्च मिथुनमेकं द्वे वा वराद् गृहीत्वा कन्याया दानमार्षे धर्मः । धर्मत इति धर्म एवायं नात्र विक्रयबुद्धिः कर्तव्या ।...॥ मे० ॥

गोबलीवर्दमेकं द्वे वा वराद्धर्मतो यागाद्यवश्यकर्तव्यधर्मनिमित्तं गृहीत्वा यत्कन्याया यथाशास्त्रं प्रदानं विधीयते स आर्षो विवाह उच्यते ॥ गो० ॥

गोमिथुनं स्त्रीपुंसौ द्वे वा मिथुने । धर्मत आदाय आर्षोऽयं धर्म इति बुद्ध्या न तु लोभेनादानम् ।...विधिवदिति वाक्यमुच्चार्येत्यर्थः ।...॥ ना० ॥

...द्वे वेति गोयुगं स्त्रीपुंसौ मिथुनद्वन्द्वे इति स्त्रीपुंगोचतुष्टयम् । ॥ रा० ॥

धर्मत आदाय धर्मार्थमादाय नार्थार्थं यत्कन्याप्रदानं स आर्षः ।... ॥ न० ॥ २९ ॥

---

सह धर्मो युवाभ्यां कर्तव्य इति वचनेन परिभाषां कृत्वा नियम्य यद्दानं स प्राजापत्यः ।...॥ मे० ॥

सह युवां धर्मं कुरुत इति प्रदानकाले वाच उक्त्वा यदर्चापूर्वकन्यादानं स प्राजापत्यो विधिः स्मृतः ॥ गो० ॥

उभावेव न तु भार्यान्तरेणापि सहेति। अनुभाष्य नियम्य। अभ्यर्च्य मधुपर्केण।...॥ ना० ॥

...प्रदानकाले वचसा पूर्वं नियम्य अभ्यर्च्य सत्कृत्य गन्धादिना वराविति शेषः। वस्त्रादेरनावश्यत्वाद्ब्राह्मादेर्भेदः।...॥ रा० ॥

अभ्यर्च्य वरमिति शेषः। यत्कन्यादानं स प्राजापत्य इति शेषः ॥ न० ॥ ३० ॥

---

ज्ञातिभ्यः कन्याया एव पित्रादिभ्यः कन्यायै च स्त्रीधनं दत्त्वा कन्याया आनयनमासुरो विवाहः। स्वाच्छन्द्यात्स्वेच्छातो न शास्त्रत इत्यर्थाद्भेदमाह। तत्र हि शास्त्रं नियामकमस्ति। एकं गोमिथुनमिति। इह तु कन्याया रूपसौभाग्यादिगुणानपेक्ष्य च्छन्दः ॥ मे० ॥

कन्यायै कन्याज्ञातिभ्यो यथाशक्ति धनं दत्त्वा यत्कन्यायाश्च प्रदानमादानं स्वीकारः स्वेच्छातो नार्षवद्धनजातिपरिमाणनियमेन स आसुरो विवाह उच्यते ॥ गो० ॥

शक्तितो न त्वेकगोमिथुनादिनियतं द्रविणम्।...॥ ना० ॥

द्रविणं धनं प्रमाणसंख्यानियमं व्याचष्टे। शक्तित इति।...॥ रा० ॥

स्वाच्छन्द्याल्लोकशास्त्रमर्यादालङ्घनेन यत्कन्यादानं स आसुरो धर्मः।... ॥ न० ॥ ३१ ॥

---

इच्छया वरस्य कुमार्याश्च प्रीत्या परस्परसंयोग एकत्र देशे संगमनं तस्येयं निन्दा। मैथुन्यः कामसम्भवः मिथुनप्रयोजनो मैथुनः तस्मै हितो मैथुन्यः।...॥ मे० ॥

कन्यावरयोः परस्परानुरागाख्यः संयोगो मैथुनचरणं स मैथुनाय हितः कामनिमित्तको गान्धर्वो विवाहो बोद्धव्यः।...गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः। कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिक इति च

देवलस्मरणात् । तथा । गान्धर्वासुरपैशाचा विवाहो राक्षसश्च यः । पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥ बह्वृचगृह्यपरिशिष्टदर्शनात् भारतादौ च मुख्योपगमनवदेवं च पाणिग्रहणिका मन्त्रा इत्यादि नरान्तरोपभुक्तकन्याविषये ऽवतिष्ठते । पुनर्वैवाहिको विधिः कर्तव्यः । इत्यादि वचनाद्गमनोत्तरकालमकृतसंस्काराद्द्विजातीनां भार्या न भवति । शूद्रस्य भवत्येव । त्रिभिर्वर्णैरित्युपादानात्तथाविधपुत्रस्य रिक्थभाग्दर्शनात् ॥ गो० ॥

मैथुन्यो मैथुनमात्रोद्देशप्रवृत्तः।...सर्वेष्वेव द्विजातिविवाहेषु होमादिनैव भार्यात्वसिद्धिः।...तथा शौनकपरिशिष्टे विशेषोऽप्युक्तः। गान्धर्वासुरपैशाचा विवाहा राक्षसश्च यः। पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयत इति ॥ ना०॥

मैथुन्यः मिथुनाय हितः । कामसम्भवः तयोः कामः इच्छा तत एव भवति ।...॥ रा० ॥

मिथुने साधुर्हितो वा मैथुन्यः । मैथुनपर्यन्त इत्यर्थः । कामसम्भवः भोगसम्भवः । नार्थलोभादिसम्भवः ॥ न० ॥ ३२ ॥

---

प्रसह्य अभिभूय कन्यापक्षाद्बलात्कारेण कन्याया हरणं राक्षसो विवाह इत्येतदत्र विवक्षितम् । हत्वेत्याद्यनुवादः ।...॥ मे० ॥

हत्वा कन्यापक्षान्प्रमाथ्य । छित्त्वा प्रमाथ्याङ्गच्छेदादि कृत्वा । भित्त्वा प्राकारादीन् हा मातर्हा पितरनाथामक्रियत इत्येवमाक्रन्दन्तीमश्रुजलाविलनयनां यः कन्यां गृहादाहरति तदपि भूयः कन्याहरणं राक्षसो विवाहः ॥ गो० ॥

हत्वा विरोधिनः । छित्त्वा तेषां बाहुपादादि । भित्त्वा प्राकारादि । एतत्कन्याबन्धुविरोधस्योपलक्षणम् । क्रोशन्तीं रुदतीमिति कन्यानिच्छोपलक्षणम् ।...॥ ना० ॥

स राक्षसो विधिः । हिंसाप्राधान्याद्राक्षसत्वम् । हिंसाप्रधाना हि राक्षसाः ॥ न० ॥ ३३ ॥

---

मत्ता क्षीवां मद्यपरवशाम्। प्रमत्तां वातसङ्क्षोभेण नष्टचेतनाम्। रहोऽप्रकाशम्।...इह गान्धर्वराक्षसपैशाचानां..पाणिग्रहणसंस्कारनिरपेक्षा विवाहा इति मन्यन्ते।..॥ मे० ॥

सुप्तां निद्रोपेताम्। क्षीवां शीलसंरक्षणानिबद्धां निर्जने प्रदेशे यस्मिन्विवाह उपगच्छति। स पापहेतुर्विवाहानां मध्ये पैशाचोऽष्टमः ख्यातः ॥ गो० ॥

...मत्तां मद्येन। प्रमत्तामन्यचित्ताम्। क्रीडादिना। उपगच्छति नयति वा। प्रथितः पापिष्ठः पापिष्ठतया प्रसिद्धः ॥ ना० ॥

...प्रमत्तां शीलरक्षणेऽनवहितां मात्राद्यशिक्षितत्वेन। रहसि विजने देशे।...॥ रा० ॥ ३४ ॥

---

...क्षत्रियादीनां तु परस्परेच्छया। यदि कन्यावरयोः परस्परमभिलाषो भवति। तदा दानं कर्तव्यं नेतरथा ब्राह्मविवाहवत्। अन्ये तु व्याचक्षते। धनं वा गृहीत्वा अद्भिरेवेत्येष इतरेतरकाम्यार्थः...॥ मे० ॥

ब्राह्मणानामुदकदानपूर्वमेव कन्यादानं प्रशस्तमित्युच्यते। क्षत्रियादीनां पुनः परस्परेच्छया विनाप्युदकं वाङ्मात्रेणापि दानमिष्यते ॥ गो० ॥

...कन्याज्ञातिभिः कन्यया वा सहान्योन्येच्छामात्रे ऽपि विनापि दानं विवाहसिद्धिरित्यर्थः।...॥ ना० ॥

इतरेतरकाम्यया परस्परेच्छया। गान्धर्वादिषु नायं विधिः। प्रदानाभावात् ॥ न० ॥

अद्भिरेव ब्राह्मदवप्राजापत्यैः। अथवा वाग्दत्तैव नान्यस्मै देया ॥का०॥ ॥ ३५ ॥

---

...एषां विवाहानामिति निर्धारणे षष्ठी। एवं विवाहानां यस्य यो गुणः कीर्तितः। आचार्येण मनुना सर्वं शृणुत तं गुणं विप्राः।..॥ मे० ॥

एषां विवाहादीनां मध्याद्यस्य विवाहस्य यत्फलं मनुना कथितं तत्सर्वं मम यथावत्कथयतो विप्राः शृणुत ॥ गो० ॥

गुणः पुत्रोत्पत्तिद्वारेण ॥ ना० ॥

एषां विवाहानां मध्ये यस्य विवाहस्य यो गुणः फलम् ॥ न० ॥ ३६ ॥

---

पूर्वे वंश्याः पितृपितामहादयः । अपरे पुत्रपौत्रादयः । तान्सर्वानसौ नरकादियातनाभ्य उद्धरति । ब्राह्मेण विवाहेन ऊढा तस्यां यो जातः पुत्रः स सुकृतकृत्पुण्यकृद्यदि भवति । पितॄन्परलोकगतान् पितृशब्दोऽयं प्रे पर्यायः । न हि पुत्रादिसन्ततेरन्यथा पितृव्यपदेशसम्भवः । दशशब्द प्रत्येकमभिसंबध्यते पूर्वापरशब्दाभ्यामेकविंशकमिति निर्देशात् ।...॥ मे० ॥

ब्राह्मविवाहोढापुत्रो यदि सुकृतकृद्भवति तदा दश पूर्वान्पित्रादीन् अन्वयिनो मृतान् दश चापरान्पुत्रादीन् आत्मानं चैकविंशकं पापान्मोचयति ।...॥ गो० ॥

...ब्राह्मी ब्राह्मविवाहोढा । सुकृतकृदिति दुष्कृतकारित्वे तस्य नैतत्फलमस्तीत्यर्थः ।...॥ ना० ॥

वंश्यान् स्ववंशजातान् । परान्पुत्रादीन् ।...सुकृतकृत् श्राद्धादिकर्ता चेन्न जातमात्रेणेत्यर्थः ॥ रा० ॥ ३७ ॥

---

...सुतः पुत्रः कः प्रजापतिः स देवता प्राजापतेर्देवतात्वमारोप्यते ।... कायोढज इति ह्रस्वत्वं ङ्यापोः संज्ञाछन्दसोर्बहुलमिति (पा० अ० ६, ३, ६३) ।...॥ मे० ॥

दैवविवाहोत्पन्नः पुत्रः सप्त परान्पित्रादीन् सप्तावरान्पुत्रादीन् पापान्मोचयति । आर्षविवाहोत्पन्नश्च त्रीन्पित्रादीन्त्रींश्च पुत्रादीन् । तथा प्राजापत्यविवाहोढोत्पन्नश्च षट् पुत्रादीन् षट् पित्रादींश्च ॥ गो० ॥

कायः प्राजापत्यः ।...आसुरादिषु तु विवाहेषु जाताः पित्रा त्रस्य पुन्नामनरकतारणहेतवो नान्यषां पावयितार इत्यर्थसिद्धत्वान्नोक्तम् ॥ना०॥

...चौनिति गोशुल्कग्रहणापराधात् ।...॥ ना० ॥ ३८ ॥

---

...श्रुताध्ययनविज्ञानसम्पत्तिनिमित्ते च पूजाख्याती ब्रह्मवर्चसं तद्वन्तो ब्रह्मवर्चस्विनः । इदं तावच्छिष्टानां सम्मता अनुमता अगर्ह्या अद्विष्टा प्रिया इति ।...॥ मे० ॥

ब्राह्मादिषु विवाहेषु चतुर्षु क्रमावस्थितेषु अध्ययनादिसम्पत्तेजोयुक्ता साधुप्रिया लावण्येन द्वादशाध्यायवक्ष्यमाणलक्षणेन सत्त्वेन दयाभिश्च गुणैर्युक्ता धनिनः ख्यातिमन्तः सम्यक्स्रगनुलेपनादिभोगानुष्ठातारः पुत्राः जायन्ते । शतं वर्षाणि जीवन्ति ॥ गो० ॥ ( ३९, ४० )

अनुपूर्वशः तत्तद्विवाहापकर्षक्रमेणापकृष्यमाणगुणाः । सत्त्वगुणाः सात्त्विकाः...॥ ना० ॥ ( ३९, ४० )

सत्त्वगुणाः द्वादशाध्याये वक्ष्यमाणरूपाः सौन्दर्यं सत्त्वं बलं वा । पर्याप्तभोगा इति भोगिनः । भोगोपस्थितावपि दुष्कृतिना न भोगसिद्धिः ॥ रा० (३९, ४०) ॥ ३९ ॥

---

रूपं मनोहराकृतिः । सत्त्वं नाम गुणो द्वादशे वक्ष्यते । ताभ्यामुपेता युक्ताः । आढ्या धनवन्तः । श्रुतशौर्यादिगुणयुक्ततया ख्याता यशस्विनः । पर्याप्तभोगाः स्रगनुलेपनगीतवाद्यादिभिः सुखसाधनैरविकलैर्नित्ययुक्ताः ।... मे० ॥ ४० ॥

---

ब्राह्मादिव्यतिरिक्तेषु गान्धर्वादिषु विवाहेषु । नृशंसमनृतं च वदन्ति । नृशंसं मातृभगिन्यादावश्लीलाक्रोशवचनमनृतं प्रसिद्धं नृशंसं चानृतं च नृशंसानृते तद्वेदितुं शीलमेषामिति शब्दव्युत्पत्तिः...॥ मे० ॥

ब्राह्मादिभ्यश्चतुर्भ्यो ऽन्येष्वासुरादिषु दुष्टविवाहेषु क्रूरकर्माणो ऽनृतवादिनो वेदयागादिद्वेषिणश्च सुता जायन्ते ॥ गो० ॥

शिष्टेष्वनुशिष्टेष्वपदिष्टेष्विति यावत्। नृशंसो हिंस्रः॥ ना०॥

...शिष्टेष्ववशिष्टेषु। नृशंसाः क्रूराः। तत्कर्माणो वा। ब्रह्म वेद'। ब्राह्मणजातिर्वा।...॥ रा०॥ ४१॥

---

...निन्दितैः प्रतिषिद्धैः। निन्दिता गर्हिता।...॥ मे०॥

...अगर्हितैर्भार्याप्राप्तिहेतुभिर्विवाहैरगर्हितानि मनुष्याणामपत्यानि भवन्ति। गर्हितैश्च गर्हितानि भवन्ति। तस्माद्गर्हितान्विवर्जयेत् न कुर्यात्॥ गो०॥

यद्दर्शस्य यो विवाहो विहि :तो ऽनिन्दितः। निन्दितो ऽन्यः।...॥ ना०॥ ४२॥

---

पाणिग्रहणं नाम गृह्यकारैरुक्तः संस्कारः सवर्णासु समानजातीयासु गृह्यमानासूपदिश्यते शास्त्रेण विधीयते कर्तव्यतया प्रतिपाद्यते। असवर्णाया यदुद्वाहकर्म तत्रायं वक्ष्यमाणो विधिर्ज्ञेयः॥ मे०॥

सवर्णास्विति सामान्योक्त्या शूद्राणामप्यभिसाक्षिकममन्त्रकं पाणिग्रहणमात्रं कर्तव्यत्वेनाभिमतम्॥ ना०॥

...अयं वक्ष्यमाणः शर इत्यादि॥ रा०॥ ४३॥

---

ब्राह्मणेनोह्यमानया क्षत्रियया शरो ब्राह्मणपाणिपरिगृहीतो ग्राह्यः पाणिग्रहणस्थाने शरस्य विधानात्। प्रतोदो बलीवर्दानामायामः क्रियते येन वाह्यमानाः पीड्यन्ते हस्तिनामिवाङ्कुशः।.. उत्कृष्टजातीयैर्ब्राह्मणादिवर्णैः...॥ मे०॥

...शूद्रया पुनर्द्विजात्युद्वाहे तत्प्रावृतवस्त्रदशा ग्राह्याः॥ गो०॥

क्षत्रियया धृतं शरं वैश्यया च धृतं प्रतोदं पाणिग्रहणमन्त्रैर्वरो गृह्णीयात् उत्कृष्ट' स्ववर्णात्कृष्टवर्णः। ॥ ना०॥

शरः पाणिना क्षत्रियया गृहीतो यस्तं पाणिस्थानीयं विप्रो गृह्णीयान्न तु विप्रहस्तस्थः शरः क्षत्रियविषय इति कन्यापाणिस्थाने शरस्य विधानात् । अन्यथा मन्त्रलिङ्गविरोधः ।...॥ रा० ॥ ४४ ॥

---

...ऋतुर्नाम स्त्रीणां शोणितदर्शनोपलक्षितः कालः शरीरावस्थाविशेषो वा गर्भग्रहणसमर्थ उच्यते ।...तदिति भार्यायाः प्रत्यवमर्शः । तच्चित्तग्रहणं व्रतमस्येति तद्व्रतः । रतिकाम्यया विनाप्यपत्यार्थेन उत्पन्नपुत्र अनुत्पन्नपुत्रो वाऽऽर्तौ सुरतसंभोगेच्छा तद्व्रत एनां व्रजेन्नात्मेच्छयेत्यर्थः । अथवा तच्छब्दो रतिकाम्ययेत्यपेक्ष्यते स्मृतिशास्त्रत्वादस्य । तद्रतिकाम्यया पर्ववर्जमन्यत्रापि व्रजेत् । तत्रैवाकारप्रश्लेषो द्रष्टव्यः । अरतिकाम्यया आत्मनः इति शेषः ।...॥ मे० ॥

...संततिकाम्यया विनाप्यपत्योत्पत्तिं तत्सुरतसंभोगेच्छया नियमत उपेयात् ।...॥ गो० ॥

...तद्व्रतं पर्ववर्जं स्वदारगमनमात्रगृहीतव्रतः । रतिकाम्यया स्वस्य भोगार्थितया । न तु तादृग्धर्मलाभस्तत्रेत्यर्थः ॥ ना० ॥

...तद्व्रतो भार्याप्रीतिव्रतं यस्य अत एवाह रतिकाम्यया ॥ रा० ॥ ४५ ॥

---

...स्वभावे भवः स्वाभाविकः । स्वस्थप्रकृतीनां यो भवति व्याध्यादिना कस्याश्चित्प्राप्ते ऽपि काले निवर्तते एतत्तैलाद्यौषधोपयोगेन रतिवशेन चाकाले ऽपि प्रवर्तते ।...चत्वार्यहानि यानि सद्भिर्विगर्हितानि प्रतिषिद्धस्त्रीस्पर्शसम्भाषणादीनि । तानि च प्रथमशोणितदर्शनात्प्रभृति । अहर्ग्रहणं च सर्वाहोरात्रोपलक्षणार्थम् ।...॥ मे० ॥

चतुर्भिर्दिवसैरुत्तमजननिन्दितैः सहजैः षोडशाहोरात्राणि स्त्रीणां रोगाद्यजनितर्तुः ॥ गो० ॥

स्वाभाविकः स्त्रीस्वभावनियतः । कस्याश्चित्त्वाधिक्यमपि व्याध्यादिना

शोणिताधिक्येन भवतीत्यर्थः। इतरे रजःकालीनैश्चतुर्भिः सहेति वद-न्नवशिष्टान्यहानि द्वादशेति दर्शयति।..॥ ना॰ ॥

..सद्विगर्हितैश्चतुर्भिरहोरात्रैः सह अविगर्हिता द्वादश रात्रय इति षोडश।..॥ रा॰ ॥ ४६ ॥

---

तासां रात्रीणां या आद्याः प्रथमशोणितदर्शनाच्चतस्रस्ता निन्दिता न तत्र गमनमस्ति।..या च एकादशी या च त्रयोदशी सापि निन्दिता। ..॥ मे॰ ॥

तासां पुनः षोडशानां रात्रीणामाद्याश्चतस्र ऋतुदर्शनात्प्रभृति चैकादशी त्रयोदशी च निन्दिता।..॥ गो॰ ॥

एकादशीत्रयोदशीति षोडशदिनसमुदायापेक्षया।..॥ ना॰ ॥

..एकादशी ऋतुदर्शनापेक्षया।..॥ रा॰ ॥ ४७ ॥

---

तासु दशसु या युग्मा रात्रयः षष्ठाष्टमीदशमीद्वादशीचतुर्दशीषोडशी तास्पगच्छतः पुत्रा जायन्ते।..अनुवादो ऽयमयमपि नियम एवानुत्पन्न-पुत्रस्यायुग्मासुगमनम् ॥ मे॰ ॥

युग्मासु षष्ठाष्टम्याद्यासु गच्छतः पुत्रा जायन्ते। अयुग्मासु सप्तमीनव-म्याद्यासु स्त्रियः।..॥ गो॰ ॥

युग्मासु षष्ठ्यादिरात्रिषु..॥ ना॰ ॥ ४८ ॥

---

शुक्रं बीजं पुरुषस्य रेतः स्त्रियाः शोणितम्।..स्त्रीबीजाधिके पुंबीजे ऽयुग्मास्वपि पुमाञ्जायते। युग्मास्वपि स्त्रीबीजस्याधिक्ये कन्यैव। यदा परिपुष्टमात्मानं वृष्याहारयोगेन समधिकधातुं मन्येत स्त्रियाश्च कथं-चिदपचयं तदा पुत्रार्थी गच्छेदित्युपदिष्टं भवति। आधिक्यं चात्र न

परिमाणतः किं तर्हि सारतः। समे ऽपुमानमिश्रीकृते पुंस्त्रियौ। अपुमान्नपुंसकम्। इति केचित्। अन्ये साम्य इति पठन्ति। उभयोः साम्ये पुमानेव पुंस्त्रियौ वा।..क्षीणे बीजे सारतो विपर्ययग्रहणं गर्भस्य नपुंसकोत्पत्तिर्वा॥ मे०॥

समे स्त्रीपुरुषबीजे युग्मास्वयुग्मास्वपि नपुंसकं जायते। स्त्री पुंस्त्रियौ वा वायुना बीजभेदे सति निःसारे ऽल्पे च बीजे ऽग्रहणं गर्भस्य॥ गो०॥

..समे ऽपुमान्नपुंसकम्। पुंस्त्रियौ यमौ। एतच्चोभयोरतिवृद्धबहुशुक्रत्वे ऽपि तदपेक्षया पुंसो ऽधिकत्वेन पुमांसौ स्त्रिया अधिकशुक्रत्वे स्त्रियावित्यपि ग्राह्यम्। क्षीणे तयोः शुक्ररोगादिना क्षीणे स्वभावतो वाल्ये विपर्ययो ऽपत्यानुत्पत्तिः॥ ना०॥

पुंस्त्रियौ पुमांसौ स्त्रियौ स्त्रीपुंसौ चेति स्वरसतो दृष्टत्वात्। क्षीणे निःसारे अल्पे च विपर्ययो ऽभावः॥ रा०॥ ४९॥

---

निन्द्यासु षट्स्वन्यासु चानिन्द्यास्वप्यष्टासु स्त्रियो वर्जयन्..ब्रह्मचार्येव भवति ब्रह्मचर्यफलं प्राप्नोति। यत्र तत्राश्रमे वसन् अर्थवादो ऽयम्। ननु वानप्रस्थाद्याश्रमेषु राज्यभ्यनुज्ञा जितेन्द्रियत्वविधानात् सर्वाश्रमेषु गार्हस्थ्यादन्येषु वीप्सायाश्चार्थवादतयाप्युपपत्तेः।..॥ मे०॥

..गार्हस्थ्यादाश्रमान्तरे ऽपि वसन्ब्रह्मचार्येव भवति। न ब्रह्मचर्यखण्डनदोषो ऽस्य भवतीति..॥ गो०॥

यत्र तत्रेति वचनात्। गार्हस्थ्य इव सपत्नीकवानप्रस्थे ऽपि..॥ रा०॥५०॥

---

आसुरे शुल्कप्रतिषेधो ऽयम्।..॥ मे०॥

कन्यायाः पिता धनग्रहणदोषज्ञः स्वल्पमपि कन्यादानविनियमरूपं धनं न गृह्णीयात्। यस्माल्लोभेन तद् गृह्णन्नपत्यविक्रयी भवति॥ गो०॥

लोभेन लोभात्। न त्वार्षधर्मबुद्ध्या॥ ना०॥

आर्षासुरोद्वाहयोः शुल्कदानमुक्तं तत्स्वमतेन दूषयति नेति त्रिभिः ।..
॥ रा० ॥ ५१ ॥

---

स्त्रीनिमित्तानि धनानि कन्यादाने वराद्यानि गृह्यन्ते। पूर्वस्यैव शेषः।
..अथवा स्त्रीधनानीति नवमे दर्शयिष्यति । तानि ये मोहादुपजीवन्ति
बान्धवाः पिता तत्पश्चाच्च भर्ता भर्तृपश्चाच्च । एवं यानादि । वस्त्रं स्त्री-
णाम् ।..॥ मे० ॥

दुहितृभगिन्यादिसंबन्धीनि हिरण्यानि दासीवाहनवस्त्राणि वा पित्रा-
दय उपभुञ्जते । अतस्ते पापाः पापकर्माणो नरकं व्रजन्ति । प्रसङ्गात्
स्त्रीधनोपजीवनप्रतिषेधः ॥ गो० ॥

स्त्रीधनानि स्त्रीदाननिमित्तेन प्राप्तानि धनानि । एवं नारीयानानीत्य-
त्रापि ॥ ना० ॥

नारीयानानीति कन्यायै चैव शुल्कित इत्युक्तत्वाद्विभवे सतीति शेषः ॥
रा० ॥ ५२ ॥

---

..केचिदाहुरादेयमिति मनोस्तु मतं मृषैव तन्मिथ्या नादेयमित्यर्थः
..॥ मे० ॥

..आर्षे विवाहे गोमिथुनं शुल्कं वराद् ग्राह्यमिति केचिदाचार्याः
प्राहुः । तत्पुनरसत्यम् । यस्मादल्पार्थसाध्यत्वादर्थो वा भवतु । बहु-
मूल्यसाध्यत्वाद्भवतु । सर्वथा विक्रयस्तावदसौ भवत्येवं गोमिथुनमित्येतत्पर-
मतमवसीयते ॥ गो० ॥

शुल्कं शुल्कत्वेन पित्रैव ग्राह्यम् ।..॥ ना० ॥ ५३ ॥

---

किं वराद्धनाधिगमो विक्रयो भवति नेति ब्रूमः । ज्ञातयः कन्यायामा-
त्मनाधिकृताः स्वार्थमाददते गृह्णन्ति तदा स विक्रयः । अर्हणं कन्यार्थे
धनग्रहणे कन्यानां तदर्हणं पूजनं भवति ।..॥ मे० ॥

यासां कन्यानां पुनः पित्रादय आत्मार्थं दानं दत्तं वरान्न गृह्णन्ति अपि तु प्रसन्नैर्भर्त्रादिभिरुपगपूर्वं कन्यार्थं दत्तं न गृह्यते । नासौ विक्रयः किं तर्हि पूजनं तत्कन्यानां केवलं विक्रयस्पर्शशून्यमनुकम्पारूपं तत् ॥ गो० ॥

यदा स्वामी कन्यायै गोमिथुनं तथानुरागोत्पत्त्यर्थं कन्यायै भूषणादि स्वेच्छया विवाहात्प्रागेव वरो ददाति ज्ञातयस्तु वित्तं न गृह्णन्ति तदा ज्ञातीनां विक्रयदोषो नास्ति ।..॥ ना० ॥

..यच्च कन्यायै चैव शक्तित इत्युक्तं तदपि शुल्कमित्याह अर्हणमिति । ..॥ रा० ॥ ५४ ॥

---

न केवलं वराय दातव्यं कन्याबन्धुभिरपि तु तैरपि दातव्यं पितृभिः साहचर्यात्पितृशब्दः पितामहपितृव्यादिषु वर्तते ।..॥ मे० ॥

पितृभ्रातृभर्तृभिर्बह्वीं सम्पदमाप्तुकामैः स्त्रियः पूज्या अलंकर्तव्याश्च ॥ गो० ॥

अर्हणस्य कर्तव्यता प्रपञ्चयति पितृभिरिति ।..॥ ना० ॥

प्रसङ्गात्प्रकारान्तरेण तासामर्हणमाह ।..॥ रा० ॥ ५५ ॥

---

देवता रमन्ते तुष्यन्ति प्रसन्नाश्च स्वामिन एवाभिप्रेतेन फलेन योजयन्ति ।..॥ मे० ॥

यस्मिन्कुले पित्रादिभिः स्त्रियः पूज्यन्ते तत्र देवताः प्रसीदन्ति । यत्र पुनरेता न पूज्यन्ते तत्र देवताप्रसादाभावाद्यागादिक्रियाः सर्वा निष्फला भवन्ति ॥ गो० ॥

अफला मन्दफला. ॥ ना० ॥

..देवता लक्ष्म्यादयः । कलहशून्यत्वात् । अफलाः क्रिया यत्कर्तव्यं तदनया सहेति वचनात् तासां साहित्यबोधनेन नित्यमपरितोषादश्रद्धाकृतत्वेन फलराहित्यमिति ॥ रा० ॥ ५६ ॥

---

यस्मिन्कुले नवोढादुहितृस्नुषाद्याः सशोका भवन्ति तत्कुलं क्षिप्रमेव विनश्यति । यत्र पुनरेताः शोकार्ता न भवन्ति तत्सर्वकालं वृद्धिमेति ॥ गो॰ ॥

जामयः कुलस्त्रियः । तत्कुलं कुटुम्बसमुदायः ॥ गो॰ ॥

जामय इति स्वपत्नीदुहितृस्नुषाद्या सभर्तृकाः परिभवादिना दुःखिताः शोचन्ति..॥ रा॰ ॥ ५७ ॥

---

गेहानि स्थानानि ॥ ना॰ ॥

कृत्या अभिचाराख्याभिर्हतानीव ॥ रा॰ ॥ ५८ ॥

---

तस्मात्कारणादेताः सत्कारेषु कौमुदीमहानवम्यादिषु उपनयनादिषु च सर्वकामैर्मनुष्यैराभरणवस्त्रभोजनैर्नित्यमभिपूजनीयाः ॥ गो॰ ॥

उत्सवेषु विवाहादिषु । सत्कारेण वाचिकप्रशंसया । सत्कारेष्विति पाठे इतरेषां सम्माने प्रकृत इत्यर्थः ॥ ना॰ ॥

तस्मादेता जामयो भूतिकामैरैश्वर्यकाङ्क्षिभिः सत्कारेषु बान्धवादीनां पूजासूत्सवेषु विवाहादिषु ॥ रा॰ ॥ ५९ ॥

---

यस्मिन्कुले स्वभार्यया हेतुभूतया नित्यं भर्ता निवृत्ताभिलाषो भार्यापि च यत्र नित्यं स्वभर्त्रा हेतुभूतेनानुपजातनरान्तराभिलाषा तत्राविचलं मङ्गलं भवति ॥ गो॰ ॥

कुले गृहे । ना॰ ॥ ६० ॥

---

यदि स्त्री सुगन्धलेपनादिना कान्तिमती न भवेत्तदा भर्तारं न प्रहर्षयेत् । भर्तुरप्रहर्षाच्च गर्भग्रहणं न भवति ॥ गो॰ ॥

न रोचेत पुरुषस्य नाभिलाषं जनयति । प्रजननं सन्ततिः ॥ ना॰ ॥

स्त्री न रोचेत भर्त्रे इति शेषः । प्रजनं पुत्रः अरुच्या तस्यामगमनात् ॥ रा० ॥ ६१ ॥

---

स्त्रियां वेषादिना कान्तिमत्या भर्तृमनोहरतया परपुरुषसम्पर्काभावात् तत् कुलमुज्ज्वलं भवति । तस्या पुनररोचमानायां भर्तृद्विष्टतया नरान्तरसङ्गत्यतः सकलमेव कुलं मलिनीभवति ॥ गो० ॥

रोचमानायां भूषणादिना दीप्यमानायाम् । रोचते शोभते ॥ ना० ॥

सर्वं प्रजनप्रमोदादि ॥ रा० ॥ ६२ ॥

---

आसुरादिविवाहसंस्काराभाववेदानध्ययनब्राह्मणापूजनैः प्रख्यातकुलान्यपकर्षं यान्ति । तस्मादेतत्परिहरणीयम् ॥ गो० ॥

कुत्सितैर्विवाहैः स्ववर्णानिषिद्धैः । क्रियालोपैः कर्तव्यतानाचरणैः । ब्राह्मणातिक्रमेणाधिक्षेपादिना । एतैर्विनश्यन्ति कुलतां त्यजन्ति ॥ ना० ॥

शुल्कदानेनोद्वाहनिन्दनं प्रकृतं तत्रैव प्रासङ्गिकमाह । कुविवाहैरिति त्रिभिः । आसुरराक्षसादिविवाहैः..॥ रा० ॥ ६३ ॥

---

चित्रकर्मादिशिल्पधनप्रयोगकेवलशूद्रापत्यगवाश्वरथक्रयविक्रयादिकृषिराजसेवाब्रात्यादियाजनयागादिकर्माभावबुद्धिमन्त्रानध्ययनैः क्षिप्रमेव कुलान्यपकर्षं यान्ति ॥ गो० ॥

शिल्पादिभिस्तु कुलान्यकुलतामल्पकुलतां यान्ति । यानि च मन्त्रतो वेदतो हीनान्यल्पवेदाध्येतॄणि । शिल्पेन शिल्पजीवनेन व्यवहारेण ऋणादानादिजीविकया । शूद्रापत्यैः केवलैः कृत्स्नैः सवर्णाविवाहे सत्यपि शूद्रापत्यमात्रोत्पत्त्या । गोभिर्गोऽश्वैरश्वैरश्वरथैर्यानैः ॥ ना० ॥

शिल्पेन चित्रकर्मादिव्यवहारेण ।..॥ रा० ॥ ६४ ॥ ६५ ॥

---

यद्यपि धनेन कुलमिति प्रवादः। तथापि वेदाध्ययनावबोधतदर्थानुष्ठानयुक्तानि पुनः कुलान्यल्पधनान्यपि उत्कृष्टकुलमध्ये गणनां प्राप्नुवन्ति। महतीं ख्यातिमर्जयन्ति।..॥ गो०॥

अमन्त्रपाठसमृद्धौ दोषान्तराल्पमपि मन्दीभवतीत्याह। कुलसंख्यां कुलगणनां कथामन्तरभावं यान्ति॥ ना०॥

..कुलसंख्यां महत्कुलत्वेन संख्यायन्ते। इयत्तां कर्वन्ति अर्जयन्ति॥ रा०॥ ६६॥

---

कृतो विवाहो यस्मिन्नग्नौ तत्र कुर्वीत गृह्यं कर्म। अग्निसाध्यमष्टकापार्वणश्राद्धहोमादि गृह्यस्मृतिकारैरुक्तम्।..अन्वहंभवान्वहिकी प्रतिदिवसं यः पाको भर्तृर्थस्तस्मिन्नेवाग्नौ कर्तव्यः॥ मे०॥

वैवाहिके यन्नाग्नौ लाजहोमः कृतस्तस्मिन् गार्ह्यं गृह्योक्तं विवाहोत्तरकालीनं स्वकीयं कर्म नित्यनैमित्तिकशान्तिकपौष्टिकरूपम्।..पक्तिं स्वान्नपाकम्। गृही गृहे निवसन्॥ ना०॥

विवाहस्य प्रासङ्गिकमुक्ता यदुद्दिश्य कृतं तदाह वैवाहिक इति।..॥ रा०॥ ६७॥

---

पञ्चयज्ञविधेरधिकारनिर्देशो ऽयम्।..वध्यते..हन्यते दुष्कृतेन शरीरधनादिना नाश्यते। संबध्यते वा पापेन। परतन्त्रीकरणं वा बध्नातेरर्थः वाहयन् स्वकार्यव्यापारेण वाहनं यस्य चुल्ल्यादेर्यदौचित्ये प्राप्तं स्वसाध्यं कार्यं तत्ताभिः कुर्वन्वाहयन्नित्युच्यते। चुल्ली पाकस्थानं भ्राष्ट्रादि। पेषणी दृषदुपलः। उपस्करो गृहोपयोगि भाण्डं कुण्डकटाहादि। कण्डनी यया व्रीह्यादिकं कण्ड्यते। कुम्भो ऽत्र जलाधारः॥ मे०॥

पचनदृषत्सूर्पोलूखलघटाद्याः पञ्च गृहस्थस्य सूना इव घातनस्थानानि यानि स्वकार्ये योजयन्पापेन संबध्यते।..॥ गो०॥

..चुल्ली पाकेन मासादिबीजाना प्ररोहशक्तिप्रतिबद्धजीवनत्यागहेतु

त्वात्। एवं पेषणी पेषणशीला। पेषणेन उपकिरत्यणुद्रानीति। उपस्करो ऽवस्करहेतुः। संमार्जनी भूयिष्ठपिपीलिकादिहिंसाहेतुः। कण्टन्युलूखलं वितुषीकरणात्।..॥ ना०॥

तत्रोखा चुल्ली तथा पेषणी सपुत्राशिला उपस्करः संमार्जन्यादिः..॥ रा०॥ ६८॥

---

तासां चुल्ल्यादीनां सूनानां निष्कृत्यर्थं तदुत्पन्नदोषनिर्यातनार्थम्..॥मे०॥

तासां चुल्ल्यादीनां सूनानां यथाक्रमं निष्कृत्यर्थं तदुत्पन्नपापनिर्हरणार्थं प्रत्यहं पञ्च महायज्ञा मन्वादिभिः स्मृताः..॥ गो०॥

क्रमेण चुल्ल्यादिसूनानामध्यापनादीनि निष्कृत्यर्थानि॥ ना०॥

क्रमेण यथासंख्यं संख्यानतिक्रमेण।..॥ रा०॥ ६९॥

---

..अध्यापनशब्देनाध्ययनमपि गृह्यते येन जपो ऽहुत इत्यत्र वक्ष्यति। भूतादिदेवतास्येति भौतः नामधेयमेतत्कर्मविशेषस्य दिवाचारिभ्यो भूतेभ्य इति हि तत्र बलिहरणं भूतशब्देन विहितम्।..॥ मे०॥

..भूतबलिर्भूतयज्ञः।..॥ गो०॥

..तर्पणं पितॄणां जलेनान्नेन वा। होमो दैवो यज्ञः॥ ना०॥

..होमो गृह्याग्नौ बलिः। भूतोद्देशेन उलूखलादौ होम इति मेधातिथिः॥ रा०॥ ७०॥

---

..हापयतीति प्रकृत्यर्थ एव णिजर्थत्वात्।..स गृहे वसन्नवश्यभाविनीषु सूनासु न तत्पापेन संबध्यत इति प्रशंसा॥ मे०॥

एतान् पञ्च महायज्ञान्यो यथाशक्ति न जहाति स सर्वकालमपि गृहे वसन् चुल्ल्यादिसूनाजनितैः पापैर्न संबध्यते॥ गो०॥

न हापयति न त्यजति॥ ना०॥ ७१॥

---

...केचिच्चतुर्थ्यां पठन्ति देवतातिथिभृत्येभ्यः पितृभ्यश्चात्मने तथा। न निर्वपति पञ्चभ्य इति। निर्वापो ह्यत्र दानम्।...एतेभ्योः यः प्रत्यहं न ददाति उच्छ्वसन्नपि प्राणन्नपि श्वासप्रश्वासवानपि न जीवति मृत एव जीवितफलाभावात्। भृत्याश्चात्र वृद्धौ तु मातापितराविति श्लोकनिर्दिष्टा वेदितव्या न दासाः कर्मनिमित्तत्वात्तेभ्यो दानस्य। अथवा गर्भदासादयो वार्धक्ये कर्मस्वशक्ता अपि नियमतो लभ्यन्ते।...॥ मे॰ ॥

देवताशब्देन भूतानामपि ग्रहणं तेषामपि देवतात्वात्।...भृत्याः। वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्। इत्युक्ता एषां देवतादीनां पञ्चानां यो न ददाति ...॥ गो॰ ॥

भृत्यानां भूतानां बलिम्। आत्मनश्चाध्ययनमिति शेषः।...॥ रा॰॥ ७२॥

---

एतैः शब्दैः कस्यांचिद्वेदशाखायामेतेषां विधानम्।...॥ मे॰ ॥

उत्तरश्लोके एषां व्याख्यार्थो भविष्यति।...॥ गो॰ ॥ ७३ ॥

---

यो ऽयमहुतो नाम यज्ञ उक्तः स जपो वेदितव्यः।...असौ होमो हुतः। भूतबलिः प्रहुतः।...द्विजानां ब्राह्मणानामर्चा ब्राह्मं हुतम्। आतिथ्यकर्म द्विजाग्र्यार्चा ॥ मे॰ ॥

अहुतशब्देन जपो ब्रह्मयज्ञाख्यः स्मृतः। हुतश्च होमो देवयज्ञः। प्रहुतश्च भौतिको बलिः भूतयज्ञः। ब्राह्मं हुतं द्विजाग्र्यस्य ब्राह्मणस्यार्चा अतिथियज्ञः। प्राशितं च पितृतर्पणं पितृयज्ञः।...॥ गो॰ ॥ ७४ ॥

---

...यदा दारिद्र्यादिदोषादन्यतो वा कारणात्कथंचिदसम्पत्तौ नातिथ्यादिपूजा घटेत ततः स्वाध्याये नित्ययुक्तेन भवितव्यम्। दैवकर्मणि वैश्वदेवदेवताभ्यो ऽसौ होमो दैवं कर्म।..दैवे।कर्मणि युक्तस्तत्परो बिभर्ति

धारयति चराचरं स्थावरं जङ्गमं च सर्वस्य जगतः स्थितेर्हेतुर्भवतीत्यर्थः । ...॥ मे० ॥

ब्रह्मयज्ञदेवयज्ञानुष्ठाने नित्यं यत्नवान् स्यात् ।...॥ गो० ॥

पञ्चमहायज्ञाप्रशक्तावाह । दैवे होमे कर्मणि विभर्ति ॥ ना० ॥

दारिद्र्यवशात्पञ्चानामशक्तौ द्वयमावश्यकमित्याह स्वाध्याय इति ।... ॥ रा० ॥ ७५ ॥

---

...अग्नौ यजमानेन प्रास्ता क्षिप्ताहुतिर्हूयमानं चरुपुरोडाशाद्युच्यते । आदित्यमदृश्येन रूपेण प्राप्नोति । सर्वरसानामाहृतादित्यो ऽत आहुति-रसस्यादित्यप्राप्तिरुच्यते । अतः स रस आदित्यरश्मिषु कालेन परिपक्वो वृष्टिरूपेण जायते । ततो ऽन्नं व्रीह्यादि ततः प्रजाः सर्वप्राणिनः।... ॥ मे० ॥

...अधिकारिणा अग्नौ कृताहुतिः सूक्ष्मात्मना आदित्यमुपतिष्ठते इत्या-कृत्यपूर्वसाध्यं जगदिति भावः ॥ रा० ॥ ७६ ॥

---

...वायुः प्राणस्तमाश्रित्य सर्वे जीवन्ति न ह्यप्राणस्य जीवितमस्ति । प्राणधारणमेव जीवनम् । जन्तुशब्दः प्राणिमात्रवचनः । सर्वग्रहणं देव-र्षीणामतिशययुक्तानां वाय्वायत्तमेव जीवनम् । एवं गृहस्थः प्राणतुल्यः सर्वाश्रमिणाम् ।...॥ मे० ॥

यथा प्राणवाय्ववलम्बनेन सर्वप्राणिनो जीवन्त्येवं गृहस्थमाश्रित्यावलम्ब्या-श्रमान्तराणि भ्रियन्ते ॥ गो० ॥ ७७ ॥

---

...गृहीति पाठे बहुव्रीहिर्गृहमिति विशेषणसमासो ज्येष्ठाश्रम इति । अत्रापि गृहस्थैरेवेत्यौचित्यानुवादो न वानप्रस्थादीनामध्यापन-प्रतिषेधः । वानप्रस्थस्य तावद्विहितमेतत्तानेव महायज्ञान्निर्वपेदिति । प्रव्रजितस्य...वेदार्थव्याख्यानं भिक्षुशास्त्रे विहितम् ।. .॥ मे० ॥

गृहस्थस्यैवाध्यापनाधिकारात् तपोविज्ञानेन च वनस्थस्यापि भिक्षाभ्रमणोपदेशात्त्रयो ऽप्यन्नेन धार्यन्त इत्यर्थः। ज्येष्ठो गुरुतया पोषकतया च ॥ ना० ॥ ७८ ॥

---

स गृहाश्रमः।...एतदुक्तं भवति। यतः स्त्रीसम्भोगसुसंस्कृतभोजनादि गृहस्थस्यावश्यं भावि ततश्चेन्द्रियाणां विषयसक्तौ दोषेण किमुच्यते। प्रयत्नेनाश्रमान्तरेभ्यो धारयितव्यः। यतो ऽत्रापि महानिन्द्रियसंयमः। ऋतौ न गन्तव्यं परदारा न गन्तव्याः शेषान्नं न भोक्तव्यं विषयसन्निधाने यो नियमः स दुष्करः।...॥ मे० ॥

...असंयतेन्द्रियैर्धारयितुं न शक्य इति।...॥ गो० ॥

...दुर्बलेन्द्रियैरसंयतेन्द्रियैः ॥ रा० ॥ ७९ ॥

---

ऋषिप्रभृतयो गृहस्थेभ्यः सकाशाद्यतो ऽर्थयन्ते यतः शास्त्रज्ञैरेभ्यः कर्तव्यम्। किं तदित्याह ॥ गो० ॥

...आशासते तत्र ऋषयः स्वस्वदृष्टवेदभागस्वाध्यायेनात्मनः सुखोत्पत्तिं काङ्क्षन्ते। तेभ्यस्तानुद्दिश्य ॥ ना० ॥

...आशासते वेदाध्ययनश्राद्धादिकमाकाङ्क्षन्ते।...॥ रा० ॥ ८० ॥

---

...पूर्वोक्तमहायज्ञार्थैः स्वाध्यायादिभिः ऋषिदेवपित्रतिथिभूतानि यथाशास्त्रमर्चयेत् ॥ गो० ॥

...अर्चयेत्प्रीणयेत्। श्राद्धेनेति तर्पणस्याप्युपलक्षणम्। बलिकर्मणा भूतेभ्यो दत्तेनान्नेन ॥ रा० ॥ ८१ ॥

---

दद्यात्कुर्यात्। अहरहः प्रतिदिवसम्।...अन्नाद्येनेति तिलैर्व्रीहियवैरित्यादेरनुवादो ऽयम्।...॥ मे० ॥

पितृभ्यः प्रीतिमुत्पादयन्नन्नोदकक्षीरमूलफलैर्यथासम्भवं प्रत्यहं श्राद्धं कुर्यात् ॥ गो० ॥

अहरहः श्राद्धं नित्यश्राद्धम् ।...प्रीतिं श्रद्धामावहन् ॥ रा० ॥ ८२ ॥

---

...न चैवाशयेत्किञ्चित् नाचान्वाहिके श्राद्धे वैश्वदेवं प्रति विश्वदेवानुद्दिश्य द्विजभोजनम् ।...॥ मे० ॥

पञ्चयज्ञान्तर्गते पितृप्रयोजन एकमपि शब्दात्सति सम्भवे बहूनपि विप्रान्भोजयेत् ।...विश्वान्देवानुद्दिश्य ब्राह्मणं न किञ्चिद्भोजयेत् ॥ गो० ॥

पित्राद्येकैकोद्देशेनैकैकं ब्राह्मणं भोजयेदिति पार्वणवत्प्राप्तमेव ।...अत्र नित्यश्राद्धे ब्राह्मणसम्भवे ऽपि वैश्वदेवस्थाने द्विजं नाशयेदिति विश्वेषां देवानां नित्यश्राद्धप्रीणनं नास्तीति दर्शितम् ॥ ना० ॥

...पार्वणधर्मत्वादस्य देवब्राह्मणप्रसक्तौ निषेधति न चेति ॥रा० ॥८३॥

---

...ब्राह्मणशब्दस्त्रैवर्णिकाधिकारप्रदर्शनार्थः ।...॥ मे० ॥

वैश्वदेवार्थस्यान्नस्य सतो वैवाहिके ऽग्नौ कालान्तराहिते वा परिसमूहनादिगृह्योक्तेतिकर्तव्यतापूर्वमाभ्यो देवताभ्यः प्रत्यहं ब्राह्मणो होमं कुर्यात् । ब्राह्मणग्रहणं द्विजप्रदर्शनार्थं त्रयाणां प्रकृतत्वात् ॥ गो० ।

सिद्धस्य पक्वस्य । हविष्यस्येति शेषः । आभ्यो वक्ष्यमाणाभ्यः । ब्राह्मणो द्विजातिः ॥ रा० ॥ ८४ ॥

---

आदावित्यनुवादः । पाठक्रमेणैवामेरादौ सिद्धत्वात्ते ते पृथगाहुती । तयोश्च समस्तयोः अग्नीषोमाभ्यामिति विश्वेभ्यो देवेभ्य इति प्रयोगः । एकैवाहुतिर्धन्वन्तरये स्वाहा । सह द्यावापृथिव्योः द्यावापृथिवीभ्यां स्वाहेति । तथा स्विष्टकृते ऽन्ततः स्विष्टकृदिति गुणपदमग्निश्च गुणी च एतत् स्मृत्यन्तरे । अग्नये स्विष्टकृत इति वचनात् । श्रुतौ सर्वहोमेष्वेव चाम्नानात् ।...॥ मे० ॥

... तयोरग्नीषोमयोः । स्वाहाकारप्रधानो होम इति कात्यायनोक्तोऽयं प्रयोगः । अग्नये स्वाहा एवं सोमायाग्नीषोमाभ्यां विश्वेभ्यो देवेभ्यो धन्वन्तरये कुह्वै अनुमत्यै प्रजापतये द्यावापृथिवीभ्यामग्नये स्विष्टकृत इति पाठक्रमादेवान्तत्वे प्राप्ते अन्तपदं स्मृत्यन्तरहोमसमुच्चयेन स्विष्टकृतोऽन्तत्वख्यापनार्थम् ।...॥ रा० ॥ ८५ ॥ ८६ ॥

---

...सानुगेभ्य अनुगा अनुचरास्तत्पुरुषास्तथा चेन्द्रपुरुषेभ्य इत्यादि प्रयोगः ॥ मे० ॥

एवमुक्तप्रक्रतया सम्यक् प्रतिदैवतं हविर्हुत्वा प्राच्याद्यासु सर्वासु दिक्षु । प्राच्यामिन्द्राय नम इन्द्रपुरुषेभ्यो दक्षिणस्यां यमाय यमपुरुषेभ्यः पश्चिमायां वरुणाय वरुणपुरुषेभ्य उत्तरस्यां सोमाय सोमपुरुषेभ्य इत्येवं प्रदक्षिणावर्तमिन्द्रादिभ्यः सानुचरेभ्यो बलिं दद्यात्...॥ गो० ॥ ८७ ॥

---

मुसलोलूखल इति द्वन्द्वनिर्देशाद्वनस्पतीनामेकं स्थानम् ॥ रा० ॥ ८८ ॥

---

उच्छीर्षकं प्रसिद्धं देवगृहस्य शीर्षस्थानं तत्र श्रियै बलिं कुर्यात् । पादतः अधोभागे गृहस्य भद्रकाल्यै । तस्या अपि स्थानं द्वारस्य पूर्वभागे । अन्य उच्छीर्षकं गृहशयनस्य शिरोभागमाहुः पादौ चास्याधोभागम् ।.. पृथगेते आहुती ब्रह्मणे वास्तोष्पतय इति । ..॥ मे० ॥

वास्तुपुरुषस्य शिरःप्रदेशे उत्तरपूर्वस्यां दिशि श्रियै तस्यैव च पादप्रदेशे दक्षिणपश्चिमायां भद्रकाल्यै ब्रह्मणे वास्तोष्पतये चेति गृहमध्ये द्वंद्वनिर्देशेऽपि आङ्निर्देशाभावाद्देवताद्वयम् ॥ गो० ॥

उच्छीर्षके शय्यादेशस्य शिरःस्थाने । एवं पादतः ।...॥ ना० ॥

उच्छीर्षके वास्तुपुरुषस्य शिरःप्रदेशे उत्तरपूर्वस्यां दिशि । पादत इति नैर्ऋत्याम् । गृहस्य शयनस्य शिरःपादयोरित्यपरे तत्तुच्छं शयनस्यानियतत्वात् । उत्तरत्र वास्तुश्रवणात् । ब्रह्मणे वास्तोष्पतये च ॥ रा० ॥ ८९

चशब्दादेकैवेयमाकृतिः । विश्वेभ्यो देवेभ्य इति गृहाकाशे गृहा-भिमुख्य वा । दिवा दिवाचारिभ्यो नक्तं नक्तंचारिभ्यः । भूतेभ्य इत्यनुषज्यते ।... ॥ मे० ॥

आकाशे अन्तरिक्षे क्षिपेदूर्ध्वं क्षिपेत् ॥ रा० ॥ ९० ॥

---

आवासकस्योपरि य आवासस्तत्पृष्ठवास्तु एकशालाया अप्युपरि-भागः । तत्र बलिं कुर्वीत दिवाचरेभ्यो नक्तंचरेभ्यश्च । सर्वान्नभूताय... ॥ मे० ॥

वेश्मन उपरि वेश्मनः पृष्ठे वास्तुपृष्ठदेशे वा तत्र सर्वान्नभूतये नम इत्येवं बलिं कुर्यात् । बल्यर्थे हृतान्नशेषं सर्वं दक्षिणस्यां दिशि स्वधा पितृभ्य इति प्राचीनावीतीत्येवं गृह्यदर्शनात् पितृभ्यो हरेत् ॥ गो० ॥

सर्वानुभूतिस्त्वपश्रुतिस्तस्यै पृष्ठवास्तुनि गृहवास्तुपृष्ठभागे । सर्वान्नभूतय इति क्वचित्पाठः... ॥ ना० ॥

पृष्ठवास्तुनि वायव्यकोणे स एव वास्तोः पृष्ठदेशः ।..॥ रा० ॥ ९१ ॥

---

अन्नं पात्रे समुद्धृत्य श्वादीनामुपकाराय भुवि निक्षिपेत् । पापरोगिणः कुष्ठिक्षय्यामयाव्यादयः । वयांसि पक्षिणः शनकैर्भूम्युत्थितरजसा यथा न संसृज्यते । ... ॥ मे० ॥

...श्वपतितश्वपाककुष्ठ्यादिकाकक्रमीणां शनकै रजोऽवगुण्ठनपरिहारेण भुवि निक्षिपेत् ॥ गो० ॥

...पापरोगिणां कुष्ठक्षयादियुक्तानाम् ।...॥ रा० ॥ ९२ ॥

---

...तेजोमूर्तिः केवलतेजःशरीरः ।...॥ मे० ॥

एवमुक्तरीत्याभिहितसर्वभूतानि नित्यमन्नादिना यः पूजयति स तेजः-शरीरो भूत्वा स्पष्टेन मार्गेण येनाशु प्राप्यते शरीरपातसमनन्तरमेव तेन ब्रह्मलोकं गच्छतीति ।...॥ गो० ॥

...परं भुवर्लोकान् ऋतुना अवक्रेया। उत्तरमार्गेणेति केचित्। तन्न ...॥ रा० ॥ ९३ ॥

---

...पूर्वमाशयेद्भोजयेत् सर्वभोक्तृभ्यो गृहसंनिहितेभ्यः। भिक्षां च भिक्षवे याचमानाय दद्यात्। भिक्षाशब्देन स्वल्पपरिमाणमन्नादानमुच्यते। ...ब्रह्मचारिणे विधिवत्। अन्यस्मा अपि पाखण्डादिरूपाय भिक्षवे न विधिवद्दातव्या। ब्रह्मचारिणे तु विधिवत् स्वस्तिवचनपूर्वं भिक्षादानमित्येष विधिः। अथवा भिक्षुः परिव्राट् ब्रह्मचारी प्रथमाश्रमी चशब्दव्याख्याने वृत्तानुरोधात् ब्रह्मचारिणे चेति पठितव्यम्। एवं तु वानप्रस्थाय न दानं स्यात्। तस्माद्भिक्षव इति भिक्षुस्तस्य विशेषणं ब्रह्मचारिग्रहणम्।...॥ मे० ॥

...भिक्षणशीलाय ब्रह्मचारिणे समकालमेव स्वस्तिवाच्य भिक्षादानमपूर्वमिति गौतमोक्तविधानेन भिक्षां दद्यात् ॥ गो० ॥

पूर्वमात्मनः। भिक्षवे यतये ॥ ना० ॥

...भिक्षुः संन्यासी तस्मै ब्रह्मचारिणे च। विधिवत् ग्रासमात्रा भवेद्भिक्षेति शातातपोक्तेस्वल्पपरिमाणदानस्यावश्यकत्वात् ॥ रा० ॥ ९४ ॥

---

...यद् गुरवे गां दत्त्वा फलमाप्नोति तद्भिक्षां दत्त्वा गोव्रतस्याविशिष्टमिति। ..अगुर्यथाविधीति [ अगोर्य० ] केचित्पठन्ति।...॥ मे० ॥

अल्पगुर्हेमपङ्क्तीत्यादियाज्ञवल्क्योक्तविधिना गां दत्त्वा यत्पुण्यफलं गोदो अभ्रस्य विष्टपमिति प्राप्नोति तदेव द्विजो गृहस्थो भिक्षां दत्त्वा प्राप्नोति ॥ गो० ॥ ९५ ॥

---

...सत्कृत्य पूजयित्वा। ...॥ मे० ॥

फलपुष्पादिना सत्कृत्य पारमार्थिकवेदार्थज्ञाय ब्राह्मणाय स्वस्तिवाच्येत्यादिविधिपूर्वकं प्रतिपादयेदिति।...॥ गो० ॥

...सत्कृत्य पञ्चग्रासाभावे ग्रासमात्रमपि व्यञ्जनैः सत्कृत्य देयम्। तद-भावे उदकपात्रं वा फलादिभिः सत्कृत्य...॥ रा० ॥ ९६ ॥

---

यानि पितृदैवोद्देशेनान्नानि मोहाद्दानशास्त्रानभिज्ञतया दातृभिरध्य-यनविधियज्ञानुष्ठानतेजःशून्यत्वाद्भस्मरूपेषु विप्रेषु दत्तानि तानि तेषां दान-शास्त्रानभिज्ञानां मनुष्याणां निष्फलीभवन्ति ॥ गो० ॥ ९७ ॥

---

ज्ञानानुष्ठानतेजःसंपन्नेषु विप्रमुखेषु हव्यकव्यादि यत्प्रक्षिप्तं तदिह दुस्त-राच्छत्रुव्याध्याद्यभिभवादमुत्र च महत पापात्त्रायते ॥ गो० ॥

...विप्राणां मुखान्येवाहवनीयादयस्तेषु विप्रमुखाग्निषु...॥ रा० ॥ ९८ ॥

---

संप्राप्ताय स्वयमुपस्थिताय न तु निमन्त्रिताय। ...आसनोदके दद्यात् पादधावनोपयोगि प्रथममुदकं तत आसनम्। भोजनं च यथाशक्ति संस्कृत्येत्यन्नविशेषणम्... ॥ मे० ॥

...व्यञ्जनविशेषैर्यथासंभवं सत्कृत्यासनावसथावित्यादि वक्ष्यमाणविधि-पूर्वकं दद्यात् ॥ गो० ॥

उदकं पादप्रक्षालनार्थम्। विधिपूर्वकमापस्तम्बोक्तातिथ्यधर्मेण ॥ ना० ॥ ९९ ॥

---

अतिदौर्गत्या वृत्तिसंयमातिशयार्थितया शिलान् क्षेत्रफलशेषान् अप्यु-च्छिन्वतः सभ्यावसथ्याभ्यां सह त्रेतया पञ्चस्वप्यग्निषु होमं वा कुर्वाणस्य सर्ववृत्तिसंकोचपञ्चाग्निहोमार्जितं पुण्यमनर्चितोऽतिथिर्वसन् स्वीकरोत्य-दानदोषकथनेन नित्यतामाह ।...॥ गो० ॥ १०० ॥

---

...सूनृता वाक् प्रियहितवचनं कथाप्रस्तावादि वा । एतान्यप्यन्नाभावे सतामागतस्यातिथेर्नोच्छिद्यन्ते । किंतु दीयन्ते सर्वकालम् ॥ मे० ॥

तृणानि प्रथमार्थानि भूमिस्तदास्तरणार्था सूनृता प्रिया वाक् । नोच्छिद्यन्ते न दीयन्ते ॥ भा० ॥ १०१ ॥

---

एकरात्रं वसतः परगृहे ऽतिथित्वम् । तच्च ब्राह्मणस्य न जात्यन्तरे । तथा चापस्तम्बः [२, ३, ७, १६]..द्वितीयादिरात्रिष्वधिकां दर्शयति । अत्रैव निर्वचनं दार्ढ्यर्थमाह । अनित्यं हि स्थितिः तिष्ठतेरित् [पा० ७, ४, ५] पूर्वस्याशब्द औणादिकैः कथंचिद्व्युत्पत्तिः ॥ मे० ॥

ब्राह्मण एकां रात्रिं परगृहे वसन्नतिथिर्यतिः स्मृतः । यदस्यानित्यावस्थाने न विद्यते द्वितीया तिथिरस्येत्येवमतिथिरुच्यते ॥ गो० ॥

...न विद्यते द्वितीया तिथिर्यस्येति सो ऽतिथिः ।...॥ रा० ॥ १०२ ॥

---

...सांगतिकः सहाध्यायी सख्युरन्यस्तस्य ह्युत्तरत्र विधिर्भविष्यति वैश्यशूद्रौ सखा चेति । यो ऽपि सर्वेण संगच्छते विचित्रपरिहासकथादिभिः सांगतिकशब्देन युक्तः प्रतिषेद्धुं प्रागदृष्टपूर्वो ऽपि । न च गृहस्थस्य प्रोषितस्य सर्वलक्षणलक्षितो ऽप्यतिथिः । किं तर्हि उपस्थितं गृहे विद्याच्चास्यमित्यस्थानं यदुच्यते प्रोषितस्यापि भार्या यत्राग्नयश्च । तत्रासंनिहितस्यापि गृहस्थस्य भवत्येवातिथि । अतो यथा संविधायाग्निहोत्रदर्शपूर्णमासादिषु प्रवसति तद्वदतिथये ऽपि संविधातव्यम् । वाशब्दात्त्वेवं प्रतीयते भार्याग्निभिः सह यदा प्रवासस्तदा भवत्येव ग्रामान्तरस्थस्याप्यतिथिः असंनिहितस्यापि गृहे भार्याग्निषु सत्सु । ततश्च यदि भार्यया सह प्रवसेदग्नयश्च गृह एव भवेयुस्तदा नातिथिपूजानियम इति । वाशब्द उपस्थितगृहे विद्यादित्यपेक्षया न परस्परापेक्षया भार्याग्नीनाम् ॥ मे० ॥

समानग्रामनिवासी च स संगत्या लौकिक्या चरितं विचित्रपरि

हासकथाजीवनं यस्य स यत्र भार्याप्रयस्तस्मिन्नेव ग्रामे संप्राप्तस्तं वैश्वदेवकाले ऽपि संप्राप्तमतिथिं न विद्यात् ।...॥ गो॰ ॥

एकग्रामणीमेकग्रामे चिरनिवासिनम् । सांगतिकं संगतिः संबन्धः । तत्पुरस्कारेणागतम् । तथा यत्र यस्य प्रवासिनो ऽपि भार्याग्नयो वा सह गच्छन्ति । एतदन्यतमं स्वे गृहे उपस्थितमागतमप्यतिथिं न विद्यात् नातिथिधर्मेणार्चयेत्...॥ ना॰ ॥

...सांगतिकं विचित्रविद्येतिहासकथाभिः संगत्या वृत्त्यर्थिनं भार्याग्नियुक्ते गृहे उपस्थितमतिथिं विद्यात् । अत एव भार्याग्निविरहितस्य नातिथ्यकार्यतावश्यकेति । गतिस्थानविकल्पो वा । तेन भार्यायाः सत्त्वमावश्यकम् ॥ रा॰ ॥ १०३ ॥

---

उपासनं तदभ्यासः । यो ब्राह्मणोऽनयैव बुद्ध्या तत्र तत्रोपतिष्ठेत यथातिथिरवश्यं भोजनं लभेत तस्येयं निन्दा ।...॥ मे॰ ॥

उपासते आमन्त्रणं विनातिथिधर्मेण ॥ ना॰ ॥ १०४ ॥

---

सायंकाले ऽस्तमयादिप्रदोषान्तस्यां वेलायामतिथिरागतो ऽप्रणोद्य अप्रत्याख्येयो भोजनशयनासनादिभिः प्रतिपूज्यः । ...सूर्येणोढः प्रापितः ...सायंभोजने निवृत्ते ऽपि नास्य गृहस्थस्यानश्नन् गृहे वसेत् । यदि शेषमस्ति तन्निवेदनीयं न वैश्विपाकः कर्तव्यः ॥ मे॰ ॥ १०५ ॥

---

सूपघृतदधिशर्करादि यदुत्कृष्टमन्नं तत्स्वयं नाश्नीयादतिथौ संनिहिते यावत्तस्मै न दत्तम् । ...अर्थवादो ऽयं नित्यत्वादतिथिभोजनस्य ।...॥ मे॰ ॥

धन्यं धनहेतुः ॥ ना॰ ॥ १०६ ॥

---

बहुष्वतिथिषु युगपदुपस्थितेष्वितरेतरं समहीनज्यायःस्वासनादिप्रकल्पनं गुणापेक्षं न विशेषेण। ...उपासनं तत्समीपे कथाप्रस्तावेन संनिधानम्।...॥ मे०॥

उपासनं तत्समीप उपवेशनम्। हीन इति मन्दगुणे। समे नात्युत्कृष्टापकृष्टगुणे। समं नात्युत्कृष्टापकृष्टम्॥ ना०॥ १०७॥

---

...भुक्तवत्सु सर्वेषु निःशेषिते ऽन्ने यद्यन्योऽतिथिरागच्छेत्तस्मै दद्यात्पुनः पक्वान्नं न तु तस्मात्पाकबलिं हरेत्। अभावपि होमो नेष्यते।...॥ मे०॥

कृते ऽतिथिभोजनपर्यन्ते वैश्वदेवे यद्यपरो ऽतिथिराव्रजेत्। तस्मै तदा चान्नं यथाशक्ति पुनः पक्त्वा प्रदद्यात्। बलिहरणं च ततो ऽन्नान्न कुर्यात्।...॥गो०॥ १०८॥

---

भोजनलाभार्थं विप्रः स्वे कुलगोत्रे न कथयेत्। यस्माद्भोजनार्थं ते कथयन्भुङ्क्तेऽश्नीति विद्वद्भिः कथ्यते॥ गो०॥१०९॥

---

क्षत्रियो ब्राह्मणस्याध्वनीनो ऽपि प्रथमभोजनकाले प्रस्थितो ऽपि नातिथिः। अतो न तस्मै नियमतो देयम्। एवं वैश्यशूद्राभ्यामपि। सखिज्ञाती आत्मसमे नातिथी। गुरुः प्रभुवदुपचर्यः।...॥ मे०॥

ब्राह्मणगृहे गुरुमित्रबन्धुक्षत्रियवैश्यशूद्रा नातिथयो भवन्ति। गुरोः प्रभुत्वान्मित्रबन्धूनामात्मसमत्वात् क्षत्रियादेश्च हीनजातित्वात्।...॥गो०॥११०॥

---

अतिथेर्धर्मः क्षीणपथ्योदनत्वं परग्रामवासो भोजनकालोपस्थानं तादृशेन रूपेण यदि क्षत्रियो गृहमागतो भवति तदा तमपि भोजयेत्। ...काममिति नियमाभावमाह। काम्यो ऽयं विधिर्न नित्य इत्यर्थः।...॥ मे०॥

क्षीणपाथेयो ग्रामान्तरवासित्वादतिथिधर्मेण यदि क्षत्रियो विप्रगृहं आगच्छेत् । तदा गृहावस्थितविप्रेषु कृतभोजनेषु तमपि भोजयेत् ॥ गो० ॥

...काममिच्छया न त्ववश्यम् ॥ ना० ॥

...कामं यथेष्टम् ॥ रा० ॥ १११ ॥

---

अतिथेर्धर्मो ऽतिथिधर्मः । स ययोरस्ति तावतिथिधर्मिणौ । अतिथिधर्मश्च प्राग्व्याख्यातः ।..॥ मे०॥

वैश्यशूद्रावपाथेयावतिथिरूपौ ब्राह्मणस्य गृहे प्राप्तौ तदोभावपि कारुण्यं निर्वाहयन्दासभोजनकाले भोजयेत् ॥ गो० ॥

भृत्यैर्भृत्यद्वारा भोजयेत्तस्य तुल्योपचारः ।..॥ ना० ॥ ११२ ॥

---

..आदिशब्दः प्रकारे ज्ञातिबन्धुसंगतसहाध्यायिप्रभृतीन् गृह्णाति गुणवर्णम्.. । भार्यया सह यो भोक्तृभोजनकालः स एव भार्याया अपि..एवं ह्युक्तमवशिष्टं तु दम्पती इति । महाभारते..द्रौपद्या स्त्रीधर्मान्कथयन्त्योक्तं सर्वेषु पतिषु भुक्तवत्सु शेषान्नमश्नाति । पतिशेषान्नभोजनं स्त्रीणां धर्मः । तस्मान्न भार्याभोजनकाले सख्यादीनां भोजनं विधीयते । नाप्येकपात्रे प्राशनं सहार्थः । किं तर्हि नैकाकिनस्ते भोजयितव्या अपि तु भार्यापि तत्र भुञ्जीत । अवशिष्टं तु दम्पती इत्येतदत्र बाध्यते ।..॥ मे० ॥

भार्याभोजनकाले भोजयेत् । आत्मनो ऽपि कालो ऽवशिष्टं तु दम्पती इति वक्ष्यमाणत्वात् ॥ गो० ॥ ११३ ॥

---

सुवासिन्यो वध्वो नवोढाः स्त्रियः स्नुषा दुहितरश्च । अन्ये तु जीवच्छ्वशुरा जीवत्पितृकाश्च प्रसूता अपि सुवासिन्य उच्यन्त इत्याहुः । अतिथिभ्यो ऽन्वागताननुगतानेव.. । अन्ये त्वग्रत इति पठन्ति..॥ मे० ॥

जीवच्छ्वशुरपितृकाः स्त्रियः कुमार्यातुरगर्भिण्यश्च अनिष्यन्नगतानेवातिक-

अश्नानो भोजयेत् । अग्रत एव पाठे ऽतिथिभ्यः पूर्वमेव ॥ गो० ॥ ११४ ॥

सुवासिनी दत्ता वा स्त्री पितृगृहस्था..अन्वगग्रे । ..क्वचिदग्र इत्येव पाठः ॥ ना० ॥ ११४ ॥

---

एतेभ्यो ऽतिथ्यादिभ्यो भृत्यपर्यन्तेभ्यो यो भोजनमदत्त्वा पूर्वं प्रथममविचक्षणः शास्त्रार्थमजानानो भुङ्क्ते स श्वगृध्रैर्भक्ष्यते प्रेतः ।..॥ मे० ॥

..स भुञ्जान एतत्प्रत्यक्षभूतं मरणसमनन्तरप्राप्यमात्मनः श्वगृध्रखादनं न जानाति ॥ गो० ॥ ११५ ॥

---

अतिथ्यादिज्ञातिसंबन्धिषु दासेषु कृतभोजनेषु ततो ऽन्नावशिष्टं जायापती पश्चादश्नीयाताम् ॥ मे० ॥

विप्रेष्वतिथिषु । स्वेषु ज्ञात्यादिषु स्वसंबन्धिषु । भृत्येषु पोष्येषु ॥ ना० ॥ ११६ ॥

---

अनुवादमात्रमिदं पूर्वस्य पञ्चयज्ञानुष्ठानविधेर्गृहस्थभोजनकालस्य च । अन्ये त्वर्थान्तरविधानमपि वर्णयन्ति । पूर्वत्र जायापत्योरेककालमवशिष्टभोजनं विहितम् । अनेन स्त्रिय अपोह्य पुंस एव विधीयते ।..॥ मे० ॥

गृहेभवा गृह्या इत्यनेन भूतयज्ञ उक्त इति वक्ष्यमाणप्रत्यवायकथनार्थो ऽयमनुवादः ॥ गो० ॥

गृह्या देवता भूतानि ॥ ना० ॥ ११७ ॥

---

य आत्मार्थमेव पचति न देवादिभ्यो ददाति स पापहेतुत्वात्पापमेव केवलं भुङ्क्ते ।..॥ गो० ॥

..आत्मकारणादात्मभावकारणत्वात् । एतदन्नं सतां यज्ञशिष्टाशनं पञ्चमहायज्ञावशिष्टत्वेनाशनीयं विधीयते वेदे ॥ ना० ॥ ११८ ॥

---

..मधुपर्कशब्दः कर्मनामधेयम् । गृह्यात्तस्य स्वरूपावगमः । परिसंवत्सरानिति राजादिपूज्यविशेषणं परिगतोऽतिक्रान्तः संवत्सरो येषां तान् । यदि संवत्सरेऽतीत आगच्छन्ति तदा मधुपर्कार्हाः ।..॥ मे० ॥

..शिष्यो गुरुं श्वशुरो जामातारं जामाता श्वशुरं भागिनेयो मातुलं मधुपर्काख्येन गृह्योक्तरूपेण कर्मणा पूजयेत् । परिमितात्संवत्सरात्संवत्सरे ऽतीते ।..॥ गो० ॥

गुरुराचार्य उपाध्यायो वा । प्रियो मित्रम् ।..॥ ना० ॥

..प्रियो जामाता ।..॥ रा० ॥ ११९ ॥

---

यज्ञनिमित्तेऽर्वागपि संवत्सरात्प्राप्तयर्थोऽयमिति केचित् । अन्ये तु पूर्वस्यैव राजश्रोत्रिययोरुपसंहारमाहुः । अनुपसंहारे हि न त्वयज्ञ इति नोपपद्यते । अत्र श्रोत्रियो यः स्नातकः । यदि वा ऋत्विगेव । ..अन्ये तु सर्वान्त्विगादीन् श्रोत्रियशब्देन दृष्टान्मन्यन्ते ।..॥ मे० ॥

राजस्नातकौ यज्ञकर्मण्येव संप्राप्तौ मधुपर्केण संपूजनीयौ । न त्वयज्ञे संवत्सरादूर्ध्वमपि ।..॥ गो० ॥

...श्रोत्रियो विद्यामात्रस्नातः ।..॥ ना० ॥

...अनयोर्यज्ञकर्मण्यागमने संवत्सरे ऽपि मधुपर्कः । ..श्रोत्रियो ऽत्र पूर्वोक्तः स्नातकः ॥ रा० ॥ १२० ॥

---

दिनान्ते अन्नस्य सिद्धस्येन्द्राय नम इत्येवमादि मन्त्रवर्जं मनस्योद्देशेन पत्नी बलिहरणं भूतयज्ञाख्यं कुर्यात् । यस्मादेवं नाम यज्ञाद्यात्मभोजनपर्यन्तमेतत्सायंप्रातर्गृहस्थस्योपदिश्यते ॥ गो० ॥ १२१ ॥

---

पितृयज्ञं निर्वर्त्य श्रुतो यः पिण्डपितृयज्ञस्तं कृत्वा..। अग्निमान्वैवाहिकाग्निना तदान् । दायकालाहृतेन वा । विप्रग्रहणमविवक्षितम् । क्षत्रियवैश्ययोरपीष्यते ।..॥ मे० ॥

पितृयज्ञं पिण्डपितृयज्ञम्। अग्निमान् स्मार्तेन श्रौतेन वा।..॥ रा० ॥ १२२॥

---

..पाठान्तरमर्थान्तरं च पिण्डानां मासिकमिति।..॥ मे० ॥

यत एव तन्मासिकं श्राद्धं पिण्डानामनु पश्चादाक्रियते ततः पिण्डान्वाहार्यकमेतद्विद्वांसो मन्यन्ते। एवं च युक्तं यत्पिण्डपितृयज्ञानन्तरं क्रियत इति। तन्मांसेन विशेषेण विहितेन खड्गमांसादिना प्रयत्नतः कार्यं तदभावे पुनरन्यैर्हविर्भिः॥ गो० ॥ १२३॥

---

तत्र तस्मिञ्छ्राद्धे ये द्विजोत्तमा ब्राह्मणा भोजनीया ये च परिहर्तव्या यावन्तो यत्संख्याका द्वौ दैव इत्यादि येश्चान्नस्तैरिर्निर्हविरित्यादि तदेतत्सर्वमिदानीं वक्ष्यामि तच्छृणुत।..॥ मे० ॥ १२४॥

---

देवानुद्दिश्य द्वौ ब्राह्मणौ भोजयेत्। पितृणां त्रये त्रीनुभयत्र वा दैव एकं पित्र्ये चैकम्।..तत्रैकैकस्यैकं भोजयेत्। न त्वेवैकं सर्वेभ्यः पृथक्पृथग्देवतात्वात्।..॥ मे० ॥

द्वौ पित्र्याङ्गभूते दैवे पितृपितामहप्रपितामहोद्देशेन त्रीनेकैकं वा दैवपित्र्ययोर्ब्राह्मणं भोजयेत्।..॥ गो० ॥

..विस्तरं स्मृत्यन्तरोक्तं एकैकार्थं त्रयस्त्रय इत्यादौ॥ रा० ॥ १२५॥

---

..यथोत्साहं सत्क्रियान्नसंस्कारविशेषः। देशो दक्षिणाप्रवणादिः। अवकाशेष्वोक्षेषु चेति वक्ष्यमाणः। कालोऽपराह्णः..। शौचमात्मब्राह्मणप्रेष्यगतम्। ब्राह्मणानां संपद् गुणवद्ब्राह्मणलाभः।..॥ मे०॥

ब्राह्मणपूजां चोक्तादिदेशमपराह्णकालं शौचं गुणवद्ब्राह्मणलाभं विस्तरो नाशयति। तस्मादुक्तातिरिक्तब्राह्मणभोजनं न कुर्यात्।..॥ गो० ॥ १२६॥

---

..पितृयज्ञस्य क्षय अमावास्या। पाठान्तरं तिथिक्षय इति। तिथिक्षय इति तु पाठो निर्दुष्टः। एवं हि तत्र योजनम्। पित्र्यं नाम विधिचोदितं कर्म क्षये गृहे। तस्मिन् कर्मणि पित्र्ये युक्तस्य तत्परस्य।..॥ मे० ॥

यो ऽयं पित्र्यो नाम विधिः पित्र्यं कर्म एवा प्रेतकृत्या प्रेतोपकारार्था क्रिया क्षये पञ्चक्षये गृहे वा..तस्मिन् क्षये पित्र्ये कर्मणि युक्तस्य तन्निष्ठस्य लौकिकी स्मार्ता प्रेतक्रिया।..॥ गो० ॥

..प्रथिता प्रख्याता प्रेतकृत्या पितृउपकारार्था क्रिया। विधुक्षये अमावास्यायां लौकिकी स्मार्ता। तस्मिन्युक्तस्य श्रद्धानस्य।..॥ रा० ॥ १२७ ॥

---

श्रोत्रियश्छान्दसः कृत्स्नमन्त्रब्राह्मणिकां शाखामधीते यस्तस्मै।..॥ मे० ॥ दैवपित्र्यादीन्यन्नानि छन्दोमात्राध्यायिने देयानि। ..सति पुनः श्रोत्रियत्वे सति श्रुतवृत्तवृत्ताभिजनादियोगे च पूज्यतमाय विप्राय देयानि यतस्तस्मै दत्त्वा पितृदेवानिदातॄणामतिशयेनोपकारकं भवति ॥ गो० ॥ १२८ ॥

---

दैवपित्र्ययोरेकैकमपि वेदार्थविदं भोजयेत्। यत्पूर्वं फलं पितृदेवानामाख्यं प्राप्नोति। न त्वविदुषो बहूनपि भोजयन् पुष्कलं फलमाप्नोति।..॥ १२९ ॥

---

..दूरात्परीक्षेत निपुणतो मातापितृवंशद्वयपरिशुद्धिमार्गं यथोक्तं ये मातृतः पितृतश्च दशपुरुषं समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो ब्राह्मण्यं निर्वर्ययरित्येषा दूरात्परीक्षा।..॥ मे० ॥

..समस्तशाखाध्यायिनं ब्राह्मणं परीक्षेत। यस्मात्तस्मात्तथाविधो ब्राह्मणो हव्यकव्यानां तीर्थमिव। तीर्थेनोदकावतरणमार्गेणोदकार्थिनो गच्छन्त्येवं तथाविधेन ब्राह्मणेन हव्यकव्यानि देवान् पितॄन् गच्छन्ति तथाविधो ब्राह्मणो ऽतिथितुल्यः स्मृतो महाफलत्वात् ॥ गो० ॥

दूराद्दूरग्रामस्थमपि परीक्ष्येतानुसंदध्यात् ।...॥ ना० ॥ १३० ॥

---

...एकः प्रीतस्तर्पितो भोजितो मन्त्रविद्वेदार्थवित् सर्वांस्तानन्त्चानर्हति स्वीकरोति ।...॥ मे० ॥

यत्र दैवपित्र्यादावनृग्विदां ब्राह्मणानां दश लक्षाणि भुञ्जते तत्रैको वेदविद्भक्ता प्रीतस्तुष्टो धर्मतो धर्मोत्पादनेन तान्सर्वानर्हति स्वीकर्तुं योग्यो भवति तद्भोजनजन्यधर्मानुत्पादयतीत्यर्थः ॥ गो० ॥

युक्तो नियुक्तः। धर्मत औचित्येन ॥ना० ॥ १३१ ॥

---

विद्योत्कृष्टेभ्यो हव्यकव्यानि देयानि नान्येभ्यो यस्माद्यथा रुधिरोपलिप्तौ हस्तौ रुधिरेणैवापगतलेपौ कर्तुं न पार्यते अपि तूदकेनैव शक्येते। एवं चाज्ञदानमुखेन नात्मोत्तारयितुं शक्यते अपि तु विद्वद्दानद्वारेणैव ।...॥ गो० ॥ १३२ ॥

---

सत्यपि श्राद्धप्रकरणे वाक्याद्भोक्तुरयं दोषानुवादः। ...अयो लगुडः। आयसः पिण्डविशेषः। व्यासदर्शनात्तु भोजयितुरयं दोषो न भोक्तु ।...॥मे०॥

यत्संख्याकान् ग्रासान् हव्यकव्येष्ववेदविद् ग्रसते तत्संख्याकानेव प्रस्तुतश्राद्धकर्ता ज्वलितान् स्थूलान् शूलर्ष्ट्याख्यायुधानयःपिण्डान् ग्रसत इति अविद्वद्दानफलकथनम् ।...॥ गो० ॥

एतेनामन्त्रज्ञस्य भोक्तुरपि प्रत्यवायितोक्ता। ऋष्टिः खड्गः।...॥ना०॥ १३३ ॥

---

...ज्ञाने विद्यायां निष्ठा प्रकर्षो येषां ते ज्ञाननिष्ठा ज्ञानाधिकारिणः। ...अन्यैस्तु ज्ञाननिष्ठः परिव्राजको व्याख्यायते। तस्य हि आत्मज्ञानाभ्यासः कर्मन्यासेन विशेषतो विहितः। तपोनिष्ठो वानप्रस्थः। स हि तापस

इत्याख्यायते। ग्रीष्मे पञ्चतपास्तु स्यादिति। तपःस्वाध्यायनिष्ठा ब्रह्मचारिणः। कर्मनिष्ठा गृहस्थाः। अतश्च नाश्रमिणो निषिध्यन्ते।...॥ मे॰ ॥

केचिदात्मज्ञानपरा विप्रा भवन्ति। अपरे कृच्छ्रादितपःप्रधानाः। अन्ये तु तपोऽध्ययननिरताः। अपरे यागादितत्पराः ॥गो॰ ॥

...ज्ञानमात्मज्ञानं तन्निष्ठा यतयः। तपश्चान्द्रायणादि तन्निष्ठा वनस्थाः। तपो गुरुशुश्रूषादि स्वाध्यायो वेदाध्ययनं तन्निष्ठा ब्रह्मचारिणः।...॥ ना॰ ॥ १३४॥

---

...तानि ज्ञाननिष्ठेषु प्रतिष्ठाप्यानि प्रदेयानीत्यर्थः। यत्नवचनात्तदभावे चतुर्ष्वपि हव्यवत्। पित्र्ये ज्ञाननिष्ठाः पात्रतमाः।...॥ मे॰ ॥

ज्ञानप्राधान्येभ्यो यत्नेन पित्रर्थानि देयानि देवार्थानि पुनः शास्त्रमर्यादानतिक्रमेण चतुर्भ्यो ज्ञाननिष्ठादिभ्योऽपीति ॥ गो॰ ॥ १३५ ॥

---

संशयोपन्यासार्थः श्लोकः। यस्य पिता अपाठः स्वयं तु वेदपारगः साङ्गवेदाध्यायी। इतरस्य तु पिता वेदपारगः साङ्गवेदाध्यायी। इतरस्य तु पिता वेदपारगः। स्वयं तु मूर्खः। तयोः कः श्रेयानिति संशयं कृत्वा सिद्धान्तमाह ॥ मे॰ ॥ १३६ ॥

---

अनयोः पूर्वनिर्दिष्टयोर्मध्याच्छ्रोत्रियपुत्रमात्मना श्रोत्रियमपि प्रशस्यतरं जानीयात्। यस्माच्छ्रोत्रियपुत्र आत्मना च श्रोत्रियः सदधीतवेदपूजार्थं पूजामर्हति वेदस्तद्द्वारेण पूज्यते।...॥ गो॰ ॥ १३७ ॥

---

मित्रं श्राद्धे न भोजयेत्। किं तर्हि धनान्तरैरस्य मैत्र्यादिस्नेहः कार्योऽयम्। पुनर्न शत्रुं न मित्रं नाभिमतुं विज्ञातं ब्राह्मणं श्राद्धे भोजयेत् ॥ गो॰ ॥ १३८ ॥

---

...मित्रशब्दो ऽयं भावप्रधानः। मित्रप्रधानानि मैत्रीप्रधानानि ।...॥ मे॰ ॥
यस्य मित्रोपकारपराणि हव्यकव्यानि तस्य पारलौकिकं फलं न भवतीति ।
...॥ गो॰ ॥ १३९ ॥

---

श्राद्धदानेनानेन सह मैत्री मे भविष्यतीति एवं यो मनुष्यः शास्त्रानभिज्ञतया श्राद्धेन मित्रभावं कुरुते स मित्रहेतुत्वाच्छ्राद्धं मित्रमस्येति श्राद्धमित्रो द्विजाधमत्वः कर्मान्तरार्जितेनापि स्वर्गलोकेन न संबध्यते ॥ गो॰ ॥ १४० ॥

---

...पिशाचानामयं धर्मो यच्छ्राद्धे मित्रसंग्रहः ।...॥ मे॰ ॥
सा दक्षिणा तद्दानं सह भुज्यते ययेति संभोजनी या गोष्ठी पिशाचधर्मत्वात्पैशाची मन्वादिभिरुक्ता सा च मित्रार्थत्वादिहलोके एवास्ते अन्धा गौर्यथैकस्मिन् गृहे न परलोके प्रत्युपकाराय भवति ॥ गो॰ ॥
...पैशाची पिशाचगामिनी ।...॥ ना॰ ॥
...पिशाचानां बहुभिः सह भोजनस्य प्रसिद्धत्वादस्यापि तादात्म्यमित्याह ।..॥ रा॰ ॥ १४१ ॥

---

यथा ऊषरे भूप्रदेशे धान्यान्युप्त्वा कर्षकः फलं न प्राप्नोति एवमश्रोत्रियाय श्राद्धादि दत्त्वा दाता न फलं प्राप्नोति । अश्रोत्रियदाने वैफल्यकथनार्थमेतत् ॥ गो॰ ॥ १४२ ॥

---

...इह कीर्तिर्यथाशास्त्रमनुतिष्ठतीति ।...॥ मे॰ ॥
वेदार्थविदे च यथाशास्त्रं श्राद्धादि दत्तं पितृशास्त्रामुत्रिकफलेन कीर्त्यनुषङ्गैहिकफलेन च दातॄन्स्वफलान् कुरुते । प्रतिग्रहीतॄंश्च तत्प्रतिग्रहलब्धधनानुष्ठितयागादिफलेनामुत्रसफलान्कुरुते ।...॥ गो॰ ॥

दातॄन् प्रेत्य फलभागिन इह प्रतीग्रहीतॄन् ।.. ॥ ना० ॥ १४३ ॥

---

वरं गुणवद्ब्राह्मणान्तराभावे सगुणं मित्रं श्राद्धे भोजयेत् । न योग्यमपि शत्रुम् । यतोऽरिणा श्राद्धादि भुक्तं परलोके निष्फलं भवतीति ।...॥ गो० ॥

अभिरूपं गुणवन्तम् ।...॥ रा० ॥ १४४ ॥

---

...अन्ये त्वाथर्वणिकनिषेधार्थमिमं श्लोकं मन्यन्ते ।...॥ मे० ॥

समस्तशाखाध्यायिनं बह्वृचं तथाविधमेवाध्वर्युं छन्दोगं चैवंविधमेव श्राद्धे भोजयेत् ।...॥ गो० ॥

...सामगं छन्दोगं समाप्तिगं मन्त्रब्राह्मणोपनिषदन्तगम् । अथर्ववेद-विन्निवृत्त्यर्थं विशेषणानीति केचित् ॥ रा० ॥ १४५ ॥

---

एषां बह्वृचादीनां मध्यादन्यतमो यस्य त्वर्चितमनाः श्राद्धं भुञ्जीत तस्य पित्रादिसप्तपुरुषव्याप्यिन्यनवच्छिन्ना पितॄणां तृप्तिः स्यादिति समस्तशाखा-ध्यायिभोजनफलकथनम् ।...॥ गो० ॥ १४६ ॥

---

हव्यकव्यप्रदानेन एष मुख्यो विधिः यदसंबन्धिभ्यः श्रोत्रियादिभ्यो दीयत इति । अयं वक्ष्यमाणः पुनर्मुख्याभावे विधिर्बोद्धव्यो मुख्याभावे च सर्वदा साधुभिरनुष्ठितः ॥ गो० ॥१४७॥

---

स्वस्रीयो भगिन्याः पुत्रो विट्पतिर्जामाता प्रजावचनत्वाद्विट्शब्दस्य । अतिथिरन्ये स हि सर्वविशां पति· गृहाभ्यागतो लोके विट्शब्देनोच्यते । बन्धुः स्यालसगोत्रादिः ॥ मे० ॥

मातामहमातुलभागिनेयश्वशुरविद्यागुरुदौहित्रलिंग्याज्यान्भोजयेत् । विट् प्रजा तस्याः पतिं विट्पतिम् जामातरं बन्धुं च सगोत्रादिकम् ॥ गो० ॥

...बन्धुं मातुलपुत्रादिकम् ॥ ना० ॥

...बन्धुं मातृष्वसुः पुत्रादिकम् ॥ रा० ॥ १४८ ॥

---

नायं दैवे कर्मणि ब्राह्मणपरीक्षाप्रतिषेधः किं तर्हि काणश्लीपद्यादीनां कदाचिद्दैवेऽप्यनुज्ञानार्थः। ...अन्ये तु वक्ष्यमाणस्य प्रतिषेधप्रकरणस्य यत्नतो वर्जनार्थमुपक्रममात्रं श्लोको न तु काणादीनां दैवेऽप्यनुज्ञानार्थः ॥ मे० ॥

न परीक्षेत दोषगुणौ सूक्ष्मेक्षिकया नावश्यमन्वेष्यौ। दैवे वैश्वदेविके। तत्रापि स्तेनवृत्तित्वादिकं वक्ष्यमाणमवश्यं परीक्ष्यम्। हव्यकव्ययोरित्यभिधानात् ॥ ना० ॥

पैत्रे ब्राह्मणपरीक्षामनुवदन्दैवे तदभावमाह नेति।...॥ रा० ॥ १४९ ॥

---

स्तेनश्चौरः। पतितः पञ्चानां महापातकानामन्यतमस्य कर्ता। क्लीबो नपुंसकः। ...नास्तिका लौकायतिकादयः नास्ति दत्तं नास्ति हुतं नास्ति परलोक इति ये स्थितप्रज्ञास्तेषां वृत्तिराचारः। ...अथवा नास्तिको वृत्तिर्जीवनं येषां त एवमुच्यन्ते।...॥ मे० ॥

स्तेनादीन्विप्रान्हव्यकव्ययोरुभयोरप्ययोग्यान्मनुराह। चौरो ब्राह्मणसुवर्णादन्यत्र तस्य पतितत्वेनोपसंग्रहात्। पतितमेकादशे वक्ष्यति। क्लीबो नपुंसकः। नास्ति परलोककर्मेत्येवं वर्तनं येषां ते नास्तिकवृत्तयः ॥ गो० ॥

...नास्तिकवृत्तयो नास्ति कर्मफलमित्यभिमानिनः ॥ ना० ॥

...नास्ति कं परलोकसुखमिति वृत्तिर्वाङ्मानसयोर्येषां ते।...॥ रा० ॥ १५० ॥

---

...जटिलो ब्रह्मचारी...अनधीतवेदः अगृहीतवेदः। दुर्बालः खलतिलाञ्छितकेशो वा विकलेन्द्रियो वा। ...क्रमशः प्रत्येकमपि बहून्याजयति

बहुकृत्व आर्त्विज्यं करोति सो ऽपि न भोज्यः । ...केचिदाहुः श्राद्धग्रहणात्पित्र्य एवैषां प्रतिषेधो न तु दैवे तदयुक्तम् ।...॥ मे० ॥

...दुर्बलो दुश्चर्मा शिपिविष्ट इति यावत् ।...॥ ना० ॥

जटिलं ब्रह्मचारिणम् । अनधीयानं वेदाध्ययनरहितम् । दुर्बलं दुश्चर्माणं दुर्वालं कपिलकेशमिति मेधातिथिः । कितवं द्यूतरतम् । पूगान् बहून् श्रेणीर्वा ॥ रा० ॥ १५१ ॥

---

.. चिकित्सको भिषक् । देवलकः प्रतिमापरिचारकः । ...मांसविक्रयिणः सकृदपि ।... ॥ गो० ॥

...देवलकान्धनार्थं देवार्चकान् । विपणेन पण्यवीथ्यां विक्रेयप्रसारणेन जीवन्तः ॥ ना० ॥ १५२ ॥

---

ग्रामराजभृतकः कुत्सितनखः श्यावदन्तो गुरोः प्रतिकूलाचरणः त्यक्तश्रौतस्मार्ताग्निः प्रतिषिद्धवद्धिजीवीत्येते हव्यकव्ययोर्वर्ज्याः पूर्ववाक्यादेव क्रियानुवृत्तेरेवमुत्तरत्रापि ॥ गो० ॥ १५३ ॥

---

...निराकृतिः सत्यधिकारे महायज्ञानुष्ठानरहितः । ...ब्रह्मद्विड् ब्राह्मणानां वेदस्य वा द्वेष्टा ब्रह्मशब्दस्योभयार्थवाचित्वात् ब्रह्मापि ब्राह्मणः स्मृत इति । गणः संघः सहैकया क्रियया जीवन्ति ये ते गणशब्दवाच्यास्तदन्तर्गतास्त्रातुर्विद्यब्राह्मणाः ।...॥ मे० ॥

...निराकृतिः वेदादीनां निराकर्ता अनुपजीव्यो ब्राह्मणानां द्वेष्टा गणमध्यगतो ब्राह्मणादिभिः ।...॥ गो० ॥

...निराकृतिरस्वाध्यायः । ब्रह्म ब्राह्मणस्तद्विट् । ग्रामाभ्यन्तरो गणानां नेता ग्रामणीरिति यावत् । गणानामाधिपत्येन देशान्तरप्रापयितार्थलोभेनेति वा ॥ ना० ॥

यक्ष्मी कासविशेषयुक्तः । ...निराकृतिः पञ्चयज्ञानुष्ठानहीनः । ब्रह्मद्विड् वेदविप्रयोर्द्वेष्टा । गणाभ्यन्तरो गणार्थोमस्तकधनाद्युपजीवी ॥ रा० ॥ १५४ ॥

---

चारणनटनर्तकगायनादयः कुशीलवाः ।...॥ मे० ॥

नटगायनादिः कृतस्त्रीसंप्रयोगो ब्रह्मचारी शूद्राया भर्ता पुनर्भ्वाः पुत्रो वक्ष्यमाणः काणो यस्य च जायाजारो गृहे इत्येते हव्यकव्ययोः परिहरणीयाः ॥ गो० ॥ १५५ ॥

---

...वाचा दुष्टः परुषान्तभाषी । अभिशस्त इत्यन्ये... ॥ मे० ॥

पणपूर्वाध्यापकः पणपूर्वाध्यापितः शूद्रशिष्यस्तस्यैवं च गुरुः न स्वगुरुः तस्यानुकल्पे भोज्यत्वेनोक्तत्वात् । परुषभाषी कुण्डगोलकौ वक्ष्यमाणावेते हव्यकव्ययोर्वर्ज्याः ॥ गो० ॥ १५६ ॥

---

असति कारणे यः परित्यजति मातरं पितरमाचार्यं च । गुरुशब्दः सामान्यशब्दत्वादुपाध्याये ऽपि वर्तते ।...॥ मे० ॥

मातृपितृविद्यागुरूणां निष्कारणं परित्यक्ता पतितैश्चाध्ययनकन्यादानादिसंबन्धैः संपर्कं गतो ऽर्वागपि संवत्सरात् ।...॥ गो० ॥

अकारणात्त्यागित्वं विना । गुरोराचार्यस्य ब्राह्मैरध्ययनाध्यापनैः । यौनैर्योनिसंबन्धैर्वैवाहिकैः । पतितैः सावित्रीपतितैर्व्रात्यैः ॥ ना० ॥ १५७ ॥

---

...कुण्डस्यान्नमश्नाति एवं गोलकस्य प्रदर्शनार्थत्वात्कुण्डस्य । सोमं विक्रीणीते ओषधिः सोमस्तं यो विक्रीणीते यागार्थमोषधार्थं वा ।...अन्ये तु सोमसाधनाज्ज्योतिष्टोमादियागानाहुः । तेषां च विक्रयः...कूटकारकः साक्ष्येष्वनृतवादी ॥ मे० ॥

गृहस्य दाहको मारणद्रव्यस्य दाता कुण्डस्य वक्ष्यमाणस्य यो ऽन्नमश्नाति सोमस्य लतारूपस्य विक्रेता समुद्रं यो गच्छति स्तुतीनां पाठकः तिलादेः पोषकः लेख्यसाक्ष्यादौ कूटस्य कर्ता इत्येते उभयत्र परीहरणीयाः ॥ गो० ॥

...कुण्डाशी कुण्डं षष्टिः पलानि तावत्परिमाणतण्डुलान्नभोजी ।...कूटं छद्म तत्कारकः ॥ ना० ॥

...कूटकारकः कूटसाक्षी भूम्यर्थं मिथ्याभाषी ॥ रा० ॥ १५८ ॥

---

पित्रा यो विवदते परुषं भाषते । राजकुले व्यवहरतीति पूर्वपक्षोत्तरपक्षभङ्गभागादिनिमित्ते । तथा च गौतमः । पित्रा चाकामेन विभक्तानिति [गौ० अ० १५, १६] ।...कितवो द्यूतस्य कारयिता सभिकः । यस्तु स्वयं देविता स प्रागेव निषिद्धः । केकरमन्ये पठन्ति । केकरो मद्यप इति स च वलितप्रेक्षी अध्यर्धदृष्टिः... । रसविक्रयी विषस्य विक्रेता तस्य ह्येतदभिधानम् । उपांशुविधिरसदः सत्त्रीत्यादि विषदो रसद उच्यते ॥ मे० ॥

...कितवो ऽपरं देवयतीतरस्योक्तत्वात् । केका इति पाठकाचारः । ...रसशब्दस्येक्षुरसादावपि प्रसिद्धत्वात्तद्विक्रयी ।...॥ गो० ॥

पित्रा धनार्थं विवदमानः । कितवः स्वच्छन्द्रेशं विना द्यूतकारी । केकर इति क्वचित्पाठे वक्रदृष्टिरित्यर्थः । मद्यं द्राक्षादि मद्यम् । पापरोगः कुष्ठभगंदरादिर्निन्दितरोगः । अभिशस्तो ऽवचनीयेन युक्तः । दाम्भिको दम्भेन कर्मचारी । रसा गुड़ादयः । एतेनाविक्रेयमुपलक्षितम् ॥ ना० ॥

...कितवो यः स्वार्थेन परान्देवयते ।...रसविक्रयी रसो गोरसादि ॥ रा० ॥ १५६ ॥

---

धनुः शरांश्च यः शिल्पीव करोति यश्चाग्रेदिधिषूपतिः । दिधिषशब्दः काकाक्षिवदुभयेन संबध्यते । स्मृतिशास्त्रत्वाच्चेदृशः संबन्धो लभ्यते । ...गौतमेन हि इदं प्रतिषिद्धमिहापि संबन्धभेदे लिङ्गम् । द्विपदः समानो न ह्यग्रेदिधिषूपतिर्नाम कश्चिदस्ति ।...॥ मे० ॥

धनुःशरस्य कारको ऽग्रेदिधिषूपतिर्भ्रातुर्मृतस्येति वक्ष्यमाणो ब्रह्मवध्या-
दय इति..। यत्तु गौतमीयपर्यालोचनयाग्रेदिधिषूपतिशब्देन द्वयं निषिध्यते
अग्रेदिधिषूपतिर्दिधिषूपतिश्च तत्राग्रेदिधिषूपतिरनूढाकन्यागामी दिधि-
षूपतिस्तद्वोढेत्याऊस्तदसदशब्दार्थत्वात् ।..द्यूतवृत्तिः सभिकः।..॥ गो० ॥

..अग्रेदिधिषूपतिः दिधिषूर्लक्षिष्यते तस्याः पतिः। द्यूतमुपजीव्यं यस्य
स द्यूतवृत्तिः ॥ रा० ॥ १६० ॥

---

व्याधिविशेषवचना एते भ्रामरी अपस्मारी।..॥ मे० ॥

अपस्मारी गण्डमालाख्यव्याध्युपेतः श्वित्री सूचकः धातुसंक्षोभादियक्तो
ऽन्धो वेदस्य कुत्सकः इत्येते हव्यकव्ययोर्वर्ज्याः स्युः॥ गो० ॥ १६१ ॥

---

..पक्षिणां श्येनादीनामाखेटार्थं पोषयिता।..॥ मे० ॥

हस्तिगवाश्वोष्ट्राणां विनेता ज्योतिःशास्त्रेण जीवनः पक्षिणां वर्तनपूर्वकं
क्रीडार्थं पोषयिता युद्धशिक्षयिता एते उभयत्र परिहर्तव्याः॥ गो० ॥
१६२ ॥

---

स्रोतांसि उदकागमाः तेषां भेदकः सेतुं भित्त्वा देशान्तरे ग्रीष्मादि-
सेकार्थं नयति। तेषां च स्रोतसामावरणे रतः आवरणमाच्छादनं यतः
प्रदेशादुदकमुद्भवति तं स्थगयति। गृहाणां संनिवेशोपदेशकः वास्तुविद्या-
जीवी स्थपतिः सूत्रधारादिः। .दूतो राज्ञा प्रेष्यो दासवद्विनियोज्यः
दूतस्तु संधिविग्रहादावेव प्रेष्यते। वृक्षान्रोपयति मूल्येन धर्मार्थं तु न
दोषः।..॥ मे० ॥ १६३ ॥

---

श्वभिः क्रीडति श्वक्रीडी क्रीडार्थं शुनो बिभर्ति।...वृषलवृत्तिः शूद्रेभ्यः
सेवादिना यो जीवति। वृषलपुत्र इति पाठान्तरं केवला एव वृषलाः पुत्रा

यस्य शूद्रापत्यैश्च केवलैरिति गर्हिताचारः। गणानां देवतानां याजकः गणयागाः प्रसिद्धाः ॥ मे० ॥

...कन्याया निन्दको हिंसारतः शूद्रजीवनो वृषलपुत्र इति वा पाठः चतुर्दश्यादौ विनायकादिगणयागकृत् इत्येत उभयत्र वर्ज्याः ॥ गो० ॥

...कन्यादूषकः कन्याया अङ्गुल्यादिनाकन्यत्वापादकः। वृषल एव पुत्रोऽस्य स वृषलपुत्रः। गणानामनेकेषां क्रमेण ॥ ना० ॥

...गणाना विनायकानां बहुयाजकस्योक्तत्वात् ।...॥ रा० ॥ १६४ ॥

---

प्रत्युत्थानाद्याचारवर्जितः । क्लीबो निरुत्साहो नपुंसकस्योक्तत्वात् । सर्वदा याच्ञास्वभावः। अस्वयंकृतयापि यः कृष्या वृत्त्यन्तरसंभवेऽपि जीवति। श्लीपदी व्याधिविशेषादुच्छूनैकचरणः। साधुभिर्निन्दितः केनापि निमित्तेनेत्येतदुभयत्र बहिष्कार्याः ॥ गो० ॥ १६५ ॥

---

मेषमहिषजीवी पुनर्भुवो भर्ता मूल्येन प्रेतानां निर्हारको न धर्मार्थम्... एते यत्नत उभयत्र वर्जनीयाः ॥ गो० ॥ १६६ ॥

---

एते निन्दिताचाराः स्तेनादयः इहजन्मनि काणादयश्च...प्रागजन्मन्यत एतान्योग्यब्राह्मणैः सह एकपङ्क्तिभोजनानर्हान् ब्राह्मणापसदान् द्विजः श्रेष्ठः शास्त्रज्ञो दैवे पित्र्ये च वर्जयेत् ॥ गो० ॥ १६७ ॥

---

यथैते स्तेनादयः पङ्क्तिदूषका एवमनधीयानस्तुल्यदोष इत्येवमर्थं पुनर्वचनम् । अन्ये तु व्याचक्षते अधीयानानां काणादीनामसति वर्तमाने विगर्हिताचारत्वे दैवे कदाचित्प्राप्त्यर्थमनधीयानो ब्राह्मणो वर्ज्यः।...॥ मे० ॥

...इदं वचनं दैवे काणादीनां छन्दोऽध्यायिना स्वाचाराणामभ्यनुज्ञानार्थं गर्हिताचारं वर्जयेत् ।...॥ गो० ॥

ढयाग्निरिवेत्यन्यफलहेतुतोक्ता। भस्मनि ढयाग्निभस्मनि ॥ ना० ॥१६८॥

---

पङ्क्तिभोजनानर्हदाने दातुर्यदेनो देवपित्र्यर्थहविषि फलोत्पत्तिर्भवति तस्माकल्येन प्रवक्ष्यामि ॥ गो० ॥ १६९ ॥

---

अव्रता असंयताः शास्त्राचारवर्जिताः।...॥ मे० ॥

वेदग्रहणाय सावित्र्यादिव्रतरहितैस्तथा परिवेत्त्रादिभिरन्यैश्च स्तेनादिभिरपाङ्क्तैर्यद्देवपित्र्यर्थं भुक्तं तत्सुकृतलेशत्रयेन रक्षांसि भुञ्जते...॥ गो० ॥

अव्रतैरकृतस्नातकादिव्रतैरपाङ्क्तैः स्मृत्यन्तरोक्तैः ॥ ना० ॥

अव्रतैर्वेदार्थव्रतरहितैः। अपाङ्क्तैः परिवेत्त्रादिभिः। यदन्यैस्तत्सदृशै काणाद्यैः...॥ रा० ॥ १७० ॥

---

यो ज्येष्ठभ्रातर्यकृतदारके तिष्ठति सति दारश्रौतस्मार्ताग्न्याधानं कुरुते स परिवेत्ता ज्येष्ठश्च परिवित्तिर्बोद्धव्यः ॥ गो० ॥ १७१ ॥

---

परिवित्तिपरिवेत्तारौ यया च कन्यया हेतुभूतया परिवेदनं क्रियते दाता च कन्याया याजकश्च तद्विवाहहोमस्योपदेष्टा येषां पञ्चमस्ते नरकं गच्छन्ति ॥ गो० ॥ १७२ ॥

---

मृतस्य भ्रातुर्वक्ष्यमाणनियोगधर्मेणापि नियुक्ताया भार्याया यो नियोगधर्मं हित्वा कामेन हेतुभूतेनानुरागं भावयेत्सोऽग्रेदिधिषूपतिः...॥ गो० ॥ १७३ ॥

---

परभार्यायां कुण्डगोलकाख्यौ सुतावुत्पद्येते। तत्र सपतिकायां य उत्पद्यते स कुण्डो विधवायाश्च गोलकः ॥ गो० ॥ १७४ ।

---

...ब्राह्मण्यादिव्यपदेशमवजानीते प्राशित इत्येवं व्यपदेशान्तरमर्हन्ति अतस्ते नाशयन्ति हव्यकव्यानि निष्फलीकुर्वन्ति प्रदायिनां दातॄणां परिवे-त्रादीनाम्...॥ मे० ॥ १७५ ॥

---

...यावतः पङ्क्त्यन्विदत्तपङ्क्तिश्रोत्रियान्भुञ्जानाननुपश्यति तावतां न तत्र फलं पितृप्रशास्यं श्राद्धे भवति... ॥ मे० ॥ १७६ ॥

---

अन्धो भवतेर्ब्राह्मणानां तत्पङ्क्तिस्थितानां चतुर्थ्यर्थे षष्ठी। तेभ्यो दानस्य यत्फलं दातुस्तन्नाशयति। काणादयस्तु षष्टिप्रभृतीन्वीक्ष्य तद्दाने फलं दातुर्नाशयन्ति। वीक्ष्येति वीक्षणार्हदेशस्थत्वमुपलक्षितम्। अत एवान्धोऽपि वीक्ष्येत्यस्यान्वयो न विरुद्ध इति केचित्... ॥ ना० ॥ १७७ ॥

---

...पौर्तिकं फलं पूर्तेभवं पौर्तिकं बहिर्वेदिदानाद्यत्फलं तत्पौर्तिकम् ॥मे०॥

शूद्रस्य पाकयज्ञादेरुपदेष्टा कर्ता च यत्संख्याकान् ब्राह्मणानङ्गैः स्पृशति... तत्संख्यानां संबन्धि भोजनफलं न भवतीति शूद्रयाजकभोजनफलम्... ॥ गो० ॥

पौर्तिकं श्राद्धीयम् ॥ रा० ॥ १७८ ॥

---

वेदज्ञोऽपि विप्रः शूद्रयाजकसकाशाल्लोभेन दानादि प्रतिगृह्य मृन्मया-मकशरावाद्युदक इवाशु विनाशमुपैति...गो० ॥ १७९ ॥

---

तस्यां जातौ जायते यत्र विष्ठा स्वभोजनं भवत्येवं भिषजे नष्टं निष्फल-मुद्वेगकरं वा। नष्टं हि द्रव्यमुद्वेगं जनयति। अविद्यमाना प्रतिष्ठा स्थितिर्यस्य तदप्रतिष्ठम्...॥ मे० ॥

सोमविक्रयिणे यद्दत्तं तद्दातृभोजनार्थं शुक्रसंपद्यते। तच्च सकृद्भोजने

तिर्यग्जात्युत्पत्तिफलता स्यादनेन प्रकारेणोक्ता भवत्येवं पूयशोणिते अपि व्याख्येये...। अप्रतिष्ठमलब्धास्पदम्... ॥ गो० ॥

सोमविक्रयिणि यद्दत्तं तद्विष्ठावद्देवैः पितृभिश्च त्यज्यत इत्यर्थः। एवमुत्तरेषु। अप्रतिष्ठं देवादिसमीपानवस्थायि। वार्धुषौ वार्धुषये। नष्टं देवादिभिरदृश्यम् ॥ ना० ॥

...दातुरुपक्रमात्तस्यैव जन्मान्तरे भोजनार्थं विष्ठाद्युपस्थापकम्।...अप्रतिष्ठमुक्तवच्यमाणकालास्थायि॥ रा० ॥ १८० ॥

---

वाणिजिकाय यद्दत्तं तन्नेह कीर्तये नापि परलोकफलाय भवति। पुनर्भूपुत्राय च दत्तं निष्फलम्। भस्मनीव कृतं हव्यं प्रेत्यम्॥ गो० ॥ १८१ ॥

---

इतरेभ्योऽनुक्तफलेभ्योऽपाङ्क्तेयेभ्यो यद्दत्तमन्नं तन्मांसमेदःशोणितानां मध्ये मज्जति। भवतीति विद्वांसोऽथ सोमविक्रयिणि विष्ठेतिवद्व्याख्येयम्॥ गो० ॥ १८२ ॥

---

अपाङ्क्त्यैः पूर्वोक्तैरुपहता दूषिता पङ्क्तिः परिषद्यैर्ब्राह्मणैः पाव्यते निर्दोषा क्रियते। तान्वक्ष्यमाणैः श्लोकैः शृणुत कार्त्स्न्येन निःशेषेण ब्रवीमि ...॥ मे० ॥ १८३ ॥

---

अग्र्या मुख्या अध्यापकानां मध्ये सर्वेषु वेदेषु। न यत्र क्वचिदेकस्मिन्वेद इत्यर्थः। एवं सर्वप्रवचनेषु सर्ववेदार्थनिर्वचनेन। श्रोत्रियान्वयजा वेदाध्येतृकुलजाः॥ ना० ॥ १८४ ॥

---

...पञ्चाग्निविद्या नाम छान्दोग्योपनिषद्याम्नायते। स्तेनो हिरण्यस्येत्यादि...। अन्ये तु यस्य त्रयस्त्रेताग्नयः सभ्यावसथ्यौ च द्वौ पञ्चाग्निः...'

त्रिसुपर्णो नाम मन्त्रस्तैत्तिरीयके बह्वृचे च ये ब्राह्मणास्त्रिसुपर्णं पठन्तीत्यादिः ...॥ मे० ॥

...पञ्चाग्निर्व्याख्यातः। त्रिसुपर्णाख्यमृग्वेदव्रतयोगात्पूर्ववत्... ॥ गो० ॥

...पञ्चाग्निरुपनिषत्यच्यमानपञ्चाग्निविद्यावित्। केचित्तु तैत्तिरीयशाखोक्तगार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्यरूपश्रौताग्निपञ्चकवान् पञ्चाग्निरित्याहुः। त्रिसुपर्णस्तैत्तिरीयशाखापठितस्य ब्राह्ममेतु मामित्यादेर्ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ते सोमं प्राप्नुवन्ति आ सहस्रात्पङ्क्तिं पुनन्तीत्यन्तस्यानुवाकत्रयस्यार्थेन ग्रन्थतश्चाध्येता ॥ ना० ॥

...पञ्चाग्निः पचनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे।...त्रिसुपर्णो ...बह्वृचां वेदभागवित्...॥ रा० ॥१८५॥

---

...शतायुर्वृद्धवयाः ...॥ मे० ॥

वेदार्थवित् प्रागुक्तेभ्यो ऽन्यस्यापि वेदस्यैकदेशस्यार्थवित्। प्रवक्ता तदर्थव्याख्याता। सहस्रं गोसहस्रं तस्य दाता। शतायुः पूर्णशतवर्षः॥ ना० ॥ १८६ ॥

---

...पूर्वेद्युर्यदहः श्राद्धं कर्तव्यममावास्यायां त्रयोदश्यां वा ततः पूर्वस्मिन्नहनि द्वादश्यां चतुर्दश्यां वा यः श्राद्धे कर्तव्ये ब्राह्मणान्निमन्त्रयेत्। अपरेद्युस्तदहरेव वा। विकल्पश्चावधिनियमापेक्षः। यः शक्नोति नियमान् पालयितुं स पूर्वेद्युरशक्तस्तु तदहरेव ..। उपस्थिते प्राप्ते यथोदितान्यथोक्तान् ॥ मे० ॥ १८७ ॥

---

श्राद्धे ब्राह्मणो निमन्त्रितः स्त्रीनिवृत्तियमनियमानुष्ठानवान् सदा निमन्त्रणात्प्रभृति श्राद्धाहोरात्रं यावत्स्वाध्यायवर्जमवश्यकर्तव्यव्यतिरेकेण नाधीयीत। श्राद्धकृतस्य तद्वदेव स्यात्॥ गो० ॥ १८८ ॥

---

...यस्मान्निमन्त्रितान् ब्राह्मणानदृश्येन रूपेण पितर उपतिष्ठन्ति तच्छरीरमनुप्रविशन्ति । यथा भूतग्रहाविष्टं वायुवदनुगच्छन्ति । यथा वायुः प्राणः पुरुषं गच्छन्तमनुगच्छति न गच्छन्तं प्राणो जहाति । एवं पितरो वायुभूता भवन्ति । तथासीनान् ब्राह्मणानुपासते । गच्छतस्त्वनुगच्छन्ति उपविष्टेषूपविशन्ति निमन्त्रिता द्विजाः पितृरूपा भवन्तीत्यर्थः । अतो न स्वतन्त्रैर्निमन्त्रितैर्भवितव्यम् ॥ मे० ॥

यस्मात्तान् द्विजान्निमन्त्रितान्पितर उपतिष्ठन्त्यदृश्यरूपेण समीपमायान्ति...॥ गो० ॥ १८९ ॥

---

अङ्गीकृत्य निमन्त्रणमभ्युपगम्य श्राद्धे भोजनं यदि कथंचिदतिक्रामति भोजनकाले न संनिधौ भवति ब्रह्मचर्यं च न रक्षतीति । तदा सूकरतां गच्छति...। अन्ये त्वाहुः प्रार्थ्यमानस्यानभ्युपगम एवातिक्रमः ।...एतच्चायुक्तम्... ॥ मे० ॥

हव्यकव्ययोः शास्त्रमर्यादानतिक्रमेण निमन्त्रितो ब्राह्मणो ऽङ्गीकृत्य केनापि प्रकारेण भुञ्जानस्तदतिक्रमपापवाञ्जन्मान्तरे सूकरत्वं याति... ॥ गो० ॥

...कथंचिदन्यनिमन्त्रणादिनापि अतिक्रामन्तस्य गृहेऽनश्नन् ॥ ना० ॥

...अतिक्रामन्मैथुनादिनिषिद्धाचरणेन निमन्त्रणं स्वीकृत्य परित्यजन् ... ॥ रा० ॥ १९० ॥

---

वृषलीशब्दः स्त्रीमात्रोपलक्षणार्थः सामान्येन ब्रह्मचर्यस्य विधानात्... ॥ मे० ॥

...वृषल्यपि कामयमाना चालयति भर्तारमिति वृषल्यत्र ब्राह्मण्यपि ...॥ गो० ॥

वृषल्या शूद्रया । मोदते रत्यनुगुणं चुम्बनादिकर्माणि कुरुते...॥ ना० ॥ १९१॥

---

क्रोधशून्या मृदार्यादिशुद्धिनिरताः सर्वदा वर्जितस्त्रीसंप्रयोगास्त्यक्तायुधा महात्मनोऽनादिदेवतारूपाः पितरोऽतः क्रोधादिरहितैः श्राद्धश्राद्धगैर्भाव्यम् ॥ गो० ॥ १९२ ॥

---

...पूर्वदेवताः पितरो नाम कल्पान्तरेऽप्येते देवता एवेति स्तुतिः... ॥ मे० ॥

एषां पितॄणां यस्य सकाशादुत्पत्तिर्यैं च पितरो यैर्यागादिभिर्नियमैः शास्त्रोक्तकर्मभिर्यथा सुखच्छृणुत ॥ गो० ॥ १९३ ॥

---

मनोर्विराजस्तथा तस्यैव मनोर्ये मरीच्यादयः सुतास्तेषामृषीणां च पुत्राः पितृगणाः पितृशब्दवाच्याः संघाः ॥ ना० ॥ १९४ ॥

---

विराट्सुताः सोमसदो नाम साध्यानां पितरः देवानां च मरीचिपुत्रा अग्निष्वात्ता लोके ख्याताः ॥ गो० ॥

अत्र सोमसदो मनोर्विराजः पुत्राः साध्यः श्राद्धे पूज्याः। इतरे तु वक्ष्यमाणा मनुपुत्रपुत्राः ॥ ना० ॥ १९५ ॥

---

दैत्यादीनां प्रथमाध्यायोक्तभेदानामत्रिपुत्रा बर्हिषदो नाम पितरः स्मृताः ॥ गो० ॥ १९६ ॥

---

ब्राह्मणक्षत्रियवैश्यशूद्राणां यथाक्रमं सोमपहविर्भुगाज्यपसुकालिनामानः पितरः ॥ गो० ॥ १९७ ॥

---

ब्राह्मणस्य पितरः सोमपाः कवेः भृगोः पुत्राः। क्षत्रियपितरो हविर्भुजो हविष्मन्तो ऽङ्गिरःसुताः। वैश्यपितरस्त्वाज्यपाः पुलस्त्यस्य पुत्राः। शूद्रपितरः सुकालिनो वसिष्ठस्य पुत्राः॥ गो०॥१९८॥

---

...य एतैः शब्दैः पितर उच्यन्ते तान्विप्राणामेव निर्दिशेत्स्वपितॄन्। न च शब्दभेदेनार्थभेदशङ्का कर्तव्या विप्रग्रहणमधिकार्युपलक्षणार्थं प्राधान्यात्। ...॥ मे०॥

अनग्निदग्धाग्निदग्धकाव्यबर्हिषद अग्निष्वात्तान्सौम्याख्यानपरान्पितॄन्विप्राणामेव जानीयात्। वेदपुराणेषु चैव नामकं प्रसिद्धम्॥ गो०॥१९९॥

---

य एते सोमपादयः प्रधानभूताः पितृगणा उक्तास्तेषामपीह संसारे पितर एव पुत्रपौत्रा विज्ञेयाः॥ गो०॥ २००॥

---

मरीच्यादिभ्य उक्तनामभ्यो ये सोमपादयो जाताः। तेभ्यश्च देवदानवं जातम्। देवेभ्यश्च स्थावरजङ्गमरूपं सर्वं जगत्...॥ गो०॥ २०१॥

---

...अक्षययोपकल्पते। अक्षयायास्तृप्तेर्हेतुर्भवतीत्यर्थं...॥ मे०॥

तेषां पितॄणां रौप्यपात्रैः रूप्ययुक्तैर्वा पानीयमपि भक्त्या दत्तमक्षयसुखहेतुः संपद्यते॥ गो०॥ २०२॥

---

...दैवं हि यद्ब्राह्मणभोजनं तत्पितृकार्यस्य आप्यायनं वृद्धिकरं न स्वतः प्रधानं पित्र्यस्येव पोषकम्॥ मे०॥ २०३॥

---

...पूर्वं दैवं ब्राह्मणं नियोजयेत् निमन्त्रयेत् आसनं चोपवेशयेत्...॥ मे०॥

पितॄणां रक्षाभूतं गृह्यदर्शनाद्विश्वान्देवानुद्दिश्य पूर्वं ब्राह्मणं निमन्त्रयेत्। यस्माद्रक्षोरक्षावर्जितदर्शितं श्राद्धं रक्षांस्याच्छिन्दन्ति। यस्माद्रक्षाभूतं पित्र्यस्य दैवं तस्मात्॥ गो०॥ २०४॥

---

...दैवाद्यन्तं दैवेन कर्मणा आदिरुपक्रमः श्राद्धस्य कर्तव्यः। अतश्च निमन्त्रणं देवानां पूर्वं कर्तव्यमतः समाप्तिः। विसर्जितेषु ब्राह्मणेषु पश्चाद्दैवानां विसर्जनं कर्तव्यम्. .॥ मे०॥

ततः श्राद्धं दैवादि दैवान्तं चानुतिष्ठेत। न च पित्र्योपक्रमापवर्गं पित्राद्यन्तं तदनुतिष्ठन्ससंतान आशु विनश्यतीति॥ गो०॥

देवतानामादौ निमन्त्रणम्...। दैवान्तता तु पितॄन्विसृज्य देवाना विसर्जनात्।...॥ ना०॥ २०५॥

---

अनुपहतं देशं जनैरनाकीर्णं गोशकृतोपलेपयेत्। अथवा दक्षिणस्यां दिशि अवनतो यदि स्वभावतो न स्यात् तदा प्रयत्नतस्तं संपादयेत्॥गो०॥ २०६॥

---

...चोक्षाः स्वभावशुचयः...॥ मे०॥

स्वभावशुचिषु स्थानेषु नद्यादिपुलिनेषु प्रदेशेषु च निर्जनेषु दत्तेन श्राद्धादिना पितरः सर्वदा तुष्यन्ति। तस्मिंश्च देशे॥ गो०॥ २०७॥

---

...पृथक्पृथग्विभागेन नैकमासनं दीर्घं धौतफलकादि सर्वेभ्यो दद्यात्। परस्परं यथा न स्पृशन्ति...॥ मे०॥

आसनेषु सदर्भेषु पृथक्पृथग्विन्यस्तेषु सम्यक्कृतस्नानाचमान्तान्पूर्वनिमन्त्रितानुपवेशयेत्॥ गो०॥ २०८॥

---

अजुगुप्सितानिन्दितान्...। उपविष्टान्न जुगुप्सेत न निन्देतेत्युक्तं भवति ...॥ मे० ॥

तान्विप्रानर्निन्दितानासनेषूपवेश्यानन्तरं कुङ्कुममाल्यधूपादिभिः स्वामोदैर्दैवब्राह्मणपूर्वकमर्चयेत् ॥ गो० ॥ २०९ ॥

---

तेषां ब्राह्मणानामुदकं दर्भतिलमिश्रं दत्त्वाग्नौ करवाणि करिष्य इति चेत्यनुज्ञातो यदा कुर्वित्येवं ब्रूयुरिति गृह्योक्तरूपेण सह ब्राह्मणैरनुज्ञातोऽग्नौ वक्ष्यमाणं होमं कुर्यात्...॥ गो० ॥ २१० ।

---

अग्नेः अग्नये कव्यवाहनाय सोमाय पितृमते यमायाङ्गिरस इति तिस्र आहुतयः। हविर्दानेन होमरूपेण कृत्वाप्यायनमित्यन्वयः॥ ना० ॥२११॥

---

स्मार्तस्य वैवाहिकस्य दायादेर्वा अग्नेरभावे विधिरयमुच्यते ॥ मे० ॥

अनग्निकस्यानुपनीतासमावृत्ताकृतदारस्नातभार्यादिर्मृताहादिश्राद्धविधानादौपासनाग्न्यभावे ब्राह्मणहस्त एतदाहुतित्रयं दद्याद्यस्माद्य एवाग्निः स एवाग्निः स एव ब्राह्मण इति वेदविद्भिर्ब्राह्मणैरुच्यते ॥ गो० ॥ २१२ ॥

---

पुरातना मुनय एवं वदन्ति द्वितीयान्तो वा पठितव्यः। पुरातनानेतान्देवान्साध्यदेवानस्मिन्कार्ये समृत्पन्नान्...॥ मे० ॥

अक्रोधनानक्रोधशून्यान स्वाराधनादीनग्नौ प्रास्तेति च न्यायेन लोकरक्षोपादानात् श्राद्धसंप्रदानभूतानेतान् ब्राह्मणान्मन्वादयो वदन्ति तस्माद्देवतुल्यत्वात्तद्धस्ते देयमिति पूर्वविध्यर्थवादः॥ गो० ॥ २१३ ॥

---

अग्नौ यत्कर्तव्यमग्नये स्वधा नम इत्याहुतिप्रक्षेपलक्षणं कार्यं तदपसव्यं दक्षिणेन हस्तेन कर्तव्यं न सव्येन...हस्तद्वयसंयोगेन कर्तव्यताशङ्कायामपसव्येनेत्युक्तमिति केचित्। इदं त्वयुक्तम्...॥ मे० ॥

अमौ यः पर्युक्षणपरिस्तरणाहुतिदानादीतिकर्तव्यताक्रमः तं सर्वमपसव्यं पितृकर्मवद्दक्षिणासंस्थं कृत्वा तदेतदुक्तसंस्थमपसव्येन दक्षिणेन हस्तेन पितृतीर्थेन पिण्डाधारभूतायां भुव्युदकं प्रक्षिपेत् ॥ गो० ॥

अपसव्यं प्राचीनवीतेन...आवृत्परिक्रमम् कर्मक्रमम् अपसव्येन पितृतीर्थेन...॥ ना० ॥ २१४ ॥

---

तस्मादग्न्यादिहोमार्थाहुतिं दत्त्वा हुतशिष्टान्त्रीन्पिण्डान्कृत्वा औदकेन विधिना दक्षिणहस्तेन पितृतीर्थेनानन्यचित्तो दक्षिणामुखस्तेषु दर्भेषु तं हस्तं निमृज्यादिति दर्शनाद् दर्भेषु दद्यादत एव चोदकमपि पूर्वोक्तपिण्डाधारभुवि दर्भेष्वेव दद्यात् ॥ गो० ॥ २१५ ॥

---

न्युप्य दत्त्वा विधिपूर्वकं स्वगृह्योक्तविधानेन लेपभागिनां पित्रादित्रयाणां तृप्तये दर्भमूलेषु करघर्षणमिति विष्णुवचनाद्धस्तं निमृज्यात् ॥ रा० ॥२१६ ॥

---

तदनूपस्पृश्योदङ्मुखो यथाशक्ति त्रीन्प्राणायामान्कृत्वा वसन्ताय नम इति षड्तून्नमस्कुर्यात्। पितॄनेव च पितॄंश्च नमो वः पितर इत्येवमादि मन्त्रयुक्तं कृत्वाभिपर्यावृत्येति गृह्यदर्शनाद्दक्षिणाभिमुखो भूत्वा नमस्कुर्यात् ॥ गो० ॥ २१७ ॥

---

पिण्डाधारदर्भदत्तोदकशेषमुदकं पिण्डसमीपे पुनरुत्तरयोत्सृजेत्। तांश्च पिण्डान्येनैव क्रमेण दत्तान्तेनैव क्रमेणानन्यमना जिघ्रेत् ॥ गो० ॥ २१८ ॥

---

पिण्डेभ्यो ऽत्यन्ताल्पभागं पितृपिण्डक्रमेण गृहीत्वा तानेव पित्राद्यर्थोपवेशितान्विप्रान्विधिवन्नयेच्चानुपूर्व्या भोजनकाले ऽन्यभोजनापूर्वाम्भोजयेत् ॥ गो० ॥ २१९ ॥

---

जीवति पितरि पितामहादीनामेव त्रयाणां श्राद्धं कुर्यान्न पितुः। अथवा पितृस्थाने तमेव स्वकं पितरं श्राद्धे भोजयेत्। पितामहप्रपितामहयोश्च ब्राह्मणौ भोजयेत्॥ गो०॥

विप्रवदिति। अत्र पक्षे पितृस्थाने पितृपितरमुपवेश्येतरयोरर्थे द्वौ विप्रावुपवेशयेत्। तयोरेव पितर्यपि सर्वमर्घ्यादि विदध्यादित्यर्थः॥ ना०॥ २२०॥

---

पितुर्नामसंकीर्तनेन तदीयावाहनपिण्डदानब्राह्मणभोजनानि लक्ष्यन्ते। कीर्तयेत्प्रपितामहं जीवते पितामहाय न दद्यात्। किं तर्हि ततः पूर्वाभ्याम्...॥ मे०॥

पितृजीवनपक्षापेक्षो वाशब्दः...॥ गो०॥ २२१॥

---

यथा जीवत्पिता भोज्यते तद्वत्पितामहोऽपि। अनुज्ञां पितामहात्प्रार्थ्य समाचरेत्। स्वयं च परतो द्वयोर्दद्यात् प्रपितामहाय एकस्मा एव वा एष कामं स्वयमित्यनयोरर्थः॥ मे०॥

पितामहविप्रस्थाने पितामहं वा भोजयेत्। पितृपितामहयोः पिण्डदानं ब्राह्मणभोजनं च कुर्यात्। अथवा पित्रा पितामहेन वा जीवता अहं न भुञ्जे यथेष्टमेवानुज्ञातः स्वयमेव यथारुचिः समाचरेत्।...॥ गो०॥ २२२॥

---

...एषामिति सर्वनाम्ना विशेषनामानि गृह्यन्ते।...॥ मे०॥

तेषां ब्राह्मणानां हस्तेषु सदर्भं तिलोदकं दत्त्वा पिण्डेभ्यः स्वल्पिकां मात्रामित्यनेन यन्निर्दिष्टं तत्पिण्डाग्रं पित्रे स्वधास्त्वित्येवमादि ब्रुवन्क्रमेण दद्यात्॥ गो०॥ २२३॥

---

अन्नपूर्णपात्रं स्वयं कराभ्यां गृहीत्वा पितॄन्स्मरन्विप्रसमीपे परिवेषणार्थं शनैः स्थापयेत्॥ गो०॥ २२४॥

---

द्वाभ्यां हस्ताभ्यामन्नमुपनेतव्यं परिवेष्टव्यं वा चैकेनेति ।...उभाभ्यां हस्ताभ्यां मुक्तं वर्जितमपरिगृहीतं यदन्नमुपनीयते...॥ मे० ॥

उभाभ्यां हस्ताभ्यामगृहीतं यदन्नं ब्राह्मणान्तिकमानीयते वा तदसुरा देवद्विषो दुष्टबुद्धय आच्छिन्दन्ति तस्मान्नैकेन करेण हस्तेनान्नमानेतुं परिवेष्टव्यम् ॥ गो० ॥ २२५ ॥

---

सूपादीनि व्यञ्जनानि क्षीरादीनि चोपसेचनानि प्राधान्यात्पृथक्पृथक् यथोपदिष्टानि प्रयतः शुचिः समाहितोऽनन्यमनाः सन्यथा न विशीर्यन्ते तथा भूमावेव नान्यत्र स्थापयेत् ॥ गो० ॥ २२६ ॥

---

भक्ष्यं खरविशदं मोदकादि भोज्यं पायसादिना यथाप्रकारं मूलं फलं च हृदयस्य प्रियाणि मांसानि पानकादीनि च सुरभीणि भवन्ति भूमावेव विन्यसेत् ॥ गो० ॥ २२७ ॥

---

सर्वमेतदन्नादि ब्राह्मणसमीप आनीय इदं मधुरमिदं श्लक्ष्णमित्येवं सर्वान्माधुर्यादीन् गुणान् कथयन् सुचिरमनन्यमनाः शनैर्यथोपयोगं न तु युगपदेव सर्वं परिवेषयेत् ॥ गो० ॥ २२८ ॥

---

रोदनक्रोधासत्यभाषणानि न कुर्यात् । पादेन चान्नं न स्पृशेत् । नाप्युत्क्षिप्योत्क्षिप्य संत्यजेत् । क्रोधादनृतं न वदेत्...॥ गो० ॥ २२९ ॥

---

अश्रु क्रियमाणं प्रेताख्यान्भूतविशेषाञ्छ्राद्धान्नादि प्रापयति क्रोधः शत्रून् अनृतं शुनः पादस्पर्शो रक्षांसि अवधूननं पापकारिणः तस्मादेतन्न कुर्यात्॥ गो० ॥ २३० ॥

---

...ब्रह्मोद्या ब्रह्मणि वेदे या उद्यन्ते कथ्यन्ते ता ब्रह्मोद्याः...अथवा कःस्विदेकाकी चरतीत्यादि । ब्रह्मोद्यं च कथा इति वा पाठः...॥ मे० ॥

यद्यदन्नं व्यञ्जनादि भवति तत्तदद्दुष्टः सन्दद्यात्। तथा परमात्मनिरूपणं पुण्यकथास्तोत्रं कुर्यात् यदेतत्पित्र्याणामभिप्रेतम् ॥ गो॰ ॥

...ब्रह्मोद्या आध्यात्मिकीः कथा दातैव कुर्यात् ॥ ना॰ ॥

...ब्रह्मोद्याः परमात्मनिरूपिकाः कथाः।...॥ रा॰ ॥ २३१ ॥

---

...मन्वादिग्रन्था धर्मशास्त्राणि। आख्यानानि सौपर्णमैत्रावरुणादीनि। बह्वृचैः पठ्यन्ते। इतिहासा महाभारतादयः। पुराणानि व्यासादिप्रणीतानि सृष्ट्यादिवर्णनरूपाणि। खिलानि श्रीसूक्तमहानाम्निकादीनि ॥ मे॰ ॥

वेदं मानवादिशास्त्राणि आख्यानानि सौपर्णमैत्रावरुणादीनि ऋग्वेदोदितानि भारतादीनि वाय्वादिप्रोक्तानि शिवसंकल्पादीनि श्राद्धे ब्राह्मणाञ्छ्रावयेत् ॥ गो॰ ॥ २३२ ॥

---

हृष्टो भूत्वा तैस्तैः प्रियवचनादिभिर्ब्राह्मणान्तोषयेत्। अन्नं चात्वरया भोजयेत्। पायसादिना घृतपूरादिभिरेतान् ब्राह्मणानिदं गृह्यतामित्येवं पुनः पुनः प्रबोधयेत् ॥ गो॰ ॥ २३३ ॥

---

...कुतपो ऽजलोमसूत्रैः कम्बलाकारः पटः। उदीच्येषु कम्बल इति प्रसिद्धः ...॥ मे॰ ॥

ब्रह्मचारिणमपि सदा दौहित्रं श्राद्धे यत्नेन भोजयेत् ॥ गो॰ ॥

व्रतस्थं ब्रह्मचारिणम्। एतेनानुकल्पमध्ये दौहित्रस्य श्रेष्ठतोक्ता। अर्थोत्यचौ। तेन गृहस्थसंभवे ब्रह्मचारिणामुख्यता दर्शिता॥ ना॰॥ २३४॥

---

दौहित्रादीनि त्रीणि श्राद्धे पवित्राणि। त्राणि चैव वस्तूनि शौचाक्रोध विस्रम्भाख्यानि श्राद्धे ऽतिशयेनेच्छन्ति ॥ गो॰ ॥ २३५ ॥

उष्णमन्नं द्विजाग्रेभ्यः श्रद्धया विनिवेदयेत् ।

अन्यत्र फलमूलेभ्यः पानकाद्भ्य एव च ॥

इति शङ्खस्मरणात् । फलादिव्यतिरेकेण सर्वमुष्णं दद्यात् । संयतवाचश्च ब्राह्मणा अश्नीयुः । दात्रा च स्वादुस्वादु वेत्येवमन्नगुणान् पृष्टा न कथयेयुः ...॥ गो० ॥ २३६ ॥

---

यावदन्ने औष्ण्यं भवति यावच्च मौनेनाश्नन्ति हविर्गुणांश्च नाभिदधति तावत्पितरस्तदन्नं ब्राह्मणमुखेन भुञ्जते ॥ गो० ॥ २३७ ॥

---

उपानहौ चर्ममयं पादत्राणमित्यादि। अन्ये तु चर्मपादुके उपानहाविति व्याचक्षते...॥ मे० ॥

उष्णीषादिना वेष्टितशिरा यदन्नं ब्राह्मणो भुङ्क्ते तथा दक्षिणामुखः सोपानत्कपादश्च तदन्नं रक्षांस्यश्नन्ति। न पितरः। तस्मादेतत्परिहरणीयम् ॥ गो० ॥ २३८ ॥

---

चण्डालवराहग्रामसूकरकुक्कुरश्वोदक्यानपुंसकानि द्विजभोजनकाले ततोऽपसारयेत् । यस्मात् ॥ गो० ॥ २३९ ॥

---

होमे अग्निहोत्रादौ शान्त्यादिहोमे वा...॥ मे० ॥

अग्निहोत्रादिहोमे दाने धर्मार्थब्राह्मणभोजने हव्यकव्ययोश्च यत्कर्म चण्डालादिभिरवेक्ष्यते यस्यार्थं तदर्थं क्रियते तन्न साधयति ॥ गो० ॥ २४० ॥

---

घ्राणेन तदन्नगन्धोपलब्ध्या । पक्षवातेन तद्देशगतेन। दृष्टिनिपातेन कर्तुर्द्विजानां वा श्वनि । स्पर्शेनापक्वानामपि श्राद्धद्रव्याणाम् । अवरवर्णजः शूद्रः ॥ ना० ॥ २४१ ॥

---

खञ्जः पादविकलः। काणः एकेक्षणविकलः। दातुर्वा दासः शूद्रस्यैव प्रेष्यत्वात्। अपिशब्दादन्योऽपि शूद्रो यो वा कुनखिशवाण्डकादिस्तमपि ततः प्रदेशादपोत्सारयेत्॥ गो०॥ २४२॥

---

अतिथित्वेनागतं ब्राह्मणं भिक्षुकं भिक्षार्थिनमब्राह्मणमपि भोजनप्रवृत्तैर्ब्राह्मणैरनुज्ञातः शक्त्या पूजयेत्।...॥ मे०॥

ब्राह्मणमतिथिरूपमन्यं वा भिक्षुकं भोजनार्थं तत्कालमागतं श्राद्धब्राह्मणैरनुज्ञातो यथाशक्त्या अन्नदानेन पूजयेत्॥ गो०॥

ब्राह्मणं गृहिणम्। भिक्षुकं यतिं व्रतिनं वा...॥ ना०॥

...भिक्षुकं संन्यासिनम्...॥ रा०॥ २४३॥

---

सर्वप्रकारमन्नाद्यमेकीकृत्य उदकेन प्लावयित्वा भुक्तवतां ब्राह्मणानामग्रे विक्षिपन्भूमौ दर्भेषु विकिरश्च य इति वक्ष्यमाणलिङ्गाद्दर्भेषु समुत्सृजेत्॥ गो०॥ २४४॥

---

त्यागिनां गुर्वादीनाम्। अथवा कुलयोषितां कुलस्त्रीणामदृष्टदोषाणां भार्याणां त्यक्तारः स्वतन्त्राः। अन्ये तु कुलयोषितामित्यस्मिन्ननूढाः कन्या कुलयोषित इति व्याचक्षते ..॥ मे०॥

नास्य कार्योऽग्निसंस्कार इत्यादिना निषिद्धाग्निकारिणां मृतानां कुलस्त्रीणां च कुलं त्यक्त्वा गतानां पात्रस्थमुच्छिष्टं दर्भेषु यो विकिरः स भागः स्यात्कुलयोषितामिति विशेषाभिधानं संस्कृतं भैक्षमितिवत्॥ गो०॥

त्यागिनां प्राणत्यागिनामविधिना कुलयोषितामपत्यादिशून्यानाम्...॥ना०॥

असंस्कृतप्रमीतानां मृतत्वेन संस्काररहितानामत्रिवर्षाणाम्। निरपराधं गुर्वादित्यागिनाम् ... कुलयोषितामनूढकन्यकानां कुलटानामिति गोविन्दः ...॥ रा०॥ २४५॥

---

भूमिपतितं यदुच्छिष्टं तदकुटिलस्यानलसस्य दासस्य भागधेयं भाग मन्वादयः प्राहुः ॥ गो० ॥ २४६ ॥

---

अचिरमृतस्य द्विजातेरेकादशाहादावसपिण्डक्रियाधिष्ठानं कर्तव्यम् । नामावास्यावत्पूर्वाभ्या सह पिण्डदानं कर्तव्यम् । किं तर्हि वैश्वदेवब्राह्मण-भोजनरहितं श्राद्धार्थमन्नं ब्राह्मणं च भोजयेदेकं पिण्डं तस्मा एव दद्यात् । तस्माद्यावद्ब्राह्मणं भोजयेत् । साधितं चैतत्सविस्तरं स्मृतिमञ्जर्यांमृजुप-ञ्जिकायां च इह तु ग्रन्थभारभयान्न प्रतार्यते ॥ गो० ॥ २४७ ॥

---

...असपिण्डक्रियायामेष विधिः सहपिण्डक्रियायां पुनः कृतायामय-मिति । तस्मादमावास्येतिकर्तव्यतानिर्देश एव न्याय्यः । इति सपिण्डी-करणं सांवत्सरिके ऽपि स्मृतिमञ्जर्यामृजुपञ्जिकायां विस्तरतो निरूप्यते ॥ गो० ॥ २४८ ॥

---

श्राद्धभोजनोच्छिष्टं यः शूद्राय ददाति स मूर्खः कालसूत्राख्यनरकमध्ये ऽधोमुखो व्रजति...॥ गो० ॥ २४९ ॥

---

वृषली स्त्रीमात्रोपलक्षणार्थमेतदित्याहुः निरुक्तं कुर्वन्ति वृषस्यन्ती चल-यति भर्तारमिति वृषली । सा च ब्राह्मणी अन्या वा सर्वा निषिध्यते...॥ मे० ॥

...वृषली च व्याख्याता । श्राद्धं भुक्त्वा तदहोरात्रं यः स्त्रीसंप्रयोगं भजते तस्य तद्विष्ठायां मासं पितरो ऽवतिष्ठन्ते...॥ गो० ॥

वृषलीतल्पं शूद्रयाधिष्ठितां शय्यां तदहस्तदहोरात्रे ॥ ना० ॥

वृषलीमतिपदं स्त्रीमात्रपरम्...॥ रा० ॥ २५० ॥

---

ब्राह्मणान् तृप्तान् बुद्धा स्वदितमित्येवं पृष्ट्वा तत उपस्पर्शयेत्। कृताचमनाश्च इह वा स्वगृहे वास्यतामित्येवमनुज्ञातव्याः ॥ गो० ॥ २५१ ॥

---

अनुज्ञानन्तरं दातारं स्वधेत्येवं ब्राह्मणा ब्रूयुर्यस्मात्सर्वेषु कृतान्नाकृतान्न-श्राद्धोदकतर्पणादिषु पितृकर्मसु स्वधाशब्दोच्चरणं प्रकृष्टा आशीः ॥ गो० ॥ २५२ ॥

---

भुक्तमन्नं निवेदयितव्यं प्रष्टव्यास्ते इदमस्तीति यथा ब्रूयुस्तथा कुर्यादनुज्ञातः अननुज्ञातेन नान्यत्र विनियोक्तव्यम् ॥ मे० ॥ २५३ ॥

---

अन्येनापि तत्कालोचितोपस्थितेनैवमेभिः शब्दैर्मोदयितव्यः । ...गोष्ठे गोषु तिष्ठन्तीषु एकत्रदेशे सुश्रितमिति वाच्यम्। अस्त्विति सर्वत्र प्रतीयते । दैवे रुचितं रोचितमिति वा ॥ मे० ॥

अन्येनापि श्राद्धकालोपस्थितेन स्वदितमित्येवं गोगणमध्ये च श्रुतमिति (सुश्रु०) संपन्नमिति विवाहादौ देवतार्थं रोचितमिति ॥ गो० ॥

...स्वदत इति क्वचित्पाठस्तत्रागुक्तेन स्वदितमित्यनेन विकल्पितं ज्ञेयम्। गोष्ठे गोमण्डलार्थं गोष्ठे ब्राह्मणभोजने। तृप्तेषु विप्रेषु सुश्रुतमिति वाच्यम्। ...सुश्रितमिति क्वचित्पाठः...॥ ना० ॥

...गोष्ठे विश्वामित्रपठितगणकृतश्राद्धे गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते...॥ रा० ॥ २५४ ॥

---

...अविशेषाभिधाने ऽप्यपराह्णो न सर्वश्राद्धेषु...॥ मे० ॥

अपराह्णो विष्टरार्थं दर्भा वास्तुसंपादनं सुधागोमयादिना गृहसंशोधनं तिलास्वान्तर्भूविकिरणाद्यर्थाः सृष्टिरकार्पण्येनान्नविसर्गः मृष्टिरन्नसंस्कारः अग्र्या ब्राह्मणा इत्येताः श्राद्धे संपद इत्यङ्गान्तरेभ्य एषा प्रशस्यत्वज्ञापनार्थमेतत् ॥ गो० ॥ २५५ ॥

---

विष्टराद्यर्थं दर्भाः पवित्रं दार्भं प्राधान्यात्पृथगुपदिष्टं पूर्वाह्णकालो हवींषि मुन्यन्नादीनि सर्वाणि यच्च वास्तुसंपादनादि पावनं पूर्वमुक्तमेतावदेव कर्मणः सिद्धयः ॥ गो० ॥ २५६ ॥

---

आरण्यान्नं क्षीरं सोमो मांसं चानतितीक्ष्णं बिडलवणादिवर्जितं लवणं सैन्धवं स्वभावत एवैतद्धविरिति मन्वादिभिरुच्यते ॥ गो० ॥

...अनुपस्कृतं मरिचादिना स्वादान्तरमप्रापितम् । अक्षारलवणं बिडादेः क्षारादन्यल्लवणं सामुद्रं सैन्धवं वा । प्रकृत्या स्वभावेन स्थितम् ॥ ना० ॥ २५७ ॥

---

तान्ब्राह्मणान्विसृज्यानन्यमनाः शुचिः सन्दक्षिणां दिशमीक्षमाण इमान्वक्ष्यमाणानभिलषितार्थान्पितॄन्प्रार्थयेत् ॥ गो० ॥ २५८ ॥

---

अस्मत्कुले बहवो दानशीला भवन्तु वेदास्वाध्ययनाध्यापनावबोधेन्याख्येयेषा वर्धन्तां संततिः पुत्रादि वर्धन्तां हव्यकव्यविषया च श्रद्धास्माकं मा व्यपगमत् बहु देयं च नोऽस्त्विति दानार्थं च धनं बह्वस्माकं भवताम् ॥ गो० ॥ २५९ ॥

---

तदनन्तरं वरयाचनानन्तरं पिण्डान्पितृभ्यो निरूप्तान् गवादीन्प्राशयेत् । अग्नौ प्रक्षेप एव प्राशनम् । प्रापयेदिति पाठान्तरम् ॥मे० ॥ २६० ॥

---

ब्राह्मणभोजनात्पुरस्तात्केचित्कुर्वन्ति । वयोभिः खादयन्त्यन्ये । क्रेयं पूर्वस्मात्प्रतिपत्तिः अनलो ऽग्निः पवनः । पूर्वोक्तमेवानुदितम् । उच्छिष्टसंनिधौ चैतत्पुरस्तात्पिण्डदानमिष्यते ॥ मे० ॥

पिण्डदानं केचिदाचार्या ब्राह्मणभोजनादर्वाक्कुर्वते...॥ गो० ॥

...ये पुरस्ताद्ब्राह्मणभोजनात्कुर्वते ते वयोभिरित्यादिप्रतिपत्तित्रयस्यान्य-तरत्कुर्वन्ति ॥ ना० ॥

...परस्ताद्विप्रभोजनानन्तरम् । ...मेधातिथिस्तु पुरस्तादिति पठित्वा व्याख्याति ब्राह्मणभोजनात्पुरस्तात् कृते ब्राह्मणभोजने... ॥ रा० ॥ २६१ ॥

---

मनोवाक्कायकर्मभिर्धर्मार्थकामेषु पतिरेव मया चरणीय इति व्रतं यस्याः सा पतिव्रता ताम्। धर्मपत्नी प्रथमोढा सवर्णा श्रद्धावती पुत्रार्थिनी तेषां पिण्डानां मध्यमं पिण्डं सम्यगाधत्त पितरो गर्भमित्यादि सूत्रकारोक्त-मन्त्रेणाद्यात् ॥ गो० ॥ २६२ ॥

---

धर्मानुष्ठानरतं द्वादशाध्यायवक्ष्यमाणसत्त्वाख्यगुणयुक्तं चिरायुषं ख्याति-मन्तमतीतार्थस्मरणयुक्तं हिरण्यादिधनयुक्तं संततिवन्तमेवंविधगुणयुक्तं पुत्रं जनयति ॥ गो० ॥ २६३ ॥

---

पिण्डेषु प्रतिपादितेषु हस्तौ प्रक्षालयेत् । तत आचमनविधिं कुर्यात् । आचमनाद्धस्तप्रक्षालनादधिकमिदं कुर्यात् । ज्ञातिभ्यो दद्यात् । तेभ्यः सत्कृतं दत्त्वा बान्धवेभ्योऽपि दद्यात् । ज्ञातीन्प्रति गच्छति प्राप्नोतीति ज्ञातिप्रायं कुर्यात्... ॥ मे० ॥ २६४ ॥

---

...ततो गृहबलिं निष्पन्ने श्राद्धकर्मणि । अनन्तरं वैश्वदेवहोमादान्ना-ह्निकातिथ्यादिभोजनं कर्तव्यम्... ॥ मे० ॥

तद्ब्राह्मणोच्छिष्टं तावन्न मार्ष्टव्यं यावद्ब्राह्मणा न निर्गताः। संपन्ने च श्राद्धे वैश्वदेवाद्यान्वाह्निकं समग्रं कुर्यात्... ॥ गो० ॥ २६५ ॥

---

यत्पितृभ्यो यथावद्दत्तं हव्यकव्यमन्नं दीर्घकालतृप्तये सम्यक् प्रतिपद्यते । यच्चानन्त्यं तत्तृप्तये तन्निःशेषेण प्रवक्ष्यामि ॥ गो० ॥ २६६ ॥

---

तिलधान्ययवमाषोदकमूलफलानां श्राद्धेन दत्तेन मनुष्याणां मासं पितरस्तृप्यन्ति । द्वौ पाठीनादिमत्स्यमांसेन त्रीन्मार्गेण मासेन चतुरो मेषसंबन्धिना पञ्च भक्ष्यपक्ष्युद्भवेन षडाजेन सप्त चित्रमृगसंबन्धिना अष्टौ सारंगमांसेन नव शम्बराख्यमृगजेन ॥ गो० ॥ २६७ ॥ २६८ ॥ २६९ ॥

---

दश मासानारण्यसूकरमहिषमांसैस्तृप्यन्ति । एकादश शशकच्छपमांसेन ॥ गो० ॥ २७० ॥

---

वार्ध्रीणसो जरच्छागः। एवं हि निगमेषु पठ्यते। त्रिःपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धप्रजापतिम् । वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि ॥... ॥ मे० ॥

संवत्सरं पुनर्गव्येन क्षीरेण वार्ध्रीणसस्य च । त्रिःपिबं...। इत्येवं निगमे पठितस्य मांसेन द्वादशवार्षिकी तृप्तिर्भवति । पिबतः कर्णाजिह्वे यस्य जलं स्पृशति स त्रिःपिब इव त्रिःपिबः ॥ गो० ॥

वार्ध्रीणसो निगम उक्तः। कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ॥ ना० ॥ २७१ ॥

---

कालशाकं विशिष्टशाकं प्रसिद्धम् । कृष्णवास्तुकभेदा यथा महाशल्का उच्यन्ते । अन्ये तु मत्स्यान्सशल्कानाहुः ... ॥ मे० ॥

कालशाकाख्यं शाकं महाशल्काख्यो मत्स्यभेदः शकलीचितचित्रम इत्याद्यायुर्वेदप्रसिद्धः ... ॥ गो० ॥

महाशल्का महाशल्किनो मत्स्या इति यमवचनाज्ज्ञेया इति केचित्। शल्यका इति मेधातिथिः ... ॥ रा० ॥ २७२ ॥

---

यत्किंचिदप्रतिषिद्धं मधुसंयुक्तं वर्षाकाले मघाचयोदश्यां हस्तसंधिनी च्छाया यस्मिन्प्रदेशे प्राचीं दिशं गता तत्र तस्यां छायायां मधुयुक्तं पायसं दद्यादिति ॥ गो० ॥ २७३ ॥

---

...प्राक्छाये प्राच्यां दिशि गतायां छायायामपराह्णेतरे काल इत्यर्थः... ॥ मे० ॥

सोऽस्माकं कुले जायाद्यो नो दद्यादिति। ... प्राक्छाये कुञ्जरस्येति विध्यन्तरं प्रागिति निर्देशात्। कुञ्जरस्यैव च्छाया विवक्षिता... अपराह्णे तस्य प्राच्यां छाया स्यात् ॥ रा० ॥ २७४ ॥

---

यद्यदप्रतिषिद्धं सम्यगुपश्रद्धायुक्तो यथाशास्त्रं दद्यादिति तच्च सर्वकाल-मनपचयं परलोके पितॄणां भवति... ॥ गो० ॥ २७५ ॥

---

कृष्णपक्षे दशमीप्रभृतिचतुर्दशीं वर्जयित्वा तिथयः श्राद्धे प्रशस्ता यथा महाफला पविचाः प्रशस्ता न तथेतरा इति ॥ गो० ॥ २७६ ॥

---

युग्मासु तिथिषु द्वितीयाचतुर्थ्यादिषु युग्मेषु नक्षत्रेषु भरणीरोहिण्या-दिषु श्राद्धं कुर्वन्सर्वानभिलषितान्कामानवाप्नोति। अयुग्मासु तिथिषु प्रतिपत्तृतीयाद्यासु अयुग्मेषु नक्षत्रेषु अश्विनीकृत्तिकादिषु श्राद्धेषु पितृ-न्पूजयन्क्रुतधनादिपरिपुष्टां संततिं प्राप्नोति ॥ गो० ॥ २७७ ॥

---

चैत्रसिताद्या मासा इति ज्योतिःशास्त्रदर्शनेनापरपक्षः शुक्लपक्षाच्छ्राद्धे विशिष्टफलो भवति। एवं श्राद्धसंबन्धिपूर्वाह्णभागादपराह्णभागो विशिष्ट-फलो भवति...॥ गो० ॥ २७८ ॥

---

आ निधनादा मरणाद्यावज्जीविको ऽयं विधिरित्यर्थः।...॥ मे० ॥

सर्वथा प्राचीनावीतीत्युक्तप्राचीनावीतयुक्तेनानलसेन दर्भपवित्रहस्तेनाप-सव्यपितृतीर्थेन यथाशास्त्रं सम्यक् पित्र्यं कर्म यावज्जीव कार्यम् ॥ गो० ॥

अपसव्यमप्रादक्षिण्येन...आ निधनादा समाप्तेः...॥ ना० ॥

...आ निधनादा समाप्तेर्विधिवद्यथाशास्त्रम् ॥ रा० ॥ २७९ ॥

---

रात्रौ श्राद्धं न कुर्वीत श्राद्धस्य ध्वंसनसामान्याद्राक्षसी चासौ मन्वा-दिभिः कथिता। तथा संध्ययोरादित्ये ऽचिरोदित इति रात्र्यादौ निषेध कुर्वन्नपराह्णादन्यत्रापि तिथिच्छेदग्रहणाद्यपेक्षया श्राद्धमस्तीति ज्ञापयति मासानुमासिकश्राद्धाद्यसंभवेन ॥ गो० ॥ २८० ॥

---

अनेनोक्तविधानेन संवत्सरस्य मध्ये त्रीन्वारान्हेमन्तग्रीष्मवर्षासु श्राद्धं कुर्वीत। पञ्चयज्ञमहायज्ञमयभवं पुनः प्रत्यहं कुर्वीत ॥ गो० ॥ २८१ ॥

---

अग्नेः सोमयमाभ्यामित्येवं पितृयज्ञाङ्गभूतो होमो लौकिके श्रौतस्मार्त-व्यतिरिक्ते ऽग्नौ शास्त्रेण न चोद्यते। आहिताग्नेस्तु...विना कृष्णपक्षदश-म्यादौ श्राद्धं न विधीयते...॥ गो० ॥ २८२ ॥

---

पाञ्चयाज्ञिकं यच्छ्राद्धमहरहरित्युक्तं तस्य वैकल्पिकत्वमनेनोच्यते...॥मे०॥

स्नात्वोदकतर्पणं यत्पितृणां ब्राह्मणः करोति तेनैव सर्वं पितृयज्ञानुष्ठान-

फलं प्राप्नोति । द्विजोत्तमग्रहणं प्रदर्शनार्थं त्रयाणां प्रकृतत्वात् ॥ गो० ॥ २८३ ॥

---

य एते पितृपितामहप्रपितामहास्तान्वसुरुद्रादित्याख्यान्देवानिति मन्वादयो वदन्ति । यस्मात्पित्रादयो वस्वादय इत्येषानादिभूता श्रुतिः...॥ गो० ॥ २८४ ॥

---

...भृत्यशेषं भृत्यभुक्तशिष्टमिति द्रष्टव्यम् । भुक्तशेषमिति पाठसामर्थ्यादतिथ्यादिभुक्तमिति द्रष्टव्यम् .. ॥ मे० ॥

सर्वदा विघसभोजनः स्यादित्येतच्छेषभुक्तुल्यत्वापादनेन स्तुत्यर्थमस्य पुनर्वचनम् । सर्वदा चामृतभोजनः स्यादप्रसिद्धत्वाद्विघसामृते निरूपयति अतिथ्यादिभुक्तशेषं विघसमुच्यते । यज्ञावशिष्टं पुरोडाशाद्यमृतमिति ॥ ॥ गो० ॥

भुक्तशेषमतिथ्यादिभुक्तशेषम्...॥ ना० ॥ २८५ ॥

---

एतत्पञ्चयज्ञभवमनुष्ठानं सर्वं युष्माकमुक्तमिति । पितृकर्मणो ऽनन्तरं व्यवहितकरणोपसंहारो मङ्गलार्थत्वादिदानीं ब्राह्मणसंबन्धिनीनामृतादीनां जीविकानामनुष्ठानं श्रूयतामिति ॥ २८६ ॥

---

मान्या कापि मनुस्मृतिस्तदुचिता व्याख्या हि मेधातिथेः
सा लुप्तैव विधेर्वशात् क्वचिदपि प्राप्यं न यत्पुस्तकम् ।
क्षोणीन्द्रो मदनः सहारणसुतो देशान्तरादाहृते-
र्जीर्णोद्धारमचीकरत्तत इतस्तत्पुस्तकैर्लेखितैः ॥

इति भट्टवीरस्वामिसूनोर्भट्टमेधातिथिस्वामिनः कृतौ मनुभाष्ये तृतीयो ऽध्यायः समाप्तः ॥

इति श्रीभट्टमाधवात्मजगोविन्दराजविरचितायां मनुटीकायां मन्वनुसारिण्यां श्राद्धविधिनाम तृतीयो ऽध्यायः ॥

श्रीनारायणसर्वज्ञवृत्तिसंदर्शितान्वयाः । मनुस्मृतिगिरांचार्थमधिगच्छन्तु सूरयः ॥ इति सर्वज्ञश्रीनारायणकृतौ मन्वर्थविवृतौ विवाहश्राद्धाधिकारो नाम तृतीयो ऽध्यायः ॥

इति श्रीराघवानन्दविरचितायां मन्वर्थचन्द्रिकायां तृतीयो ऽध्यायः ॥

इति श्रीवीरमल्लप्रियसखेन श्रीनन्दनाचार्येण विरचिते मनुव्याख्याने तृतीयो ऽध्यायः ॥ ० ॥

समाप्तश्चायं श्रीमनुटीकासंग्रहः ॥

---